# शाब्दबोधविमर्शः

[ भारतीय शासनान्तर्गत-शिक्षा-मन्त्रणालय-द्वारा प्रदत्तेनार्थिक-साहाय्येन मुद्रिता प्रकाशिता च । ]



लेखकः

**डॉ० बदरीनाथ सिंह**

एम. ए., पी-एच. डी., दर्शनाचार्यः, वाचस्पति ( डी. लिट. )

दर्शनविभागः, काशी-हिन्दू-विश्वविद्यालयस्थः

वाराणसी ( उ० प्र० )

'श्रीहरिः शरणम्'

# प्रास्ताविकं किञ्चित्

वागेवार्थं पश्यति वाग्ब्रवीति वागेवार्थं निहितं सन्तनोति ।
वाच्येव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रविभज्योपभुंक्ते ॥
शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धनी ।
यन्नेत्रः प्रतिभात्माऽयं भेदरूपः प्रतीयते ॥

आस्तिकानां सर्वस्वमेव शब्दाख्यं प्रमाणम्, अन्यथा वेदानामपि प्रामाण्यं नावतिष्ठेत । ततश्च अतीन्द्रियाणां धर्माधर्मादीनाम-निर्णये आस्तिकस्य जगतः स्वरूपमेव विलीयेत । प्रत्यक्षादिभिस्तु धर्मादीनां निर्णयोऽशक्य एव, अपि तु वेदैरेव ।

उक्तं च—प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते ।
एवं विदन्ति वेदेन तस्माद् वेदस्य वेदता ॥ इति ॥

आस्तिकशिरोमणिना भगवता श्रीपतञ्जलिनाऽपि महाभाष्ये पस्पशाह्निके उक्तम्—शब्द प्रमाणका वयं यच्छब्द आह—तदस्माकं प्रमाणम्, इति । किं च लौकिकोऽपि सर्वविधो व्यवहारः प्रायः शब्दाधीन एव । अन्यथा का वाराणसी ? कः प्रयागः ? का च गङ्गा ? इत्यादिकं कथं ज्ञायेत ? उक्तं च श्रीभर्तृहरिणाऽपि वाक्यपदीये—

इतिकर्तव्यता लोके सर्वा शब्दव्यपाश्रया ।
यां पूर्वाहितसंस्कारो बालोऽपि प्रतिपद्यते ॥

'श्रीहरिः शरणम्'

# प्रास्ताविकं किञ्चित्

वागेवार्थं पश्यति वाग्ब्रवीति वागेवार्थं निहितं सन्तनोति ।
वाच्येव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रविभज्योपभुंक्ते ॥
शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धनी ।
यन्नेत्रः प्रतिभात्माऽयं भेदरूपः प्रतीयते ॥

आस्तिकानां सर्वस्वमेव शब्दाख्यं प्रमाणम्, अन्यथा वेदानामपि प्रामाण्यं नावतिष्ठेत । ततश्च अतीन्द्रियाणां धर्माधर्मादीनाम-निर्णये आस्तिकस्य जगतः स्वरूपमेव विलीयेत । प्रत्यक्षादिभिस्तु धर्मादीनां निर्णयोऽशक्य एव, अपि तु वेदैरेव ।

उक्तं च—प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते ।
एवं विदन्ति वेदेन तस्माद् वेदस्य वेदता ॥ इति ॥

आस्तिकशिरोमणिना भगवता श्रीपतञ्जलिनाऽपि महाभाष्ये पस्पशाह्निके उक्तम्—शब्द प्रमाणका वयं यच्छब्द आह—तदस्माकं प्रमाणम्, इति । किं च लौकिकोऽपि सर्वविधो व्यवहारः प्रायः शब्दाधीन एव । अन्यथा का वाराणसी ? कः प्रयागः ? का च गङ्गा ? इत्यादिकं कथं ज्ञायेत ? उक्तं च श्रीभर्तृहरिणाऽपि वाक्यपदीये—

इतिकर्तव्यता लोके सर्वा शब्दव्यपाश्रया ।
यां पूर्वाहितसंस्कारो बालोऽपि प्रतिपाद्यते ॥

किंच—सर्वेषु ज्ञानेषु अर्थेषु च शब्दतत्त्वमनुस्यूतमस्ति, इदं चास्य शब्दतत्त्वस्य ब्रह्मरूपतां प्रकाशयत् परमं महिमानमभिव्यनक्ति। तथाहि—शब्दस्य द्वे रूपे नित्यत्वमनित्यत्वं च। चत्वारि शृङ्गा इति मन्त्रे द्वे शीर्षे इत्यनेनेदमेव रूपद्वयमुक्तम्। तत्र शब्दानित्यत्ववादः आस्तिकनास्तिकोभयविधदर्शनसम्मतः। अस्मिन् वादे श्रूयमाणा ध्वनय एव शब्दाः, ते च प्रत्यक्षत एवानित्याः। व्याकरणदर्शने तु सिद्धान्तदृष्ट्या शब्दनित्यत्ववादः, प्रक्रियाकल्पदृष्ट्या अनित्यत्ववादोऽपि स्वीकृतः। अस्मिन् दर्शने श्रूयमाणा ध्वनयो न शब्दतयाऽभ्युपेयाः।

घटशब्दे शक्त्याश्रयत्वानुपपत्तेः। यतो हि घटशब्दे प्रत्येकं घकारादौ यदि घटरूपार्थनिरूपिता शक्तिः स्यात्तर्हि चतुर्धा अर्थबोधः प्रसज्येत, घटशब्दे घकारादि वर्णचतुष्टयसत्त्वात्।

घट इति समुदाये तदर्थनिरूपितैकैवशक्तिः स्वीक्रियते, इत्यपि न, वर्णानामुच्चरितप्रध्वंसित्वेन समुदायस्यैव अभावात्। 'येनैव यत्नेन एको वर्ण उच्चार्यते, तेनैव विच्छिन्ने तस्मिन् तं यत्नमुपसंहृत्यान्येन यत्नेन वर्णान्तरमुच्चार्यते, इति परः सन्निकर्षः' इति सूत्रीयमहाभाष्यसिद्धान्ते न वर्णानामुच्चरितप्रध्वंसित्ववादः स्वीकृतोऽस्ति। एवं च घकारादिध्वनिव्यङ्ग्यः शब्दः स्वीकरणीयः। अयं च लाघवान्नित्य एको विभुश्च। वस्तुतोऽन्तःकरणावच्छिन्नश्चिदात्मा एवायम्। चिद्रूपविशेष्यांशदृष्ट्या शब्दस्य नित्यत्वे विभुत्वे न किंचिद्बाधकम्। इयं विशुद्धचितिरूपैव परावागित्युच्यते। उक्तं च 'स्वरूपज्योतिरेवान्तःपरावागनपायिनी, इति। अस्या एव वाचो विवर्तः 'पश्यन्ती' वाक्, तस्याश्च परिणामो

'मध्यमा' वाक्, तस्याश्च वैखरीवाणीति वाक्चतुष्टयी व्याकरणा-दर्शने कीर्त्यमानाऽस्ति। तत्र मध्यमावैखर्य्यौ एव लोकव्यवहारे उपयुज्येते। इमे एव स्थूलशब्दत्वे न परापश्यन्त्यौ च सूक्ष्मशब्दत्वेन संकीर्त्यंते।

अस्यैव सूक्ष्मशब्दस्यानुवेधो ज्ञानमात्रेऽर्थमात्रे च, स्थूलशब्दस्य तु योग्ये एव तस्मिन्निति विवेकः। उक्तं च वाक्यपदीये ब्रह्म-काण्डे—'न सोऽस्ति प्रत्ययो लोके यः शब्दाऽनुगमादृते। अनुविद्ध-मिवज्ञानं सर्वं शब्देन भासते। इति।

अर्थस्तुस्फुट एव, उत्तरार्धं तु प्रमाणतया दर्शितम्। तथाहि—अनुव्यवसायस्य साक्षिरूपज्ञानस्य वा शब्दविषयकत्वं नियतम्। अयं घट इति ज्ञानस्येमं घटं जानामि इत्येवानुव्यवसायो न तु 'इमं कुम्भं जानामि', इति पर्यायशब्दान्तरेणाऽपि इति। एवमेव पशुपक्ष्यादिसमवेतज्ञानेष्वपि शब्दानुवेधो नियतः। स च शब्दस्तत्तद् भाषीयः स्यात्, सूक्ष्मो वा भवेदित्यन्यत्।

किं बहुना—वृक्षाणामपि ज्ञाने शब्दानुवेधः स्फुटमुल्लिखितः श्रीमद्भागवतपुराणे—

यं प्रव्रजन्तमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहाव। पुत्रेति तन्मयतया तरवोऽभिनेदुस्तं सर्वभूतहृदयं मुनि-मानतोऽस्मि इति।

भग्नक्षतसंरोहणादिना वृक्षेष्वपि प्राणवायुसम्बन्धः, अतः सुखदुःखानुभवश्च तेषां भवत्येव।

किंच श्रीमद्भागवते दशमस्कन्धे यमलार्जुनकथाऽपि एतत्प्रसंगे स्मरणीया।

पुनश्च ज्ञानस्य शब्दानुवेधं द्रढयति श्रीभर्तृहरिः—

वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।
न प्रकाशः प्रकाशेत साहि प्रत्यवमर्शिनी ॥

वा० प०–१।१२४।

अयमाशयः—ज्ञानस्य वाग्रूपता सूक्ष्मशब्दतत्त्वोपरक्तता उत्क्रामेत् चेत्, तर्हि प्रकाशः ज्ञानं न प्रकाशते, प्रकाशकाभावात्। हि—यतः सा प्रत्यवमर्शिनी ज्ञानस्याभिज्ञापिका। शब्देनैव ज्ञानमभिलप्यते, नान्येनोपायेन। अनुभूयतेऽपि चैतत्—यथा सौषुप्तज्ञाने शब्दानुवेधाभावे तत्समानविषये तज्जन्यसंस्कारे, तत्समानविषये स्मरणे वा शब्दानुवेधाभावे 'सुखमहमस्वाप्सम्, नाहं किंचितवेदिषम्, इति स्मरणस्याभिलापो नोपपद्येत। अतस्तत्र शब्दभावनाऽनुवर्तते इति स्वीकरणीयम्।

एवमेव बाह्येष्वर्थेषु यदिदं निर्विकल्पकशब्दव्यपदेश्यं प्रथमं प्रत्यक्षम्, तत्राऽपि सूक्ष्मं शब्दतत्त्वमनुवर्तते एव। किं वा इदं तदिति सर्वनामपदव्यपदेश्यतया तदनुवेधो मन्तव्य एव। किं वा विशेषवाचकघटादिशब्दानुवेधोऽपि कथं न स्वीकार्यः ?। द्वितीये सविकल्पकग्रहणे तस्य सत्त्वेन प्रथमेऽस्मिन् ग्रहणेऽपि तत्सत्त्वस्यावश्यकत्वात्।

यथा केनचित् पुरुषेण कश्चन श्लोकः प्रथमं श्रुतः, तत्र यदा 'कोऽप्यसौ श्लोको मया श्रवणमात्रेण प्रथमं गृहीतः,' इत्येव स्मरणाभिलापस्तस्य, तदा तेनाभिलापे न ज्ञायते—यदस्ति श्लोकस्य प्रथमग्रहणेऽव्यक्तः सूक्ष्मशब्दानुवेध इति। एवं रीत्या

प्रथमे हि विद्वांसो वैयाकरणाः शब्दस्य वास्तवं स्वरूपं विमृश्य तस्य ब्रह्मरूपतां जगतः समक्षमानीतवन्तः उक्तं च श्री हरिणा—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥

वा० प०—१।१।

अस्तु—मध्यमया वैखर्या च ध्वनिनाऽभिव्यक्तं तद्रूपरुषितं शब्दब्रह्म तत्तदर्थं बोधं जनयति। स एव बोधः शाब्दबोध इति कथ्यते। अयं च बोधः शब्दनिष्ठवृत्तिज्ञानेन शब्दज्ञानेन च जायमानः शब्दविषयकोऽपि भवति। अन्येषां दार्शनिकानां मते तु शब्दजन्य एव न तु शब्दविषयकोऽपि। यद्यपि पूर्वोत्तर-मीमांसयोरपि वर्णस्य ध्वनिव्यङ्ग्यताऽभिमता, तथाऽपि तदंशेसाम्येऽपि न तयोर्मतेऽपि शब्दविषयकत्वं शाब्दबोधस्येति। तत्र शब्दनिष्ठावृत्तयः शक्तिलक्षणाव्यञ्जनारूपास्तिस्रः सन्ति। न्यायवैशेषिकयोः पूर्वोत्तरमीमांसयोश्च शक्तिलंक्षणेति वृत्ति-द्वयमेवाभ्युपेयते। शाब्दिकानां निकाये लक्षणां परिहाय शक्ति-र्व्यंञ्जना चेति वृत्तिद्वयं स्वीक्रियते। साहित्यशास्त्रे तिस्रोऽपि वृत्तयोऽभ्युपगताः सन्ति।

एतद् वृत्तिज्ञानाधीना पदार्थोपस्थितिः शाब्दबोधे व्यापारी-भवति—इति प्रायः समेषां मतम्। किन्तु शाब्दिकचक्र-चूडामणिना श्रीनागेशभट्टेन वृत्तिज्ञानजन्ये संस्कारस्यैव व्यापारत्वं स्वीकृत्य तादृशपदार्थोपस्थितेर्व्यापारत्वं नाभ्युपेयते।

वृत्तिज्ञानं च सहकारिकारणम्। उक्तं च न्यायसिद्धान्त मुक्तावल्याम्—

पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी॥

अयं शाब्दबोधोऽन्वयबोध इत्यपि कथ्यते ॥ इति ॥

पूर्वमीमांसायाम्—अन्विताभिधानवादः, अभिहितान्वयवादः, उत्तरमीमांसायाम् अखण्डब्रह्मबोधः, व्याकरणदर्शने शब्द-विषयको बोधः शाब्दबोध एवेति सूक्ष्मदृशा निभालनीयम्।

महान् प्रमोदाऽवसरो यदत्र प्रस्तावनायां शब्दस्य स्वरूपं शाब्दबोधश्च यत्किञ्चित्प्रस्तावितम्, तत्सर्वं काशी-हिन्दू-विश्वविद्यालयान्तर्गतदर्शनविभागे व्याख्यातृपदमलङ्कुर्वाणेन दर्शनविषयमधिकृत्य वाचस्पत्युपाधिना समलङ्कृतेन दार्शनिक-प्रतिभाजुषा श्रीबदरीनाथसिंह महोदयेन विरचितं शाब्दबोध-विमर्शाख्यं ग्रन्थमुद्दिश्यैव।

यत्र शब्दस्य शाब्दबोधस्य स्वरूपमधिकृत्यातीव सूक्ष्मदृशा विमर्शः कृतोऽस्ति। वस्तुतो ग्रन्थोऽयं नाऽतिविस्तृतोऽपि गभीरो दार्शनिकसिद्धान्तपरिपूर्णः प्रमाणपटीयस्या शैल्या संग्रथितो विद्यारसिकानतिशयेनोपकरिष्यति।

एवमेवाभिनवानां ग्रन्थानां सम्पादने डा० सिंह महोदयः सोत्साहो भवेदिति सर्वथा सर्वदा तस्य सर्वतो सुखमभ्युदयं कामयते—रामप्रसाद त्रिपाठी

प्रा० व्या० द० आ० विभागाध्यक्षः, वा० स० वि० वि० वाराणसी।

———

# प्राक्कथनम्

प्रस्तुत'न्यायमते शाब्दबोधविमर्शः' इत्येतन्नामा निबन्धो लेखकेन डा० बदरीनाथसिंहमहोदयेन मनीषिणां मनोमोदाय मुद्राप्य प्रकाश्यमानो विद्यते । एष श्रीसिंहेन वाराणसेय-संस्कृतविश्वविद्यालयस्य वाचस्पति (डी० लिट्०) पदप्राप्तये शोधप्रबन्धात्मना सपरिश्रमं प्रणीतः, विपश्चिदपश्चिमैः परीक्षकैश्चामूलचूलं सम्यक् परीक्ष्य प्रेप्सितपदप्रापकत्वानु-गुणगरिमगेहतया सप्रमोदमुद्घोषितः । अर्थकार्श्यवश्येन विश्वविद्यालयेन विधीसिते प्रकाशने विलम्बं विभावयता श्रीसिंहेन स्वकीयं शास्त्रश्रमं विद्वज्जनानां विशेषेण न्यायविद्याविदां समक्षं द्रुततरं समुपहर्तुकामेन प्रकाशनभारः स्वयमुरीकृतो यत्फलतया पुस्तकमिदं पण्डितवर्याणां पाणिपल्लवस्पर्शलाभाय सन्नद्धमस्ति ।

पुस्तकेऽस्मिन् शाब्दबोधसम्बद्धानां विविधविचार—विस्तराणां यादृशः समुपन्यासो विहितो विद्यते, शास्त्रान्तरेषु समुपलभ्य-मानानां शाब्दबोधसिद्धान्तानां सांकेतिक - समीक्षणपूर्वकं न्यायशास्त्रानुसारेण तन्निरूपणं च यादृशेन नैपुण्येन समनुष्ठित-मास्ते, तत्पर्यालोचनेन श्रीसिंहस्य विस्तृतः शास्त्रपरिचयो विषयाणां प्रतिपादनपाटवं गवेषणोपयिकप्रतिभासमृद्धत्वं च विस्पष्टं प्रकाशन्ते ।

अधिमुद्रणमिदमावेदयतो मे मनाङ् मनःखेदोऽवश्यं प्रवर्तते यन्मुद्रणस्य पूर्वरूपं यादृशं सावधानं संशोधनमपेक्षते तादृशस्यानवलम्बनेन मुद्रणं बहुत्र नैकविधैरशुद्धिदूषणैर्ग्रस्ततया गर्हणीयां विकृतिमापन्नं गौरतरे सुन्दरे शरीरे सन्निकृष्णमाणं चक्षुः श्वित्रमिव पाठकानां मानसं नूनमुद्वेजयिष्यति। वर्तमानेऽपीदृशे दोषे पुस्तकमिदमात्मनो विषयगाम्भीर्येण प्रणेतुः श्रीसिंहस्य प्रतिपाद्यप्रस्तुतीकरणचातुर्यसम्पर्केण च निजाधीतिनो मेधाविनो निस्संशयं हर्षयिष्यतीति विश्वासेन श्रीसिंहं तदीयायै विद्याव्यसनितायै सानन्दमभिनन्दयति

बदरीनाथ शुक्ल
वाराणसेय संस्कृतविश्वविद्यालय
१३।३।७१

# आत्म-निवेदनम्

भगवतो विश्वेश्वरस्य राजधान्यां वाराणस्यां संस्थितेन भारतवर्षस्य प्राणभूतायाः संस्कृतविद्यायाः जगत्स्रष्टुः परमेश्वरस्य निःश्वासभूता स्वतःप्रमाणवेदराशिषु निहितायाः भारतीय संस्कृतेश्च परमप्रतिष्ठापकेन वाराणसेय संस्कृतविश्वविद्यालयेन प्रचालितेऽनुसंधानसंस्थाने वाचस्पति (डी० लिट्०) नामानं सर्वोच्चमुपाधिमधिकर्तुं लिखितोऽयं 'न्यायमते शाब्दबोध-विमर्श'नामा निबन्धः, परीक्षितश्च विद्वतल्लजैः इष्टोपाधिश्चा-धिगतो मया। यद्यपि पूर्वं न्यायमते शाब्दबोधविमर्श इत्येवनाम्ना संकेतितोऽयं निबन्धः ग्रन्थः किन्तु विषयस्य परिवर्धनेन व्यापकत्वात् शाब्दबोधविमर्श इत्येव परिष्कृतं नामधेयमवशेषितम्।

ईदृशे महनीयकार्ये ये महानुभावाः मामुपकृतवन्तः तेभ्योऽहं किमपि न दातुं लक्षये, यस्मिन् दत्ते तदीयोपकारभारः पूरितः स्यात्। अतः केवलेन शब्दपुष्पाञ्जलिना तेषां चरणप्रान्तयोः नमस्कुर्वन् किञ्चित् स्वीयं हार्दं प्रकाशयामि—ते च सन्ति महद्भ्यो महान्तः न्यायशास्त्रे गौतमावतारभूताः श्री शिवदत्तमिश्र-महाभागाः, इमे च काशीस्थराजकीये संस्कृत-महाविद्यालये (क्वीन्स कालेज इति अपर नामधेये) न्यायशास्त्रे प्रधाना-ध्यापकपदमलङ्कृत्य अधीतमध्यापितमर्जितं यश इत्युक्तिं चरितार्थीकृत्य शिवसायुज्यमवाप्नुवन्। पुनश्च न्यायवेदान्ता-

अनेकदर्शनविद्यायामनुपं वैदुष्येण प्रख्यातकीर्त्तयः शास्त्रार्थ-चर्चायां स्वीयाप्रतिमप्रतिभया नव्यन्यायशास्त्रावतारभूतं श्रीमन्तमुदयनं स्मारयन्तः, अध्यापितशिष्यवर्गेण दिगन्तविश्रुत-कीर्तयः वाराणसेय संस्कृतविश्वविद्यालयस्य प्राणभूताः गुरुवराः श्री पंडितबदरीनाथशुक्लमहोदयाः कया रीत्या नमस्करणीयाः। एते एव महानुभावाः उक्तोपाधिलाभे मम निर्देशं कृत्य स्वीकृत्य माम् सनाथितवन्तः। "भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा" इत्युक्ति मनसा वचसा कर्मणा चरितार्थयन्तः व्याकरणशास्त्रे पतञ्जलिकल्पाः दर्शनेषु वाचस्पतिकल्पाः व्याकरणदर्शने प्रमाण-समीक्षायां वाचस्पतिपदवीमलङ्कुर्वाणाः शिष्योपशिष्यैः दिगन्तविश्रुतकीर्तयः वाराणसेय संस्कृतविश्वविद्यालये प्राचीन-व्याकरण - दर्शनागमविभागाध्यक्षपदमधितिष्ठन्तः श्रीपण्डित रामप्रसादत्रिपाठिमहोदयाः भूयसीभिः सम्मान्यन्ते ये अस्मिन् ग्रन्थे प्रस्तावनालेखनेन मामनुगृहीतवन्तः। काशीहिन्दु-विश्व-विद्यालये दर्शनविभागे प्रवाचकपदं सफलयन्तः विश्वप्रख्यात-श्रीमदरविन्ददर्शनमधिकृत्य कृतभूरिपरिश्रमेण अवदातयशसः श्रीमन्तः डा० आर० एस० मिश्र महाभागाः सततं स्मरणीयाः येषाम् साहाय्येन अहं बहूपकृतोस्मि। न्यायशास्त्रविचक्षणाः दर्शनेषु वाचस्पतिकल्पाः पण्डितप्रवराः ज्वालाप्रसादगौड महोदयाः सन्यासिसंस्कृतमहाविद्यालयस्य लब्धप्रतिष्ठाः प्रधानाचार्याः सुधन्यवादार्हाः यैरस्य ग्रन्थ-रचना-कार्ये महनीयं साहाय्यं प्रदत्तम्।

विदुषामनुविधेयः
बदरीनाथ सिंहः
काश्याम्

श्री रामनवमी
सम्वत् २०२८ वै०

# विषय सूची


| विषयः | पृ० सं० |
|---|---|
| १ अवतरणिका | १–१४ |
| २ शब्दप्रमाणनिरूपणम् | १५–२६ |
| आप्तोच्चरितशब्दस्यैव प्रामाण्यम् | |
| शब्दस्य द्वैविध्यकथनम् | |
| वेदानामकर्तृत्वशङ्कानिराशः | |
| प्रमाणानां साफल्यम् | |
| प्रवृत्तिसाफल्यप्रकारः | |
| ज्ञानप्रामाण्यस्य फलमाह | |
| एतेषां पदार्थानां स्वरूपं किम् ? | |
| ३ शब्दप्रमाणस्य भेदाः– तत्र विधिस्तावत् | ३०–७० |
| विनियोगविधेः स्वरूपम् | |
| प्रयोगविधेः स्वरूपविचारः | |
| अधिकारविधि-विवेचनम् | |
| प्रमाणभूतशब्दात्मक-मन्त्ररूपवेदस्य विचारः | |

शब्दस्यप्रमायाः करणविषयको विचारः
शाब्दबोधं प्रति पदार्थोपस्थितेः कारणत्वविचारः
पदज्ञानस्य प्रामाण्यविवेचनम्
प्रामाण्यस्यस्वतत्त्वादिविवेचनम्

४ शब्दस्य प्रामाण्याप्रामाण्यविचारः ७१–९५

बौद्धमतेन शब्दप्रमाणखण्डनम्
शब्दप्रामाण्यखण्डनेविशेषविचारः
बौद्धानां प्रमाणद्वैविध्यनियमः
शब्दस्यानुमानात् पार्थक्यम्
शब्दप्रामाण्यसमर्थनम्

५ पदार्थसामान्यविवेचनम् ९६–१०७

गवादिपदानां विशिष्टे शक्तिरुपलक्षिते वा
गोत्वादेर्गवादिपदवाच्यत्वे प्रमाणम्
त्रिषु अर्थेषु वर्त्तमाना शक्तिरेकैव

६ पदपदार्थयोः सम्बन्धविचारः १०८–१४७

शब्दार्थव्यवस्थानादप्रतिषेधः
पदपदार्थयोः संयोगादिरूपसम्बन्धखण्डनम्
शब्दार्थयोर्वृत्तिरूप एव सम्बन्धः
शक्तिश्चेश्वरच्छारूपा पदार्थान्तरं वा वृत्तेर्भेदाः
शक्तिश्चेश्वरेच्छारूपा
अपभ्रंशशब्दानां वाचकत्वावाचकत्वपरीक्षा
लक्षणायाः वृत्तित्वोपपत्तिः
घटादिपदानां कार्यतावाचकत्वविचारः
ज्ञायमानायाः शक्तेः करणत्वविचारः
स्वरूपसत्याः शक्तेः कारणत्वविचारः
लाक्षणिकमपभ्रंशादिशब्दानां वाचकत्वखण्डनम्

७ शक्तिग्रहश्च कीदृशः कतिभिश्चकारणैर्भवति १४८–१६५

शक्तिग्रहमित्यादिना

अत्र प्रसङ्गातिवशाद् विशेषविचारः

उपमानाच्छक्तिग्रहो निरूप्यते

कोशादपि शक्तिग्रहः

आप्तवाक्यात् शक्तिग्रहः

व्यवहाराच्छक्तिग्रहः

वाक्यशेषादपि शक्तिग्रहः

विवरणाच्छक्तिग्रहः

८ कीदृशं शक्तिज्ञानं शाब्दबोधोपयोगी १६६–१७८

वृत्तिज्ञानस्य भेदविवेचनम्

वृत्तिज्ञानस्य केन रूपेण कारणत्वम्

शक्तिज्ञानमपि नानुगतं शब्दबोधकारणम्

९ आसत्तिविवेचनम्— १७९–१९७

स्फोटस्वरूपविचारः

शब्दबोधे पदार्थज्ञानकारणत्ववादिनांमतम्

तन्मतखण्डनं च

योग्यतानिरूपणम्

आकांक्षाविचारः

तात्पर्यज्ञानविवेचनम्

१० स्फोट स्वरूप मीमांसा १९८–२४६

स्फोटव्यञ्जकध्वनिविमर्शः

आचार्य श्रीहरिसम्मतं वैखरीस्वरूपद्वयम्

स्फोटभेदविमर्शः उक्तेषु अष्टसु स्फोटेषु प्रमाणानि

मतान्तरदृष्ट्या स्फोटवादनिरासः न्यायदर्शनविचारः

न्यायदर्शनरीत्या व्याकरणमतनिरासः

व्याकरणदर्शनसम्मता शाब्दबोधविषयीभूता पदार्थाः
क्वचिद्वाक्ये शाब्दबोधप्रकारः
वाक्यपदीयमते वाक्यलक्षणानि,
अखण्डवाक्यस्य स्वरूपम् वाक्यानां शक्तिभेदेन विभागः,
प्रतिभापदार्थः,
प्रतिभाभेदाः,
वाक्यवाक्यर्थयोर्भेदत्रयम्,
वैयाकरणभूषणसारमते वाक्यार्थस्वरूपम्

११ लक्षणाशक्तिविमर्शः २४७–२७०

मीमांसकानां मते लक्षणायाः स्वरूपम् काव्यप्रकाशकृतस्तु, वैयाकरणानां मते लक्षणा, न्यायरीत्या तन्निरासः

१२ अभिहितान्वयवादः २७१–३०५

१३ अन्विताभिधानवादः ३०६–३१३

१४ उपसंहारः ३१४–३१५

१५ ग्रन्थसूची ३१६–३१७

———

# अवतरणिका

बौद्ध-वैशेषिकप्रभृतयो विद्वांसः शब्दस्य पृथक् प्रामाण्यं नैव स्वीकुर्वन्ति, अपि तु अनुमानविधयैव ते शब्दप्रामाण्यमङ्गीकुर्वन्ति कथयन्ति च—

शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते।
अनुमानगृतार्थत्वादिति वैशेषिकं मतम्॥

वैशेषिकाणामिव बौद्धानामपि अयमेव प्रामाण्यसिद्धान्तः। यथा—इन्द्रियाणां सत्यपि प्रामाण्ये दोषसहकृतइन्द्रियाणां नास्ति प्रामाण्यम्, तथैव शब्दस्यापि नास्ति पृथक् किमपि प्रामाण्यमित्यर्थः। तथाहि—

शब्दो न प्रमाणं प्रमाजनकत्वाभावात् यथा दोषसहकृतमिन्द्रियम्। नापि स्वरूपासिद्धिः, साकाङ्क्षादिशब्दश्रवणोत्तरं वृत्त्या शब्दोपस्थाप्यार्थोपस्थितिमात्रं जायते, विशिष्टानुभवे—विशिष्टवैशिष्ट्यावगाह्यनुभवे वा नास्ति किमपि प्रमाणम्। न च गौरस्तीति वाक्यश्रवणानन्तरम् अस्तित्वप्रकारक गो विशेष्यकज्ञानवानहमित्यनुव्यवसायानुपपत्तिरिति वाच्यम्। तत्रैव विवादात्। अस्तु वा गोविशेष्यकाऽस्तित्वप्रकारकोऽनुभवः प्रत्यक्षात्मक

एव। तावताऽपि अनुव्यवसायस्योऽपपत्तिर्भविष्यत्येव। लौकिक-प्रत्यक्षे शब्दस्यानुपयोगात्, अतीन्द्रियस्थले तदसंभवानाच्च। ज्ञानलक्षणात्मकोपनयसन्निकर्षजन्या लौकिकप्रत्यक्षमेवाऽस्तु, शाब्दबोधात् पूर्वमपि पद-ज्ञानपदार्थोऽपस्थितेरावश्यकतया तस्या एवोपनयसन्निकर्षत्वात्। तत उपनीत मानस्वीकारे बाधकाभावात्। ननु गोविशेष्यकाऽस्तित्वप्रकारकज्ञानस्याऽलौकिक प्रत्यक्षत्वेऽनुव्यवसायोऽपपत्तावपि गौरस्तितावान् इतिवत्, अस्तित्वं गवीयमित्यपि प्रत्यक्षं स्यात् प्रत्यक्षे विशेष्य-विशेषणभावस्य कामचारात्। शाब्दबोधस्तु प्रथमान्तार्थमुख्यविशेष्यक एवेति न अस्तित्वं गवीयमिति बोधापत्तिः।

प्रकारान्तरेणाऽप्युपस्थितार्थस्योपनयमर्यादयाऽनुव्यवसाये भाना-पत्तेश्च। न चेष्टापत्तिः। अनुभवविरोधात्। पदोपस्थाप्याऽर्था-वगाहि त्वस्यैवानुभवसिद्धत्वात्। प्रत्यक्षे तु सुरभिचन्दनम्, ज्ञातो घटः, इत्यादौ सौरभादेरपि भानात् इत्यन्यत्रविस्तरः।

ननु प्रकारान्तरेणोपस्थितार्थस्य शाब्दबोधविषयत्वेऽपि न तदर्थ-विषयक-शाब्दबोधस्यानुव्यवसायः। विषयतया तदर्थं विषयक-शाब्दबोधाऽनुव्यवसायं प्रति तदर्थकपदजन्य तदर्थविषयकशाब्दत्वेन कारणताकल्पनात् इति चेन्न गौरवात्। "सच्छिद्रो घटो जलाहरणायोग्य" इति बाधनिश्चयसत्त्वे "घटेन जलमाहर" इति वाक्यात् "सच्छिद्रान्यघटकरणकजलाहरणबोधो भवति तादृशबोधानुव्यवसाये व्यभिचारापत्तेः, अनुव्यवसाये छिद्रेतरज्ञान-स्यविवादग्रस्तत्वे" वस्तुगत्याछिद्रेतरघटस्यैव भानोपगमान्न व्यभिचार इत्युच्यते तदापि अस्तित्वादौ गवादेर्भानप्रसङ्गो दुर्वार इति ध्येयम्।

ननु गौरस्तितावानिति बोधो विशिष्टबुद्धिर्भवत्येव, परन्तु सा विशिष्टबुद्धिः स्मृतिरूपैवेति वक्तव्यम् नत्वनुभवः, अतोऽनुभवकारणत्वं शब्दस्य बाधितमेवेति चेन्न। समानाकारकसंस्काराजन्यत्वात् न स्मृतिः। तद्धर्मिक तद्वत्तास्मरणं प्रति तद्धर्मिक तद्वत्तासंस्कारस्यैव हेतुत्वात्। तस्य च पूर्वं नियमतो सत्त्वात्। तथा च तादृश संस्काररूपकारणाभावेन स्मृतित्वासंभवात्। नियन्त्रित विषयत्वादेव शाब्दबोधोऽनुमितिरपि। तथा सति पूर्वं परामर्शविषयी भूतस्य सर्वस्य शाब्दबोधविषयतापत्तिः। न च तदर्थविषयकशाब्दबोधं प्रति वृत्त्या साकाङ्क्षपद जन्यपदार्थोपस्थिति कारणम् अतो न दोष इति चेन्न। शाब्दस्यस्य प्रत्यक्षत्वादिव्याप्यत्वे पदजन्योपस्थिति विषयार्थावगाहि "शाब्दात्मक" प्रत्यक्षादाविष्टापत्तिसंभवेऽपि पदजन्यार्थोऽपस्थित्यविषयस्यापि अपदार्थस्य प्रत्यक्षानुमितिसामग्रीबलेन "स्वोपनयपरामर्शसत्वेन प्रत्यक्षानुमित्योरन्यतरप्रसंगस्य प्रवीरतापत्तेः। प्रत्यक्षादिसामान्यं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वासंभवात्, शाब्दस्यापि प्रत्यक्षत्वेन एवं प्रतिस्वसामग्र्य ः प्रतिबन्धकत्वासंभवात् ः शाब्दान्यप्रत्यक्षं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनापेक्षया शाब्दबोधस्य प्रत्यक्षादिभिन्नत्वकल्पनायां लाघवात्। शाब्दबुद्धेर्प्रत्यक्षादिरूपत्वे मानाभावात् च तदुक्तम्—

साकाङ्क्षशब्दैर्या बोधस्तदर्थान्वयगोचरः।
सोयं नियन्त्रितार्थत्वान्न प्रत्यक्षं न चानुमा ॥ श्रुतम्

आकाङ्क्षा-योग्यताऽऽसत्तिमत्पदैस्तत्तदर्थं संसर्गावगाही बोधः नियन्त्रितार्थत्वात् "पदोपस्थाप्यस्यैवार्थस्यावगाहित्वात्" न प्रत्यक्षं न चानुमितिरित्यर्थः।

अथ गोरस्तितावान् अस्तित्वयोग्यतावत्त्वात्, इत्यनुमानादेव गोविशेष्यकअस्तित्वप्रकारकनिश्चयः, एवं च शाब्दान्यानुमितिं प्रति शाब्दशामग्र्याः प्रतिबन्धकत्वात् स्वसामग्रीबलेन नाऽपदार्थानामनुमित्यापत्तिरिति वाच्यम्। योग्यता यदि एकपदार्थे परपदार्थवत्त्वं तदा हेतोः साध्याविशेषे सिद्धसाधनम्। यदि च वाधाभावो योग्यता तदा योग्यतानिश्चयहेतुत्ववादिनामयमाशयः—यद् बाधनिश्चयदशायां शाब्दबोधवारणाय योग्यतानिश्चयस्य हेतुता स्वीकरणीया, तथा च शाब्दसामग्रीकाले बाधनिश्चयस्य न संभवो भवितुमर्हति योग्यतानिश्चयस्य प्रतिबन्धकत्वादिति। स च न युक्तः, विशिष्टबुद्धिसामान्यं प्रतिबाधनिश्चयस्य प्रतिबन्धकत्वात्तदभावरूपकारणविरहादेव तदानीं शाब्दापत्त्यसंभवात् बाधनिश्चयाभावेन योग्यतानिश्चयस्योऽन्यथासिद्धत्वात्।

अथाऽस्तु योग्यतानिश्चयाऽन्यथासिद्धत्वम्। आचार्यमते ज्ञायमानलिङ्गस्याऽनुमितिकारणत्वात् योग्यतामात्रं लिङ्गमस्त्विति चेन्न। योग्यतामात्रलिङ्गकानुमानस्याऽन्वयबुद्धिरूपत्वे "घटः कर्मत्व" मित्यादि स्थलीयस्याऽपि तदनुमानस्याऽन्वयबुद्धित्वापातात्। योग्यतायाः संशयसत्त्वेऽपि शाब्दबुद्धेरनुभवसिद्धतया तस्याश्चानुमितौ निश्चयत्वेनैव कारणत्वस्य वाच्यतया योग्यताया लिङ्गत्वासंभवाच्च।

ननु आकाङ्क्षाहेतुनैव तदन्वयबुद्धिः साधनीयेति चेन्न। गोरस्तितावान् आकाङ्क्षावत्त्वात् इत्यनुमाने तत्तदानुपूर्वीपर्यवसितस्य आकाङ्क्षावत्त्वहेतौ पदार्थपक्षे स्वरूपासिद्धत्वात्। अत एव

योग्यताविशिष्ट आकाङ्क्षावत्त्वं न हेतुः। सामानाधिकरण्यरूप-वैशिष्टयाभावाच्च। नापि आकाङ्क्षाविशिष्टायोग्यतावत्त्वं हेतुः। विशेषणाभावप्रयुक्तविशिष्टाभावादिति ध्येयम्। तदुक्तम्—जगदीशेन।

योग्यतार्थगताऽऽकाङ्क्षा शब्दनिष्ठानुभाविका।
प्रत्येकं मिलित्वा वा नैते लिङ्गमसिद्धितः॥

बाधा भावरूपा योग्यताऽर्थनिष्ठा, एवम् आनुपूर्वी पर्यवसिता आकाङ्क्षा शब्दनिष्ठा शाब्दबोधजनिका, प्रत्येकम् एकैकशः, मिलित्वा संभूय वा एते योग्यताकाङ्क्षे—असिद्धितः—स्वरूपासिद्धेर्न लिङ्गमिति पद्यार्थः।

अथ गौरस्तितावान् स्वधर्मिकास्तित्वाऽन्वयबोधानुकूलाऽऽकाङ्क्षाश्रय पदस्मारितत्वात् घटवादित्यनुमानादेवास्तु शाब्दबोधस्याऽन्यथासिद्धिः। गमनानुकूलकृतिमति गवादौ व्यभिचारवारणाय अनुकूलान्तम्। स्मारितत्वमात्रस्य हेतुत्वेऽपि व्यभिचारः स्पष्ट एवेति बोध्यम्।

स्वपदस्य पक्षपरतया दृष्टान्तासिद्धिरिति चेत्, अस्तिपदसमभिव्याहृतगोः पदस्मारितत्वात् चक्षुर्वत इति ग्रहाण। घटस्य गोपदस्मारितत्वाभावाद् दृष्टान्तान्तरम्। चक्षुषोऽपि गोपदस्मारितत्वं दिङ्नेत्रघृणिभूजले इति कोषात्। गौर्गच्छतीत्यादौ व्यभिचारकारणायाऽत्रापि अस्तिपदसमभिव्याहृतेति वैशेषिकाः। तन्न पदस्मारितत्वाभावग्रहकालेऽपि गौरस्तीति शब्दजन्य गौरस्तितावानिति शाब्दबोधस्याऽनुभवसिद्धत्वेन तदानीं चाऽस्तित्वव्याप्य गोपदस्मारितत्ववानिति परामर्शासंभवेनानुमानान्तर्भावासंभवात्।

वस्तुनः पदजन्योऽपस्थित्यसत्त्वेऽपि पदैः स्मारितोयमर्थः इति भ्रमज्ञानविषयस्याऽप्यर्थस्य शाब्दबोधप्रसङ्गाच्च।

पदजन्योपस्थितिविषयत्वरूपस्य पदस्मारितत्वस्य अग्रहकाले शाब्दबोधो न जायते इति न वक्तुं शक्यते। पदजन्या हि पदार्थोपस्थितिः स्वरूपसती अज्ञायमाना एव हेतुर्न तु ज्ञायमाना। अनुमितौ तु पदस्मरितत्वनिश्चयस्यैव हेतुत्वात्। तथा च पदस्मारित्व हेतोः पक्ष धर्मत्वस्याग्रहकाले परमर्शानुत्पादेन तदानीमुत्पन्नबोधस्यानुमितित्वासंभवादिति ध्येयम्।

एवं गोपदं गोविशेष्यकाऽस्तित्वप्रकारकज्ञानपूर्वकम् अस्ति-पदसाकाङ्क्षगोपदत्वात्। इतिपदपक्षकमप्यनुमानं वैशेषिकाणां निरस्तम्। गोपदे गोविशेष्यकाऽस्तित्वप्रकारक-ज्ञानापूर्वकत्व-बाधनिश्चयस्य सत्त्वे उक्तानुमित्यनुत्पादेन पदार्थोऽपस्थित्या गौरस्तितावानिति शाब्दबोधस्य सर्वानुभवसिद्धत्वात्। प्रत्येक-पदार्थोपस्थितिसत्त्वेऽपि वाक्यार्थस्यानुपस्थितेः, वाक्यार्थस्या-पूर्वत्वादिति संक्षेपः।

वस्तुतस्तु पर्वते वह्निमनुमिनोमि इत्यनुव्यवसायवद् गौरस्तीति श्रवणानन्तरमस्तित्वेन गौः श्रुत इति अनुव्यवसायबलेन शब्दस्यापि प्रामाण्यम्। तादृशानुव्यवसायस्यापलापे नुमितिमात्रस्य वह्न्याद्यनुमितिः वह्न्यादि पदजन्या वह्न्याद्यनु-मितित्वादित्यनुमानेन पदजन्यत्वं प्रकल्प्य पदजन्यत्वहेतुना शाब्दबोधत्वानुमानसंभवात् इत्यन्यत्र विस्तरः।

किं च "घटादन्यः" इत्यादिवाक्याद् घटत्वावच्छिन्न-प्रतियोगिताकभेदवानिति निर्धर्मिकः शाब्दबोधो भवति, निर्धर्मिका-नुमितिस्तु न जायते। वैशेषिकाणां तु भेदो घटप्रतियोगिताकः

घटसाकाङ्क्षान्यपदस्मारितत्वात् इति रीत्याऽनुमित्या न तन्निर्वाहः। पक्ष विषयाऽन्यत्वस्य मानेऽन्यत्वप्रकारेण अन्यस्य विषयीकरणात् अन्यत्वस्यैव विशेष्यतया मानात्। निर्धर्मितावच्छेदककानुमितेरनभ्युपगमात्, अन्यपक्षकानुमितेर्भवितुमशक्यत्वात्।

आकाङ्क्षादिज्ञानमिव आप्तोक्तत्वनिश्चयोऽपि शाब्दबोधे कारणम्। आप्तोक्तत्वञ्च प्रकृतवाक्यार्थज्ञानवदुक्तत्वम्। एवञ्च एकपदार्थनिष्ठविशेष्यतानिरूपिता परपदार्थनिष्ठप्रकारता शालि अन्वयबोधो नानुमितिर्भवितुमर्हति, सिषाधयिषाविरहविशिष्टसिद्धेः प्रतिबन्धकत्वात्, विनाऽनुमित्सामनुमित्यसंभावात्। तथा च असौ शाब्दबोधोऽनुमितेर्विजातीय एवेति निश्चीयते, परन्तु गृहीतग्राहित्वान्न प्रमा, एवञ्च प्रमाकरणत्वाभावान्न लौकिकशब्दः प्रमाणमिति मीमांसकाः वदन्ति।

गृहीतग्राहित्वञ्च यज्जातीययथार्थज्ञानत्वावच्छेदेन समानाकारकनिश्चयोत्तरजायमानत्वं तज्जातीयत्वम्। यथा—स्मृतित्वावच्छेदेन समानाकारकाऽनुभवोत्तरजायमानत्वमस्तीति स्मृते गृहीतग्राहित्वमस्ति इति न कोऽपि दोषः।

प्रमात्वञ्चागृहीतग्राहित्वम्, यज्जातीयविशिष्टज्ञानत्वावच्छेदेन समानाकारकनिश्चयोत्तरजायमानत्वं तज्जातीयान्ययथार्थज्ञानवत्त्वं तत्।

धारावाहिक द्वितीय—तृतीयादिज्ञानानां (प्रत्यक्षात्मकानाम्) गृहीतग्राहित्वेन अप्रमात्वापत्तिरतो यद्ज्ञानत्वं विहाय यज्जातीयेत्युक्तम्। यद्विशेष्यक प्रत्यकारकज्ञानत्वेत्यर्थः। तथा च प्राथमिक-

प्रत्यक्षात्मके ज्ञाने समानाकारकनिश्चयो : परत्वाभावात् प्रमात्वसंगतिः।

भ्रमात्मकप्रत्यक्षस्यापि यत्पदाग्राह्यत्वेन तज्जातीयान्यज्ञानत्वात् प्रमात्वापत्तिरतो विशिष्टेति। तद्वति तत्प्रकारकेत्यर्थः। अग्रे यथार्थपदं स्पष्टार्थम्। यज्जातीयविशिष्टज्ञानत्वसमानाधिकरणं समानाकारके निश्चयोत्तरत्वमित्युक्तौ धारावाहिकद्वितीयादिप्रत्यक्षाणां प्रमात्वापत्तिरतो ज्ञानत्वावच्छेदेनेत्युक्तम्। तथा च विशिष्टज्ञानत्वव्यापकमित्यर्थः।

एवञ्च प्राथमिकप्रत्यक्षस्य व्यापकताविरहेण नाऽयं घट इत्यादि प्रत्यक्षस्याऽप्रमात्वापत्तिः।

निर्विकल्पकप्रत्यक्षोत्तरत्वमादाय प्रत्यक्षे प्रमात्वानुपपत्तिवारणाय समानाकरेति। समानाकारत्वञ्च स्वविषयताव्यापकविषयताकत्वम्। निश्चयोत्तरत्वमित्यत्र ज्ञानोत्तरत्वं कथं नोक्तमिति तु विभावनीयम् इति भावः।

तद्वति तत्प्रकारकत्वरूपप्रमात्वोपेक्षणं स्मृतीनां प्रमात्ववारणार्थम्। एतावता शाब्दबोधस्य प्रत्यक्षाऽनुमित्यतिरिक्तत्वेन वैशेषिकमतनिरासेऽपि शाब्दबोधस्य प्रमात्वाभावेन लौकिकशब्दो न प्रमाणं प्रमाजनकत्वाभावात् इति मीमांसकमतं न श्रद्धास्पदम्। आप्तोक्तत्वनिश्चयस्याकरणत्वादिति तु परमार्थः। आप्तोक्तत्वसंशये—अर्थज्ञानशून्य बालशुकाद्युच्चरितस्यापि सामग्रीवलेन शाब्दबोधात्। तदुक्तं जगदीशेन—

नाप्तोक्तता तु वाक्यार्थगर्भाज्ञातोऽप्युज्यते।
वाक्यार्थानामपूर्वत्वात् संशये ऽप्यन्वयोदयादिति॥

वाक्यार्थानां शाब्दबोधात् पूर्वमज्ञायमानत्वात्। वाक्यार्थ-घटिता आप्तोक्तता तु ज्ञाता (निश्चिता सती) शाब्दबोधे नोपयुज्यते। तथा वाऽऽप्तोक्तत्वस्य संशये शाब्दबुद्धेरुत्पादादपि तस्याः शाब्दबोधे नोपयोग इति पद्यार्थः। अपि नाबालशुकादेः समुच्चयः।

ननु शाब्दसामग्रीसत्त्वेऽपि घटमितिवाक्यं कर्मताधर्मिक आधेयतासंसर्गक घटप्रकारकबोधेच्छया नोच्चरितम् अपितु प्रमेयधर्मिकाऽऽधेयतासंसर्गकप्रमेयप्रकारकबोधेच्छयोच्चरितमिति वा तात्पर्यनिश्चयसत्त्वे "घटमिति" वाक्यात् कर्मत्वं घटीयमिति शाब्दापत्तिवारणाय कर्मताधर्मिकाऽऽधेयतासंसर्गकघटप्रकारक-शाब्दबोधे तादृशशाब्दबोधेच्छयोच्चरितत्वरूपतात्पर्यज्ञानमवश्यं कारणं वाच्यम्। तथा च शाब्दबोधस्य गृहीतग्राहित्वेन अप्रमात्व-मिति प्रभाकरमतमपि न सम्यक्।

प्रमेयत्वेन कर्मत्वावगाहि प्रमेयत्वेन घटावगाहि प्रमेयं घटीयम्-कर्मत्वंप्रमेयीयम् इति बोधेच्छयोच्चरितत्वमिति तात्पर्यनिश्चय-सत्त्वेऽपि घटमितिवाक्यात् कर्मत्वं घटीयमिति शाब्दापत्तिवारणाय कर्मतात्वावच्छिन्नविशेष्यतानिरूपितघटत्वावच्छिन्न प्रकारता शालिबोधेच्छयोच्चरितत्व निश्चयत्वेनैवतात्पर्य निश्चयस्य कारण-त्वेन कर्मत्वं घटीयमिति वाक्यार्थस्य तात्पर्ये निवेशात् निरूप्य-निरूपकभावापन्नविषयता एव तात्पर्ये प्रवेशात्।

वस्तुतस्तु परस्परजन्ये व्यभिचारवारणाय कार्यतावच्छेदक-कोटाव्यहितोत्तरत्वनिवेशः सर्वथाऽवश्यकः, एवं कालान्तर्भावेणापि। विशिष्यकार्य-कारणभावे च तात्पर्यहेतुभूतानां प्रकरणज्ञानानामेव

कारणत्वमुचितम्। तद्धेतोरेव तदस्तु किं तेनेति न्यायात्। कार्यकारणभावस्योभयत्रैव तुल्यत्वात् च। अनन्यथासिद्धत्वस्योभयत्र कल्प्यत्वेऽपि नियतपूर्ववर्त्तितायाः प्रकरणज्ञाने क्लृप्तत्वेन कल्पनालाघवाच्च। तथा च तत्तत्प्रकरणज्ञानोत्तरं शाब्दबुद्धौ तत्प्रकरणज्ञानत्वेन हेतुत्वमिति न्यायसिद्धान्तः।

एतेन तात्पर्यस्य संशये व्यतिरेकनिश्चये च शाब्दानुत्पादात् तात्पर्यनिश्चयो हेतुर्वाच्यः। तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वात्, युगपदनेकार्थोपस्थितौ एकार्थमात्रान्वये तात्पर्यनिश्चयस्यैव विनिगमकत्वाच्च। तथा च तात्पर्यघटकतया शब्दात् पूर्वं वाक्यार्थसिद्धेः प्रत्यक्षाऽनुमितिभ्यां भिन्नमनुभवं जनयन्नपि शब्दो न प्रमाणं गृहीतग्राहित्वादिति वदन्तः प्राभाकराः परास्ताः प्रकरणज्ञानस्यैव हेतुत्वादित्यास्तां विस्तर इति भावः।

आचार्यास्तु एते पदार्थाः परस्परं संसर्गवन्तः आकाङ्क्षायोग्यताऽऽसत्तिमत्पदस्मारितत्वादिति वैशेषिकानुमाने व्यभिचारः येन पयसा कदापि कस्यापि सेचनं न जातं तत्र पयः पदार्थस्य सेचनपदार्थस्य च संसर्गरूपसाध्याभावेन हेतोश्च सत्त्वात्। यदि संसर्गवत्त्वं न संसर्गनिर्णयः किन्तु संसर्गस्वरूपयोग्यत्वं तदा साध्यनिश्चयाभावादनुमानं सर्वथा व्यर्थमेव स्यात्।

हेतुश्च योग्यताघटितः, योग्यता च एकपदार्थे परपदार्थवत्त्वम्, एवञ्च परामर्शकाले एव साध्यनिश्चयेन सिद्धसाधनाच्च। अनुमितेः पूर्वं हेतुज्ञानस्य नियमेनाऽपेक्षणात्।

एवम् एतानि पदानि स्मारितपदार्थसंसर्गप्रमापूर्वकाणि आकाङ्क्षादिमत् पदकदम्बत्वादित्यादिपदपक्षकानुमानेऽपि व्यर्थ-

विशेषणत्वमस्ति • हेतोः, आकाङ्क्षाज्ञानस्याऽकारणत्वात्। आकाङ्क्षा च समभिव्याहृत पदस्मारितपदार्थजिज्ञासा। सा च स्वरूपसती हेतुः। अनुमितौ च हेतुनिश्चयस्यापेक्षणीयत्वात्, आकाङ्क्षाया लिङ्गविधया हेतुत्वासंभवात् इत्यतोऽवश्यैव शब्दस्य प्रमाणान्तरत्वं स्वीकार्यमिति भावः।

न च योग्यताविशिष्टाऽऽसत्तिरेव हेतुरस्तु अलमाकाङ्क्षाया हेतुघटकत्वेनेति वाच्यम्। यथा सति अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम् इत्यत्र निराकाङ्क्षयोः राजपद-पुरुषपदयो-र्व्यभिचारापत्तेः। राजपुरुषान्वये तात्पर्यविरहादेव राजपुरुषपदार्थ-संसर्गज्ञानपूर्वकत्वरूपसाध्याभाववति हेतोः सत्त्वात्। तात्पर्य-सहितयोग्याऽऽसत्तिमत्त्वहेतुना पदार्थसंसर्गज्ञानपूर्वकत्वसाधने तु हेतोः व्यर्थविशेषणघटितत्वापत्तेः। योग्यतादि विशेषणस्य निष्फलत्वात्। तात्पर्यं हि तत्पदार्थवत्तत्पदार्थबोधेच्छयोच्चरितत्वम्, तच्च तत्पदार्थवत्तत्पदार्थज्ञानपूर्वकत्वनियतमिति तत्तदर्थतात्पर्य-कत्वस्यैव हेतुत्वे शेषवैयर्थ्यात् इत्याहुः। तदुक्तम् आचार्यचरणैः—

अनैकान्तः परिच्छेदे संभवे च न निर्णयः।
आकाङ्क्षाऽऽसत्तया हेतुर्योग्यासत्तिरबन्धना॥

—न्यायकुसुमाञ्जलिः

परिच्छेदे = निश्चये। संभवे = स्वरूपयोग्यत्वे। सत्तया = स्वरूपसत्त्या। अबन्धना = न बन्धः = सम्बन्धः, व्याप्तिरूपसम्बन्धो यस्यां सा इत्यर्थः। व्याप्तिरूपसम्बन्धशून्या इति यावत्। एवञ्च शब्दस्य प्रमाणान्तरत्वम् अवश्यं स्वीकार्यम्। अनुमानगतार्थत्वं नास्तीति भावः।

शब्दमात्रस्य अनुमानेन गतार्थत्वमितिवैशेषिकमते निरस्तेऽपि प्रभाकरमते वैदिकशब्द एव प्रमाणम्, वेदस्यापौरुषेयत्वनिश्चयेन वक्तृज्ञानाऽनुमाना संभवात्। यथा च वेदे पौरुषेयत्वरूपबाध-निश्चयात् पौरुषेयत्वरूपवाक्यार्थ-यथार्थ-ज्ञानवदुक्तत्वरूपसाध्या-नुमानासंभवात्।

न च तन्मते शब्दमात्रस्य नित्यत्वात् कथं लौकिकवाक्यस्य पौरुषेयत्वमिति वाच्यम्। शब्दस्य नित्यत्वेऽपि लौकिकवाक्यस्याऽ-नुपूर्वीविशिष्टत्वरूपरचनायाः पौरुषेयत्वात्। वेदे तु वक्तुरभावात् आनुपूर्वीमत्त्वस्यापि नित्यत्वमिति तेषामभिमानः।

लौकिकशब्दे तु आप्तोक्तत्वज्ञानमात्रमपेक्षितं भवति, तथा च "घटम्" इति वायवक्ता घटवत्कर्मत्वयथार्थज्ञानवान् भ्रमाद्यजन्यघटप्रकारककर्मत्वविशेष्यकज्ञानाधीन "घटम्" इति वाक्यप्रयोक्तृत्वात् इत्यनुमानाद् वाक्यार्थनिश्चयेन अगृहीत-ग्राहित्वाभावात् लौकिकशब्दो न प्रमाणमिति प्रभाकरमतमपि न सम्यक्।

न च घटमिति वाक्यस्य कर्मत्वविशेष्यकघटप्रकारक-ज्ञानजन्यत्वमेवासिद्धमिति वाच्यम्। बुबोधयिषया वाक्यप्रयोगं प्रति वाक्यार्थज्ञानस्य हेतुतयाबुबोधयिषया प्रयुक्तस्य "घटम्" इति वाक्यस्य वाक्यार्थज्ञानजन्यत्वात्।

अनुमानात् पूर्वमेव वैदिकशब्दस्थले गृहीतक्लृप्तकारण-कलापाल्लौकिकशब्दादपि अर्थनिश्चये जाते लिङ्गस्यैव गृहीत-ग्राहित्वमस्ति, अनुमितौ व्याप्तिज्ञानादेरपेक्षणीयत्वेन अनुमानस्य शब्दापेक्षया विलम्बितधीजनकत्वात्। तथा च तुल्ययुक्त्या वेदे यादृशी सामग्री तादृश्येव सामग्री लौकिकशब्देऽपि नत्वपेक्षणी-

यान्तरं किमप्यस्तीति वैदिकस्थल इव लौकिकशब्दस्थलेऽपि नाप्तोक्तत्वनिश्चयो हेतुर्येन वक्तृयथार्थज्ञानमपेक्षणीयं स्यात्। तदुक्तमुदयनाचार्यैः—

निर्णीतशक्तेर्वाक्याद्धि प्रागेवार्थस्य निर्णये।
व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिता॥

—न्यायकुसुमाञ्जलिः।

निर्णीतशक्तेः = वैदिकशब्दे निर्णीताऽऽकाङ्क्षायोग्यतादिरूपसामर्थ्यात्। वाक्यात् = वैदिकवाक्यात्। प्रागेव = अनुमानात्पूर्वमेव। अर्थस्य निर्णये = अर्थनिश्चये जाते लिङ्गस्यैव। अनुवादिता = गृहीतग्राहित्वम्।

ननु यस्य संशयव्यतिरेकनिश्चयो यत्र प्रतिबन्धको तन्निश्चयस्तद्धेतुः अनुमितौ व्याप्तेरिवेति नियमात् आप्तोक्तत्वनिश्चयो हेतुर्वाच्यअनाप्तोक्तानिश्चयाभावस्य हेतुत्वे गौरवात् इतिचेन्न। मानाभावात्। अनाप्तोक्तत्वनिश्चये शाब्दबोधापत्तिस्तु न संभवति। बाधाभावरूपयोग्यता ज्ञानाभावात्। आप्तोक्तत्वनिश्चयस्य लौकिकवाक्यार्थधी हेतुत्वे वेदेऽपि अपौरुषेयत्वधीहेतुः स्यात् तथा च सति अमी वैदिका अर्थाः परस्परं संसर्गवन्तः दोषवत् पुरुषाप्रणीतपदस्मारितत्वात् इत्यनुमानात् संसर्गनिश्चये जाते वेदस्याऽपि गृहीतग्राहित्वं स्यात्। तदुक्तम्—

व्यपुंदूषणाऽऽशङ्कैः स्मारितत्वात् पदैरमी।
अन्विता इति निर्णीते वेदस्यापि न तत्कुतः॥

पश्यन्तु तत्रैव—

व्यस्तपुंदूषणाशङ्कैः = व्यस्ता पुंदूषणानामाशङ्का येषु तैः = दोषवत् पुरुषाप्रणीतैः पदैरित्यर्थः। अमी = वैदिका अर्थाः।

अचिताः = संसर्गन्तः, परस्परं सम्बन्धवन्त् इत्यर्थः। इति अनुमानेन। निर्णीते = संसर्गनिश्चयविषयीभूते। तत् = गृहीतग्राहित्वम्। कुतः = कथं नेत्यर्थः।

यदि च वेदस्य प्रामाण्यानुरोधेन मानाभावेन च वेदस्थले यथार्थवाक्यार्थज्ञानवदुक्तत्वग्रहो न हेतुस्तदा लौकिकशब्देऽपि मानाभावेन यथार्थवाक्यार्थधीजन्यत्वग्रहो न शाब्दबोधे हेतुरिति लौकिकशब्दोऽपि प्रमाणमिति संक्षेप इति तु परमार्थः।

यच्च स्फोटवादविमर्शाऽवसरे व्याकरणदर्शनीयः सिद्धान्तः बहु विवेचितः। शब्दस्य स्फोटरूपत्वे विभुत्वं नित्यत्वमेकत्वमित्यादि सयुक्तिकं तन्मतेनोक्तम्।

तत्प्रसंगेनैव बहवः पदार्थाः शाब्दबोधे विषयीभूताः कथिताः। यथा शब्दस्य स्वरूपम्, प्रकारत्वादिविषयतादिकं च, तत्सर्वं सोपपत्तिर्निबन्धे प्रत्याख्यातमिति तत्रैव द्रष्टव्यम्। व्यापारमुख्यविशेष्यकबोधस्य निरासोऽपि कृतो द्रष्टव्यः।

किं च बोद्ध पदार्थाभिन्नबाह्यार्थसत्त्वे एव शब्दस्य प्रामाण्यमन्यत्र शशशृङ्गादौ तु न प्रामाण्यमित्यादिकमपि सुष्ठु विविक्तमस्ति—इति कृपया निबन्धे द्रष्टव्यम्। अलमनल्पजल्पनेन।

———

# शब्दप्रमाण-निरूपणम्

## आप्तोच्चरितशब्दस्यैव प्रामाण्यम्

नव्यन्यायशास्त्रे चतस्रः प्रमितयो निरूपिताः। तासां चतसृणां प्रमितीनां करणानि अपि चत्वार्य्येव सन्ति। तान्येव करणानि प्रमाणशब्देनाभिधीयन्ते, तानि प्रमाणानि नव्यनैयायिकैश्चवत्वारि स्वीकृतानि सन्ति। वैशेषिकैश्च प्रमितिद्वयं स्वीकृत्य तत्करणत्वेन प्रमाणद्वयमेवाङ्गीकृतम्। सन्तु यानि कान्यपि प्रमाणानि, नात्र तेषां प्रमाणानां संख्यापरिगणनं क्रियतेऽस्माभिः। अस्माभिस्तु न्याय-वैशेषिकमतेन प्रमाणानां साफल्यं, कार्यंमितिकर्त्तव्यता च विचार्यंते। प्राचीननैयायिकानां मते ज्ञायमानशब्दस्यैव शाब्दप्रमायाः करणता स्वीकृता वर्तते। नवीनानां नये तु शब्दज्ञानस्यैव शाब्दप्रमायाः करणत्वं स्वीक्रियते। प्राचीनमतानुसारेण 'आप्तोक्तं वाक्यं शब्दप्रमाणम्' 'आप्तोच्चरितत्वे सति वाक्यत्वं शब्दप्रमाणस्य लक्षणम्' (न्यायबोधिनी)। 'प्रयोगहेतुभूतयथार्थज्ञानवत्त्वमाप्तत्वम्', तादृशज्ञानवांश्च आप्तः। आप्तपुरुषेणोच्चरितं यद् वाक्यं तदेव शब्दप्रमाणम्। वाक्यस्य शब्दरूपत्वात्। पयसा सिञ्चतीत्यादिवाक्यानामाप्तपुरुषोच्चरितत्वेन प्रामाण्यं सिद्धम्।

वाह्निना सिञ्चतीत्यादिवाक्यानाञ्च न प्रामाण्यमनाप्तपुरुषोच्चरितत्वात् ।

"आकाङ्क्षायोग्यतादिमत्पदसमूहो वाक्यम्" आकाङ्क्षा-योग्यता-आसत्ति-तात्पर्यैतच्चतुष्टयोपेतः पदसमूहो वाक्यमित्युच्यते । यथा—"गामानय" इत्यादिवाक्यानि आकाङ्क्षा-योग्यतादि-विशिष्टपदानां समूहरूपत्वेन लक्षणसंगतानि भवन्ति ।

महर्षिगोतमेनापि शब्दप्रमाणस्य लक्षणमुक्तम्—

"आप्तोपदेशः शब्दः" न्या० सू० १।१।७ ॥

वात्स्यायनेनाप्युक्तम्—

"आप्तः खलु साक्षात्कृतधर्मा । यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा । साक्षात्करणमर्थस्याप्तिः । तया प्रवर्तत इत्याप्तः । ऋष्यार्यम्लेच्छानां समानं लक्षणम्" ( न्यायभाष्यम् ) ।

एतस्यैव पुष्टिम् अन्नम्भट्टमहोदया अपि कुर्वंति—

"आप्तस्तु यथार्थवक्ता" ( तर्कसंग्रहे ) ।

**शब्दस्यद्वैविध्यकथनम्**

दृष्टार्थक-अदृष्टार्थकभेदेन शब्दप्रमाणस्य द्वैविध्यं वर्तते । अथवा एवमुच्यताम्—यत् लौकिक-वैदिकभेदेन शब्दप्रमाणस्य द्वैविध्यं वर्तते । लौकिकशब्दस्य तस्यैव प्रामाण्यं वर्तते यश्च आप्तपुरुषोच्चारितः । आप्तपुरुषस्य लक्षणन्तु प्रागुक्तमेवेति । अनाप्तपुरुषोच्चारिताः सर्वेऽपि शब्दा अप्रमाणभूता एव सन्ति इत्यत्र नास्ति लेशतोऽपि सन्देहावसरः ।

वैदिकस्तु शब्दः सर्वोऽपि प्रमाणभूत एवास्ति, प्रमाणभूतपुरुषोच्चरित्वात्, स च प्रमाणभूतः पुरुष ईश्वर एवास्ति नान्यः कश्चन । वेदस्य ईश्वरप्रणीतत्वेऽस्त्यनुमानप्रमाणम् । तथाहि—

"वेदः पौरुषेयः वाक्यत्वाद् भारतादिवत्"

यद्यद् वाक्यं भवति तत्तत् पुरुषप्रणीतं भवति। यथा भारतादीनां वाक्यरूपत्वेन वाक्यस्य च शब्दसमूहरूपत्वेन व्यासादिपुरुषप्रणीतत्वं वर्तते तथैव वशिष्टानुपूर्वीभाजः शब्दसमूहरूपवेदस्यापि परमेश्वरात्मकाप्तपुरुषप्रणीतत्वं नूनमभ्युपेयम्। स च ईश्वरः सर्वज्ञो नित्यो निर्दोषश्चेति तेन प्रणीतो वेदः सर्वथा प्रमाणमेव। लौकिकशब्दस्य दृष्टार्थकत्वमुच्यते, वैदिकशब्दस्य च कथ्यते। इह लोके यस्यार्थस्य प्रत्यक्षं भवति स दृष्टार्थः। यथा—ज्योतिषशास्त्रीयस्य ग्रहणविषयकवचनस्य दृष्टार्थकस्य याथार्थ्यं दृश्यते, यस्मिन् खलु देशे काले च ज्योतिषशास्त्रं तन्निर्दिशति तस्मिन्नेव देशे काले च तदनुभूयते।

एवमेव आयुर्वेदवचनस्यापि अर्थः प्रत्यक्षसिद्धोऽवलोक्यते। ईदृश एवार्थो दृष्टार्थत्वेन लौकिकत्वेन च व्यवह्रियते।

यस्य चार्थस्य इह लोके नास्ति कश्चन प्रत्यक्षानुभवः किन्तु प्रायेण पारलौकिकफलकः परलोकः एव प्रत्यक्षग्रहणार्हश्च सोऽदृष्टार्थत्वेनोच्यते, यतो इह लौकिकप्रत्यक्षेण वैदिकवाक्यानामर्थो नोपलभ्यतेऽतस्तानि अदृष्टार्थानि कथ्यन्ते।

शब्दप्रमाणविषये महर्षेर्गौतमस्येदं कथनम् वर्तते यत् यैराप्तपुरुषैर्महर्षिभिर्दृष्टार्थानि वाक्यानि रचितानि तैरेव महर्षिभिः अदृष्टार्थकवाक्यान्यपि प्रणीतानि सन्ति। तत्र यदि स्वार्थबोधकानामस्मदुपयोगिभूतानां दृष्टार्थवाक्यानामस्ति प्रामाण्यं तदा विनिगमनाविरहाददृष्टार्थकानामपि वाक्यानां प्रामाण्यमक्षुण्णं वेदितव्यम्। अतो यथा शास्त्रीयवाक्यानाम् आयुर्वेदशास्त्रीय

वाक्यानाञ्च अस्ति निष्कण्टकं प्रामाण्यं तथैव वेदवाक्यानामपि अस्त्येव प्रामाण्यम्। यस्य चानुभवपथारोहणमग्रे ध्रुवमेव। यथोक्तम्—

"मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यात्" (न्या० सू० २।१।६८)॥ अयमाशयः—सामान्येन शब्दप्रामाण्यस्य ये निरासहेतवोऽनृतत्व-व्याघातपुनरुक्तिप्रभृतयो दोषाः कथितास्तेषां निरासादेव शब्दभूतस्य वेदवाक्यस्यापि प्रामाण्यं सिद्धयति वाक्योपदेशकानां प्रामाण्यात्— मन्त्रायुर्वेदप्रामाण्यवत्। पुरुषस्य प्रामाण्ये सिद्धे एव तदुपदिष्टवाक्यस्य लोकेप्रामाण्यं सिद्धम् दृश्यते। किं वा—वेदवाक्यंप्रमाणम् आप्तवाक्यत्वात् मन्त्रायुर्वेदवाक्यवद् इत्येवमनुमानं तत्र मानम्। मन्त्राऽयुर्वेदयोर्यथा प्रामाण्यं दृश्यते लोके तथैव प्रामाण्यं वेदस्यापि निश्चेयमि तदर्थः। एवं च मन्त्रायुर्वेदप्रामाण्याधीनं वेदप्रामाण्यमिति सुस्पष्टं पर्यवस्यति। आयुर्वेदवाक्यस्य प्रामाण्यं यथा—इदम् औषधम् संसेव्य इदम् अपथ्यं च वर्जयित्वा जन इष्टं स्वास्थ्यम् प्राप्नोत्यनिष्टमामयागम् च निरुणद्धि इत्यायुर्वेदशास्त्रादवसाय तथा तथा सेवमानः परिहारं विदधानश्च इष्टेन युज्यमानोऽनिष्टेन च वियुज्यमानो भवतीति भवत्यायुर्वेदशास्त्रस्य प्रामाण्यम्। "विषं हर हर" "भूतबाधां हरे हरे इत्यादीनां मन्त्रवाक्यानां विषादिनिरासार्थानां मन्त्रशास्त्रोक्तरीत्या प्रयोगे कृते विषनिवृत्यादेरुपलब्धा मन्त्रवक्यानां प्रामाण्यं विज्ञेयम्।

तदित्थमाप्तानां प्रामाण्यमुपजीवति तदीयवचसां प्रामाण्यं तेषां च प्रामाण्यं किमात्मकमिति स्फुटोकृतं न्यायभाष्ये ऋषीणां वात्स्यायनेन। तथाहि—

"किं पुनराप्तानां प्रामाण्यम् ? साक्षात्कृतधर्मता-भूतदया यथार्थविख्यापयिषा इति—न्यायभाष्य द्वि० अ० स० ॥

साक्षात्कृतधर्मता—भूतदया, यथार्थचिख्यापयिषा-यथा अर्थस्तथा तदुपदेशेच्छा, इति त्रयमेव आप्तानां प्रामाण्यस्य कारणं वर्तते। साक्षात् कृतधर्माणो हि आप्ताः" इदं हातव्यम् इदमस्य हानिहेतुः, इदमस्याधिगन्तव्यम्, इदमस्याधिगमहेतुरित्येवं रूपेण भूतान्यनुकम्पन्ते। अर्थाद् मादृशोपदेशेन जीवानां दुखप्रदपदार्थानां परित्यागः संभवेद् यादृशेन च तेन आनन्दप्रदपदार्थानां प्राप्तिः स्यात् तादृशेन स्वकीयोपदेशेनानुगृह्णाहन्तिभूतानि (जीवानां= प्राणिनः) ये त एव आप्ताः तेषां हि प्राणिनां स्वयमनवबुद्धय-मानानामुपदेशातिरिक्तं नास्ति किमप्यवबोधकारणमिति। बोधं विना च इष्ट साधनेषु प्रवृत्तिः अनिष्टसाधनेभ्यो निवृत्तिश्च भवितुमशक्या। एतादृशप्रवृत्तिनिवृत्तिभ्यां विना च सुखं दुःखनि-वृत्तिश्च न संभवति। एतेषां जीवानां नान्यः कश्चन आप्तो पदेशातिरिक्त आप्तातिरिक्तो वास्ति उपकारकारणम् उद्धारकारणं वा। एवञ्च आप्तोपदेशः प्रमाणं, आप्तो वा प्रमाणम्।

त्रिविधं वाक्यं प्रमाणं भवति। लोके च बहवो व्यवहारा उपदेशाधीना एवेति तादृशव्यवहारजनकत्वाल्लौकिकवाक्यानां प्रमाण्यम् भवति। तच्चोपदेष्टु प्रामाण्याधीनमेव, अतश्च लौकिको-पदेष्टुरपि च प्रामाण्यं संपद्यते। यथा आप्ताः मन्वादय आयुर्वेद-प्रभृतीनां दृष्टार्थानां दृष्टाचार उपदेष्टारश्च सन्ति तथैव तदुपरि शक्तिशाली एव कश्चन वेदार्थानां द्रष्टा, वेदवाक्यानाञ्च प्रवक्ता भवितुमर्हति। अत आयुर्वेदप्रामाण्यवद् वेदस्यापि प्रामाण्यमनु-

मातव्यमिति भावः। अन्यथा वेदप्रामाण्याभावे आयुर्वेदादेरपि प्रामाण्यं न स्यादित्यर्थः। वेदाप्रामाण्येऽयमेव बाधकतर्कोऽपि उपस्थापयितुं योग्य इत्यपि बोध्यम्।

## वेदानामकर्तृत्वशङ्कानिरासः

यदि च वेदवाक्यानां प्रामाण्यं नित्यत्वादेव स्वीक्रियते न तु आप्तपुरुषप्रामाण्यात्, आप्तस्य कस्यापि वेदनिर्मातृत्वमेव नास्ति, अत आप्तप्रामाण्याद् वेदप्रामाण्यं भवतीति पूर्वकथनं न युक्तिसंगतं प्रतिभाति इत्युच्यते, तन्न समीचीनम्। शब्दस्य स्वार्थबोध-निरूपितं यत् प्रामाण्यं तत्प्रामाण्यं शब्दस्य = वाक्यस्य, वाचकत्वादेव भवितुमर्हति न तु नित्यत्वादिति, वाचकत्वेन प्रामाण्यं च आप्तप्रामाण्याधीनमेवेति न कश्चिद् दोषः। यदि च शब्दा नित्याः स्युस्तदा ततः पूर्वं संकेतकर्तुरभावापत्त्या सर्वेण शब्देन सर्वस्य पदार्थस्य बोधापत्त्या शब्दविशेषादर्थविशेषस्य प्रतीतिव्यवस्थैव नोपपद्येत, न चैतदिष्टम्—शब्दानांमनित्यत्वे तु ततः पूर्वं संकेतकर्तृ-पुरुषस्य संभवेन तादृशसंकेतानुसारेण बोधकत्वेन तादृशशब्दार्थ-व्यवस्थोपपद्यते इत्यर्थः।

यदि च वेदशब्दानामनित्यत्वेन वाचकत्वमेव नास्ति कथं तेषां प्रामाण्यं स्यादित्युच्यते तदाप्याह—अनित्यत्वे हि यस्य शब्दस्य संकेतो गृहीतः स तदानींमेव नष्टः, यश्चेदानीं बोधयित तस्य तु संकेत एव न गृहीतः इत्यनित्यत्वे अर्थबोधकत्वानुपपत्तिः। तन्न। लौकिकानामनित्यानामपि शब्दानामर्थविषयकबोधस्य जायमानत्वात् वाचकत्वमस्त्येवेति अनित्यत्वपक्षेऽपि वाचकत्व-

मुपपद्यते एवेत्यर्थः। यदि च नित्यत्वादेव शब्दः प्रमाणं स्यात्तदा अनाप्तपुरुषोपदिष्टशब्दस्यापि नित्यत्वेनप्रामाण्यं स्यादेवेति अनाप्तो-पदेशस्य अर्थविसंवादो न स्यात्, भवति चार्थविसंवाद इति न नित्यत्वात् शब्दस्य प्रामाण्यमपि तु आप्तपुरुषप्रामाण्यात् प्रामाण्यम् इत्येव युक्तं प्रतिभाति, एवं च अनाप्तोपदिष्टवाक्ये आप्तप्रामाण्या-भावादप्रामाण्यं तेन चार्थविसंवाद उपपद्यते। तथा च शब्दानां नित्यत्वे सर्वबोधापत्तिरूपदोषादनित्यत्वमेव युक्तमिति इत्यत आप्तप्रामाण्यादेव शब्दस्य प्रामाण्यं वर्तते इति भावः।

लोकेऽपि इदं दृश्यते यत् लौकिकशब्दानां संकेतानुसारेणैव अर्थविषयकबोधजनकत्वेन प्रामाण्यमस्ति न तु नित्यत्वेन तेषां प्रामाण्यम्। नित्यत्वेन यदि प्रामाण्यं स्यात्तदाऽनाप्तपुरुषवाक्य-स्यापि नित्यत्वापत्त्या प्रामाण्यं स्यात्, नचैतदुचितं प्रतिभाति इति पूर्वमेव निरूपितमस्माभिः।

इत्थं चेदं सिद्धं यल्लोके ये केचन अपि शब्दा आप्तैर्यत्रार्थे प्रयुज्यन्ते तादृशप्रयोगात्मकसंकेतसामर्थ्यात् तस्यैवार्थस्य प्रत्याय-कास्ते भवन्ति नान्यस्य कस्यचिदिति, नापि नित्यत्वात् प्रत्याय-कास्ते भवितुमर्हन्ति।

वैदिकसंप्रदायानुसारेण अतीतानागतेषु मन्वन्तरेषु युगान्तरेषु च वेदवाक्यानां पुनः पुनरुच्चारणरूपोऽभ्यासः वेदार्थभूतयागादीनां च यः प्रयोगस्तयोर्विच्छेदो न भवतीत्येतावन्मात्रेणैव वेदानां नित्यत्वं कथ्यते न तु शब्दानां नित्यत्वेन वेदानां नित्यत्वं प्राप्नोति। तथा चाप्तप्रामाण्यादेव प्रामाण्यमिति सिद्धं, तत्र सृष्टेरादौ भगवान् परमेश्वरस्तत्पश्चाच्च ऋष्यादयो वेदवाक्यान्युपदिशन्ति। ते चाप्ताः

प्रमाणभूताश्चेति तेषां स्वयं प्रामाण्यादेव वेदवाक्यानामपि प्रामाण्यं सिद्ध्यति। एवञ्च सिद्धं यद् आप्तप्रामाण्याधीनमेव प्रामाण्यं लौकिकेष्वपि शब्देषु वर्तत इति सर्वत्र वेदवाक्ये शास्त्रवाक्ये लौकिकवाक्ये च समानमेव प्रामाण्यम्। तथा चायुर्वेदप्रामाण्यवद् वेदवाक्यानामपि यदाप्तप्रामाण्यात् प्रामाण्यमित्युक्तं तत् सिद्धमिति नाप्रामाण्यं, नापि नित्यत्वादेव प्रामाण्यम् किन्तु आप्तप्रामाण्यादेव प्रामाण्यमित्यर्थः। वेदविषये न्यायवैशेषिकशास्त्राचार्याणामयमाशयो यद् वेदस्य ईश्वररूपाप्तपुरुषोच्चरितवाक्यरूपत्वेन प्रामाण्यं वर्तते। उदयनाचार्यन्नंभट्टप्रभृतिन्यायविदुषां मतेऽपि ईश्वरप्रणीतत्वेन वेदस्य प्रामाण्यमस्ति। अत एव नैयायिकाः शब्दानित्यत्ववादमाश्रयन्ति।

उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता।
सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते॥
(भाषापरिच्छेद-शब्दप्रकरणे)।

मीमांसकाश्च वेदस्यापौरुषेयत्वं मन्यमानास्तस्य नित्यत्वं व्यवस्थापयन्ति। नास्ति वेदस्य कोऽपि कर्त्ता येन वेदस्यानित्यत्वं स्यादिति। ऋषिमुनिप्रभृतयः प्राचीनाचार्यचरणाः मन्त्राणां नासन् रचयितारोऽपि तु द्रष्टार एवासन्। परन्तु उदयनाचार्यप्रभृतिन्यायविदुषामिदं कथनस्ति यत् 'तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे" इत्यादि वैदिकमन्त्रानुल्लिख्य इदमेव साधितं यत् मंत्रा निर्मिताः सन्ति अतो न अनादयः। तस्माद् वेदानामुत्पत्तिरीश्वरादेव जाता, नास्ति अकर्त्तृको वेदः।

## प्रमाणानां साफल्यम्

धमार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्षस्यैव प्राधान्येन निरूपिततया तस्य च संसारदुःखनिवृत्तिरूपत्वात् संसारदुःखानाञ्च हेयत्वेन असह्यत्वाद् न्यायमतानुसारेण मोक्षकारणीभूतज्ञान-संपत्त्यर्थं प्रमाणानां साफल्यमत्र दर्शयामः। प्रमेयपदार्थानां ज्ञानं प्रमाणाधीनत्वेन प्रामाणानाञ्च प्रामाण्यं न्यायमते परतः

अतः प्रथमं खलु प्रमाणानां प्रामाण्यं परतो निरूपयामः। तदुक्तम्—

"प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणम्" (न्यायदर्शनभाष्यम्)। प्रमीयतेऽनेनेति प्रमाणं प्रत्यक्षादि चतुष्टयम्, तस्माद्घट-पटादिपदार्थज्ञाने जाते सत्येव हानोपादा-नादिलक्षणा प्रवृत्तिर्जायते। प्रवृत्तिसामर्थ्यात् = प्रवृत्तिसाफल्यात्। इच्छाविषयीभूतपदार्थानामुपलब्धा प्रमाणानां साफल्यं निश्चीयते। एवञ्च प्रमाणानां तत्तद्विषयोपलब्ध्या प्रामाण्यनिश्चयो जायते इति परत एव प्रामाण्यं भवति। तद्विषयानुपलब्ध्या चाप्रामाण्य-ग्रहो जायत इति तेषामप्रामाण्यमपि परत एव सिद्ध्यति इत्यर्थः।

प्रमाणानां प्रामाण्यम् अप्रामाण्यञ्चेति द्वयमेव स्वतो जायत इति जैना वदन्ति। तन्न युक्तियुक्तं प्रतिभाति। यतो हि अप्रामाण्यस्यापि स्वत एव प्राप्त्या कुत्रापि प्रवृत्तिरेव न स्यात्। प्रवृत्तौ अप्रामाण्यज्ञानविधुरस्य इष्टसाधनताज्ञानस्य कृतिसाध्यता-ज्ञानस्य च कारणत्वेन तेषु अप्रामाण्यज्ञाने जाते प्रवृत्त्यनुपपत्तेः। "भोजनं मदिष्टसाधनमिति ज्ञानमप्रमा" इत्याकारकाप्रामाण्यज्ञाने जाते भोजने प्रवृत्तिरेव न स्यात्। "ह्रदो वह्न्यभाववान् इदं

ज्ञानमप्रमा" इत्येवमप्रामाण्यज्ञाने जाते तस्य हृदि वह्निमत्ता बुद्धौ प्रतिबन्धकस्वानुपपत्तिश्च स्यात्। एवं "वह्निव्याप्यधूमवान् पर्वत इदं ज्ञानमप्रमा" एवं रूपेणाप्रामाण्यज्ञाने जाते ततोऽनुमित्युत्पत्तेरनुपपत्तिरपि स्यात्। इत्येवं जैनसम्प्रदाये बहवो दोषा आपतन्त्यतस्तन्मतं सर्वथाऽश्रद्धेयमेवेति विभावनीयम्। अत एव प्रामाण्यं परतोऽप्रामाण्यञ्च स्वत एवेति वदतां बौद्धानां मतमपि न युक्तियुक्तं प्रतिभाति उक्तरीत्या प्रवृत्त्याद्यनुपपत्तिप्रसङ्गात्।

भट्टमतानुयायिनां मीमांसकानां मते प्रामाण्यं स्वतो ज्ञायते, अप्रामाण्यञ्च परत इति तेषामिदं मतमपि न साधु प्रतीयते। प्रामाण्याप्रामाण्ययोर्मध्ये एकस्य स्वतस्त्वमपरस्य च परतस्त्वमित्यत्र नियामकाभावात्। ज्ञानप्रामाण्यस्य स्वरूपत्वे ज्ञानग्रहणे साधर्मेव तद्ग्रहस्य सम्भवेन तद्ग्रहार्थं प्रवृत्त्यनुपपत्तेश्च। न हि स्वयं प्रकाशस्वरूपस्य प्रदीपस्य प्रकाशः प्रकाशान्तरेण प्रदीपान्तरेण वा कर्त्तुं शक्यते। भवति च प्रमान्यग्रहार्थे प्रवृत्तिः, तस्मात् प्रमाणानां प्रामाण्यं स्वत इति न युक्तं किन्तु प्रामाण्यमप्रामाण्यञ्चेति द्वयमेव परत एवेत्येव युक्तम्।

इदन्त्ववधातव्यम् यत् पदार्थे ज्ञानविषयीभूते सति तस्य पदार्थस्योपादादर्थंहानार्थं वा प्रवृत्तिर्जायते। तया प्रवृत्त्या तस्मिन् पदार्थे प्राप्ते अप्राप्ते वा जायमानस्य ज्ञानस्य प्रामाण्यमप्रामाण्यं वा निश्चीयते। यथा घटेन सह चक्षुषः सन्निकर्षे सति घटोपलब्ध्या घटज्ञानस्य प्रामाण्यं भवति। एवं यथा चात्मज्ञाने जायमाने सति संसारपरित्यागेनात्मज्ञानस्य प्रामाण्यं भवति। यत्र च प्रवृत्तेर्न फलाभिसम्बन्धो जायते तत्र तादृशफलानुपलब्ध्या

तादृशाज्ञानस्याप्रामाण्यं निश्चीयते। यथा शुक्तौ रजतज्ञानस्य रजतत्वज्ञानस्य वा।

## प्रवृत्तिसाफल्यप्रकारः

प्रमाणं विना न पदार्थविषयिणी प्रमितिर्जायते। प्रमाणस्यैव पदार्थविषयकप्रमितिहेतुत्वात्। पदार्थप्रमितिं विना च न प्रवृत्तिसाफल्यम्, अर्थात् घट-घटादिपदार्थविषयकयथार्थज्ञानमन्तरा फलोपलब्धिरेव न जायते। प्रवर्तमानपुरुषस्य पदार्थप्रमितेरेव फलोपलब्धिकारणत्वात्। तथा च प्रथमं प्रमाणेन पदार्थप्रमितिर्जायते, तदनन्तरं पदार्थानयनादौ प्रवृत्तिर्भवति, तत्पश्चात् फलोपलब्धिर्जायते इत्यस्ति क्रमः। अयं भावः—प्रमाणेन खलु अयं ज्ञाता पुरुषः प्रत्यक्षप्रमाणविषयीभूतं घटपटादिरूपमर्थं ज्ञात्वा तं पदार्थं ग्रहीतुमिच्छति, इयञ्च ग्रहणेच्छाऽपि तदैव जायते यदा स पुरुष "इदं मदिष्टसाधनम्" इत्याकारकज्ञानवान् भवति। यदि च "इदं मेऽनिष्टसाधनम्" इत्याकारकमनिष्टसाधनत्वप्रकारकं ज्ञानं तस्य जायते तदा तु स पुरुषस्तं पदार्थं जिहासति, एतादृशग्रहण-त्यागविषयिण्या इच्छाया अनन्तरमेव तादृशपदार्थस्य ग्रहणं त्यागो वा भवति, अस्ति चायं क्रमः जानाति—इच्छति-यतते इति। ईप्सा-जिहासाप्रयुक्तस्यैव तस्य ज्ञातुः पुरुषस्य ग्रहणानुकूला त्यागानुकूला वा चेष्टाप्रवृत्तिर्जायते। अस्या प्रवृत्तेर्यः फलेनाभिसम्बन्धः = अविसंवादित्वम् = फलप्रदत्वम्, तदेव सामर्थ्यम् = प्रवृत्तिसामर्थ्यमित्युच्यते। प्रवर्त्तमानः पुरुषस्तं प्रमितिविषयीभूतं पदार्थमभीप्सन् तद्ग्रहणेच्छायां सत्यां तादृशं घट-पटादिरूपं पदार्थं प्राप्नोति किं वा जिहासन् तत्त्यागेच्छायां तं पदार्थं

स्त्यजति। तथा च पादार्थविषयिण्या यथार्थप्रतिपत्त्यैव प्रवृत्ति-सामर्थ्यं ज्ञायते, पदार्थप्रतिपत्तिश्च प्रमाणेनेव भवतीतिभावः। प्रवृत्तिसामर्थ्येन = प्रवृत्तिसाफल्येन प्रामाण्यग्रहो जायते। प्रवृत्त्य-सामर्थ्येन च अप्रामाण्यग्रहो भवति इत्यर्थादेव आयाति यत् प्रामाण्याप्रामाण्ययोर्द्वयोरपि परतस्त्वं सिद्धमित्यर्थं। स च कश्चित् पदार्थः सुखरूपः, यथानुकूलपदार्थसम्बन्धजन्य आत्मधर्मविशेष आनन्दापरपर्यायः प्राणिमात्रप्रसिद्धः। कश्चित् पदार्थः तादृश-सुखस्य कारणीभूतो भवति, यथाऽनुकूलाः शब्दस्पर्शरूपरस-गन्धादयो वर्तन्ते। कश्चिच्च पदार्थः प्रतिकूलः दुःखरूपोऽपि भवति। यथा—प्रतिकूलपदार्थसम्बन्धजन्यः क्लेशापरपर्यायः प्राणिमात्रप्रसिद्धः। कश्चित् तादृशदुःखस्य कारणीभूतोऽपि भवति। यथा च योगसूत्रेऽपि उल्लिखितं वर्तते—यत् प्रतिकूलाः सन्त इमे शब्दस्पर्शरूपरसगन्धादयः प्राणिमात्रस्य विवेकदृष्ट्या अस्मिन्नसारे संसारे दुःखजनकीभूता एव भवन्ति। एभ्यः पदार्थेभ्यः प्राणिमात्रस्य बहुलं दुःखमुपलभ्यते। तदुक्तम्—

"परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः"। योगसूत्रम्।

इमे पदार्था एव प्राणिनां दुःखकारणीभूताः सन्तीति निश्चीयते। सांसारिका भासमानाः सर्वेऽपि पदार्था दुःखरूपाः, केचन दुःखजनकीभूता वा सन्तीति भावः।

सोऽयं प्रमाणविषयीभूतः पदार्थः अपारसंख्येयः गणनातो बहिर्भूतोऽस्ति अनन्तत्वात्। प्राणभृतां जीवानां अनन्तत्वेन तद्वेद्यसुख-दुःखादिपदार्थानामपि आनन्त्यमस्त्येवेति भावः।

## ज्ञानप्रामाण्यस्य फलमाह

ज्ञानप्रामाण्ये सत्येव प्रमाता, प्रमेयं, प्रमितिरिति अर्थवन्ति-सफलानि भवन्ति। तत्र प्रमाता जीवो ज्ञातपदार्थोपलब्ध्या सफलप्रवृत्तिमान् भवति। तत्र च तत् प्रमेयम् उपलब्धिकर्मत्वात् सफलं भवति। प्रमितिश्च प्रमेयवस्तुप्रकाशकत्वात् सफला भवति। एतदेव हि एषां साफल्यम्। ज्ञानस्य प्रामाण्याभावे न प्रमातुः प्रामाण्यं सेत्स्यति, नापि प्रमाणस्य प्रामाण्यं सिद्धं भविष्यति, नापि प्रमेयस्य प्रमेयत्वम्। तथा च सर्वमपि अव्यवस्थितं स्यादित्यर्थः। यथा शुक्तौ "इदं रजतम्" इति ज्ञानकाले ज्ञातं रजतं तत्र नास्ति इति शुक्तिरजतज्ञानस्य प्रामाण्यं न विद्यते, न वा ज्ञात्रादीनां तत्र साफल्यं वर्तते। तथा च सिद्धं यत् प्रमात्रादीनां साफल्यं ज्ञानप्रामाण्याधीनमेवेत्यर्थः।

सप्रमाता येन प्रत्यक्षादिना पदार्थं प्रमिणोति—यथार्थरूपेण जानाति तत् प्रमाणम्। यच्च प्रमाणेन ज्ञायते तत् प्रमेयम्। शुक्तिरजतादीनां प्रमेयत्वं निरस्तं भवति। प्रमाणजन्यमात्मसमवेतं यद् पदार्थं पदार्थज्ञानं पौरुषेयं ज्ञानं तत् प्रमितिः। इह लोके ये केचन अपि पदार्थाः सन्ति तेषु हलोके ये पदार्थाः प्रमितेषु पदार्थेषु कश्चिदस्ति प्रमाणता, प्रमेयं वा प्रमाणं वा प्रमितिर्वा स्यात्, नहि एतेभ्यो भिन्नमस्ति किमपि इति नार्थान्तरमस्ति यथा "घटमहं" इत्यत्राहम्पदार्थः प्रमाता, घटश्च प्रमेयः, "ज्ञा" धात्वर्थः प्रमितिः, तादृशप्रमितेर्जनकं प्रमाणमित्युच्यते। एतद रिक्तं किमप्यवशिष्टं नास्ति यस्योक्तिप्रमात्रादिचतुष्टयातिरिक्तत्वं स्यादिति। एवमेव अन्यत्रापि पदार्थानां सर्वेषामत्रैव प्रमात्रादिषु चतुर्ष्वेव अन्तर्भावो बोध्यः।

## एतेषां पदार्थानां स्वरूपं किम् ?

सतश्च घट-पटादिपदार्थस्य यः सद्भावः = सत्त्वम् वर्तमानत्व-मेव तत्त्वम् = स्वरूपं विज्ञेयम् । असतश्च पुत्रादौ वन्ध्यीयत्वादेः-योऽसद्भावः = असत्त्वम् = अवर्तमानतं तदेव तत्त्वं स्वरूपं भवति । सद् घटादिकं सदिति सत्त्वेन रूपेण गृह्यमाणम् अस्तित्वस्वरूपेण विशिष्टं सदेव व्यवह्रियते, तदेव अविपरितं तत्त्वं, तद् असन्न भवतीत्यर्थः । अतः सतः सत्त्वमेव स्वरूपम् । असच्च पुत्रादौ वन्ध्यीयत्वादिकम् नास्ति इत्येवं रूपेण गृह्यमाणं यथाभूतमविपरीतं तत्त्वमसदेव भवति, अर्थात् तत् सन्न भवतीति असतोऽसत्त्वमेव स्वरूपम् भवति ।

ननु असतस्तर्हि कथं प्रमाणेनोपलब्धिः स्यात्तु प्रमाणानामसत्-पदार्थग्रहकत्वाभावात्, असत्पदार्थस्य प्रमाणैरग्रहणे चासतोऽ-सत्त्वमेव स्वरूपमस्तीति निरूपयितुं न शक्यते इति चेन्न । प्रदीपेन यथा विद्यमाना घट-पटादयः प्रकाश्यन्ते अविद्यमानाश्च मठादयो न सन्तीत्येवं रूपेण प्रकाश्यन्ते तथैव प्रत्यक्षादिना प्रमाणेन सत्ताविशिष्टे पुत्रादावुपलभ्यमाने सत्यपि पुत्रादिवत् पुत्रादौ वन्ध्यीयत्वाद्यनुपलब्धेः पुत्रादौ वन्ध्यीयत्वादिकं नास्ति, इत्येवं रूपेण प्रमाणेन असतोऽपि उपलब्धिर्भवति इति ज्ञायते । तदुक्तम्—"यथा दर्शकेन दीपेन दृश्ये गृह्यमाणे तदिव यन्न गृह्यते तन्नास्ति, यद्यभविष्यत् इदमिव व्यज्ञास्यत, विज्ञानाभावान्नास्तीति, तदेवं सतः प्रकाशकं प्रमाणमसदपि प्रकाशयति इति । (न्यायभाष्यम्) ।

अयमाशय :—यथा प्रदीपेन तेजसा दृश्ये घट-पटादौ गृह्यमाणे सति गृह्यमाणघटादिवत् यत् पटादिकं न ज्ञायते तत् पटादिकमत्र

नास्ति इति निश्चीयते। यदि "अत्र पटोऽभविष्यत् तदा घटादिकमिव विज्ञायेत, न विज्ञायते, अतो ज्ञानाभावाद् अत्र पटो नास्तीति प्रमीयते। तदेवं प्रदीपादिवदेव सतः पुत्रादेः प्रकाशकं प्रमाणमसदपि पुत्रादौ वन्ध्यीयत्वादिकं प्रकाशयति। यदि पुत्रादौ वन्ध्यीयत्वं स्यात् तदा प्रमाणेन पुत्रे गृह्यमाणे तस्य वन्ध्यीयत्वमपि गृह्येत, न च गृह्यते इति ग्रहणाभावान्नास्ति पुत्रादौ वंध्यीयत्वमिति प्रमीयते, अतोऽनेनेदं निश्चीयते यत् सतः प्रकाशनार्थं प्रवृत्तेन प्रमाणेनैव असदपि नास्तीत्येवं रूपेण प्रकाश्यते।

---

## शब्दप्रमाणस्य भेदाः

### तत्र विधिस्तावत्

तत्र प्रमाणशब्दात्मको वेदः पञ्चविधः। विधिमन्त्रानामधेय-निषेधार्थवादरूपः, प्रयोजनवदर्थविधानेनार्थवान् विधिः। स च विधिः अप्राप्तमर्थं विधत्ते। यथा "अग्निहोत्रं जुहुयात् स्वर्गकामः" इति विधिरप्राप्तं प्रयोजनाद्धर्मं विधत्ते। अग्निहोत्रहोमेन स्वर्गं भावयेत्। यत्र तु कर्मप्रकारान्तरेण प्राप्तं तत्र कर्मोद्देशेन गुणमात्रं विधत्ते। यथा दध्ना जुहुयात्" इत्यत्र होमस्य "अग्निहोत्रं जुहुयात्" इत्यनेन प्राप्तत्वाद्धोमोद्देशेन दधिमात्रविधानम्। दध्ना होमं भावयेदिति। यत्र तु उभयप्राप्तं भवति तत्र स्थले विशिष्टस्य विधानं क्रियते। यथा "सोमेन यजेत" इत्यत्र सोमयागयोरप्राप्तत्वात् सोमविशिष्ट यागविधानम्। सोमवता यागेन इष्टं ( स्वर्गं ) भावयेत्। न चोभयविधाने वाक्यभेदः, विशिष्टस्यैकत्वात्। विशिष्टविधौ च मत्वर्थलक्षणा। यथा सोमपदेन मत्वर्थो लक्ष्यते सोमवता इति। न हि मत्वर्थलक्षणां विना सोमस्यान्वयः संभवति। यदि च तावत् सोमयागयोरैक्यरूपेणैव भावनायामन्वयः करणत्वेनैव क्रियते, यथा—"सोमेन यागेनेष्टं भावयेत्" इत्यादिरूपेण, तथा सति उभय विधाने वाक्यभेदः स्यात्। सोमस्य

यागवत् फलभावनाकरणत्वेन प्राधान्यापातश्च स्यात्। तथा च सोमस्य यागार्थत्वानुपपत्तिः, यागे द्रव्यानुपपत्तिश्च स्यात्, सामानाधिकरण्येनान्वये इमे दोषाः बोध्या इति भावः।

इष्टसाधनताबोधकप्रत्ययसमभिव्याहृतवाक्यं विधिः।

(गुरुमुखात् श्रुतम्)

इष्टसाधनताबोधकप्रत्ययघटितं यद्वाक्यं तद्वा विधिः। इष्टसाधनताबोधकाः प्रत्ययाः लिङ्०-लोट्-तव्यत्-कृत्-इत्यादयो बोध्याः। यथा—"ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्येतादृशवाक्यघटकलिङ् प्रत्ययः ज्योतिष्टोमनामके यागे स्वर्गरूपेष्टस्य साधनतां बोधयति। अतएव इदं वाक्यं लिङ्-प्रत्ययघटितत्वेन विधिवाक्यमुच्यते।

अत्रेदं बोध्यम्-विधिर्विधायकः प्रमाणशब्दः अमश्च विधिब्राह्मणभागः। अभिधैवाप्यत्रलिङर्थो विज्ञेयः। सैव च प्रवृत्तिहेतुरपि। यतो हि इष्टसाधनत्वादिरूपोऽर्थो विध्यर्थः। यद्वाक्यं विधायकत्वेन चोदकत्वेन चाभिमतं तदेव विधिः। नियोगोऽनुज्ञा वा विधपदाभिधेयः। यथा—"अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादि इष्टसाधनबोधकप्रत्ययसमभिव्याहृतवाक्यम्। विधीयते विधिशब्देन प्रतिपाद्यतेऽसौ विधिरिष्टसाधनतदिः, तस्याभिधायको-वाचकः इति। अथवा अर्थविशेषाभिधायकः प्रत्ययः एव विधिः। स च प्रत्ययः लिङ्-लोट्-तव्यत् प्रत्ययप्रभृतिस्वरूप इत्यादिः। यथा च ज्योतिष्टोमेन यजेत स्वर्गकामः" "ओदनकामस्तण्डुलं पचेत्" अत्र ज्योतिष्टोमनामको यागो मदिष्टसाधनमिति। एवं तण्डुलकर्मकः पाक ओदनरूपेष्टसाधनम् वाक्यार्थः।

यजेत-पचेत् इत्यादि विधिप्रत्ययेनेष्टसाधनत्वोपस्थापनादित्यर्थः।

कर्मप्रधानवादिनो मीमांसका इत्थं वदन्ति यद् अज्ञातार्थज्ञापको वेदभागो विधिः। स च विधिस्तादृशप्रयोजनवदर्थविधानेनार्थवान् भवति। प्रमाणान्तरेणाप्राप्तं तादृशञ्चार्थं विधत्ते। यथा—अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यादि, इत्यत्रायं विधिर्मानान्तरेणाप्राप्तं स्वर्गप्रयोजनवद्धोमं विधत्ते। अग्निहोत्रनामकेन होमेन स्वर्गं भावयेदित्यादिः। यत्र च कर्म प्रमाणान्तरेण प्राप्तं भवति तत्र तदुद्देशेन गुणमात्रस्य विधानं क्रियते। यथा—"दध्ना जुहोति"। अत्र होमस्य "अग्निहोत्रं जुहुयात्" इत्यनेन प्राप्तत्वात्तदुद्देशेन दधिमात्रविधानं भवति, दध्ना होमं भावयेदिति। यत्र चोभयमप्राप्तं भवति तत्र विशिष्ट विधानं भवति, यथा "सोमेन यजेत" इत्यत्र सोमयागयोरुभयोरप्राप्तत्वात् सोमविशिष्टयागविधानं क्रियते। विशिष्टविधानञ्च सोमपदे मत्वर्थलक्षणया कर्त्तव्यम्, सोमवता यागेनेष्टं भावयेदिति। केषाञ्चित् शास्त्रकाराणामयं व्याहारः अज्ञातस्यानुष्ठेयत्वकथनं विधिशब्दार्थः। एवम् धर्मार्थसाधकव्यापारोऽपि विध्यर्थः।

सामान्यतोऽयं विधिर्द्विविधौ लौकिको वैदिकश्चेति। लौकिकस्तु "ओदनकामस्तण्डुलं पचेत्" इत्यादिः। वैदिकविधिस्तु—"स्वर्गकामो यजेत्" इत्यादिः। प्रकारान्तरेण चायं विधिस्त्रिविधो वर्तते, अपूर्वविधिः नियमविधिः—परिसंख्याविधिश्चेति। तथाचोक्तं भट्टमहोदयैः—

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते॥

—मीमांसान्यायप्रकाशः, पृ० ४६॥

तत्र चापूर्वविधिश्चतुर्विधः—उत्पत्तिविधिः, विनियोगविधिः, प्रयोगविधिः, अधिकारविधिश्च।

तत्र कर्मस्वरूपमात्रज्ञापकं विधिवाक्यमुत्पत्तिविधिः। यथा "स्वर्गकामोऽश्वमेधेन यजेत "इत्यादिवाक्यम्। एवं "अग्निहोत्रं जुहोति" अत्र विधौ कर्मणः करणत्वेनान्वयः, अग्निहोत्रहोमेनेष्टं भावयेदिति। एतदुपलक्षणम्—"सोमेन यजेत" तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्। यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति" इत्यादीनाम्। तथा च तत्र द्वितीयाध्याये कर्मोत्पत्तिविधीनामेव भेदो निरूपितः। अत्राप्युत्पत्तिविधिलक्षणप्रदर्शनेनैव तेषां भेदोऽपि ध्वनितः एवं शब्दान्तरादिभिर्हेतुभिः।

## विनियोगविधेः स्वरूपम्

अङ्गप्रधानसम्बन्धबोधको विधिर्विनियोगविधिः। यथा—"दध्ना जुहोति" स हि तृतीयया प्रतिपन्नाङ्गभावस्य "दध्ना होमसम्बन्धं विधत्ते दध्ना होमं भावयेदिति"। अर्थात् विनियोगविधिस्तृतीयया प्रतिपन्नाङ्गभावस्य दध्यादेरग्निहोत्रं जुहोतीति विहितहोमसम्बन्धं विधत्ते इत्यर्थः।

ननु "दध्ना होमं भावयेत्" "होमेनेष्टं भावयेत्" इति साध्यत्वेन करणत्वेन च होमस्यान्वयो भवेत्, तथा च विरुद्धत्रिकद्वयापत्तिः स्यात्। तथाहि—दध्ना जुहोतीत्यत्र सकृदुच्चरितस्य जुहोतीत्याख्यातस्य दधिरूपगुणे किञ्चिदिष्टे च तन्त्रेण सम्बन्धाङ्गीकारेसत्युपादेयत्वं विधेयत्वं गुणत्वं, चेत्येकं त्रिकम्, उद्देश्यत्वम्, अनुवाद्यत्वम्, प्राधान्यं चेत्यपरं त्रिकम्, होमे कथं

संपद्यते ? शृणु–फलमुद्दिश्य होम उपादीयते फलमनूद्य होमो विधीयते। फलं प्रधानं होम उपसर्जनम्। एवं होममुद्दिश्य दध्युपादीयते होममनूद्य दधि विधीयते। होमः प्रधानं दध्युपसर्जनम्। ततश्च होमे फलापेक्षमुपादेयत्वं गुणत्वम्, दधिरूपगुणापेक्षया चोद्देश्यत्वमनुवाद्यत्वं प्राधान्यं च संपद्यते। न चात्र न तन्त्रेण सम्बन्धः किन्तु पृथक् होमावृत्त्या सम्बन्धो भवति इति वाच्यम् वाक्यभेदप्रसङ्गात्, दध्ना होमं भावयेत्, होमेन चेष्टं भावयेत् इति वाक्यद्वयप्राप्तेः। तस्मान्न दधि शब्दो गुणपरः इति चेत् न। भ्रान्तिमत्त्वात्, तथाहि यत्र हि साध्यत्वेन करणत्वेन चैकस्य युगपत्तन्त्रेण सम्बन्ध आशङ्क्यते तत्रैव विरुद्धत्रिकद्वयस्य प्रसक्तिर्भवति, इत्यादिकममन्यत्राप्यूह्यमिति संक्षेपः।

यद्यपि गुणविधौ च धात्वर्थस्य साध्यत्वेनान्वयो भवति। तथापि क्वचिदाश्रयत्वेनापि जायते। यथादध्नेन्द्रियकामस्य जुहुयात् इत्यत्र दधिकरणत्वेनेन्द्रियं भावयेत्। तच्च किं निष्ठमित्यकांक्षायां सन्निधि प्राप्तहोम आश्रयत्वेन सम्बध्यते।

एतावानस्ति अत्र विशेषो यदेतस्य विधेः सहकारिभूतानि सन्ति षट् प्रमाणानि। तानि च श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यारूपाणि। एतत् प्रमाणषट्कसहकृतेन अनेन विनियोगविधिनाऽङ्गत्वं परोद्देशप्रवृत्तकृतिसाध्यत्वरूपं पारार्थ्यापरपर्यायं ज्ञाप्यते।

## प्रयोगविधेः स्वरूपविचारः

साङ्गप्रधानकर्मप्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः। स च प्रयोगविधिः प्रयाजाद्यङ्गजातवाक्यैकवाक्यतापन्नो 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादि प्रधानविधिरेव। स हि

साङ्गं प्रधानमनुष्ठापयन् विलम्बे प्रमाणाभावादविलम्बापरपर्यायं प्रयोगप्राशुभावं विधत्ते। न च तदविलम्बेऽपि प्रमाणाभाव इति वाच्यम्। विलम्बे हि अङ्गप्रधान विध्येकवाक्यतावगततत्साहित्यानुपपत्तिः। विलम्बेन क्रियमाणयोः पदार्थयोरिदमनेन सहकृतमिति साहित्यव्यवहाराभावात्। स चाविलम्बो नियते क्रमे प्राश्रीयमाणे भवति। अन्यथा हि किमेतदनन्तरमेतत् कर्त्तव्यमेतदनन्तरं वेति प्रयोगविक्षेपापत्तेः। अतः प्रयोगविधिरेव स्वविधेयप्रयोगप्राशुभावसिद्धयर्थं नियतं क्रममपि पदार्थविशेषणतया विधत्ते। अत एवाङ्गानां क्रमबोधको विधिः प्रयोगविधिरित्यपि लक्षणं भवितुमर्हतीति भावः।

अत्रेदं बोध्यम्—विधिर्नाम विधिप्रत्ययार्थः। विधीयते विधिशब्देन प्रतिपाद्यतेऽसौ विधिरिष्टसाधनत्वादिः। स च प्रवर्तकज्ञानविषयो धर्मः। अयं च धर्मो जरन्नैयायिकानां नये कृतिसाध्यत्वे सति बलवदनिष्टाननुबन्धित्वविशिष्टसाधनत्वरूपः। यदा च पुरुषः मधुविषसंपृक्तान्नभोजनं बलवदनिष्टाननुबन्धत्वेन जानाति–तदैव स पुरुषः प्रवर्तते इति विज्ञेयम्। 'न कलज्जं भक्षयेत्' इत्यादौ नञा बोध्यमानो विशिष्टाभावः कृतिसाध्यत्वविशिष्टबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाभाव रूपःविशेष्यवति विशेषणाभावे विश्राम्यतीति। एतेषां नये श्येनस्य हिंसारूपत्वं नास्ति इति 'श्येनेनाभिचरन् यजेत्' इत्यादौ बलवदनिष्टाननुबन्धित्वरूपो विध्यर्थो बोध्यते। यथा 'ओदनकामः पचेत्" "स्वर्गकामो यजेत"-त्यादौ ओदनस्वर्गादिरूपं यत्फलं तत्साधनत्वं पाक-यागादि क्रियायां ज्ञायते इत्यर्थः।

नव्यनैयायिकैस्तु प्रवृत्तिकारणीभूतचिकीर्षायां यत्प्रकारकज्ञानस्य हेतुत्वं वर्तते तस्यैव विधित्वं स्वीक्रियते। कृतिसाध्यताप्रकारकज्ञानेन चिकीर्षा जायते तया च प्रवृत्तिरुत्पद्यते इति तु समुदितार्थः। तादृशं च कृतिसाध्यत्वम्, इष्टसाधनत्वम्, बलवदनिष्टाननुबन्धित्वं च प्रत्येकमेव। यथा यजेत, पचेतेत्यादौ तिङर्थः। कृतिसाध्यत्वादिपदानां प्रयोजनं कथ्यते। 'तृप्तिकामो जलं न ताडयेत्' इत्यादौ जलताडनादेस्तृप्तिकामेष्टसाधनत्वस्य निषेधान्वयानुपपत्त्या इष्टसाधनत्वं लिङर्थोऽवश्यं स्वीकर्त्तव्यः।

उदयनाचार्यास्तु आप्ताभिप्रायं विध्यर्थं प्रोक्तवन्तः। तदर्थश्च आप्तस्य परमेश्वरस्य अभिप्राय इच्छा लिङादिना बोध्यते। अत्रोक्तमुदयनार्यैः यस्तु वेदे ईश्वरप्रणीतत्वं नाभ्युपैति तं प्रति विधिरेव तावद्गर्भः श्रुतिकुमार्याः पुंयोगे मानमिति।

अथवा वक्त्रिच्छाविषयत्वं विधेरर्थः। यथा "घटमानय" इत्यादौ लोटोऽर्थो विधिः। अत्र घटकर्मकमदिच्छाविषयानयनानुकूलकृतिमांस्त्वम् इत्यन्वयबोधः। अत्रेदं विचारणीयम् "यजेत स्वर्गकामः," "न कलञ्जं भक्षयेत्" इत्यादौ यागः स्वर्गकामकर्त्तव्यत्वेनाप्ताभिप्रायविषयः, कलञ्जभक्षणं कर्तव्यत्वेनाप्ताभिप्रायविषयो न इति वाक्यद्वयार्थबोधः। यागादौ चाप्ताभिप्रायविषयत्वेनेष्टसाधनत्वादिकमनुमाय प्रवृत्तिः। कलञ्जभक्षणादौ चाप्ताभिप्रायविषयत्वाभावेनानिष्टसाधनत्वमनुमाय निवृत्तिः, इत्यादिरूपेणैव सर्वत्र विध्यर्थो विज्ञेयः।

## अधिकारविधिविवेचनम्

कर्मजन्यफलस्वाम्यबोधको विधिरधिकारविधिः। कर्मणः फलसम्बन्धबोधको विधिरधिकारविधिरित्यपि लक्षणं

भवितुमर्हति । कर्मजन्यफलस्वाम्यं कर्मजन्यफलभोक्तृत्वम् । स च "यजेत स्वर्गकामः" । इत्यादिरूपः । अत्र स्वर्गमुद्दिश्य यागे विदधताऽनेन स्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते । "यस्याहिताग्नेरग्निगृंहान् दहेत् सोऽग्नये रक्षामवतेऽष्टाकपालं निर्वपेत्" इत्यादिनाऽग्निदाहादौ निमित्ते कर्म विदधता निमित्तवतः कर्मजन्यपापक्षयरूपफलस्वाम्यं प्रतिपाद्यते । एवम् "अहरहः सन्ध्यामुपासीत" इत्यादिना शुचिकालविहितजीविनः पुरुषस्य संध्योपासनात्मककर्मजन्यप्रत्यवायपरिहाररूपफलस्वाम्यं बोध्यते । तच्च फलस्वाम्य तस्यैव योऽधिकारविशिष्टः, अधिकारश्च स एव यद्विधिवाक्येषु पुरुषविशेषणत्वेन श्रूयते । यथा काम्ये कर्मणि फलकामना, नैमित्तिके कर्मणि निमित्तनिश्चयः, नित्ये सन्ध्योपासनादौ शुचिविहितकालजीवित्वम् । अत एव राजसूयेन स्वराज्यकामो यजेत" इत्यनेन विधिवाक्येन स्वाराज्यमुद्दिश्य विधतापि न स्वाराज्यमात्रकामस्य तत्फलभोक्तृत्वं प्रतिपाद्यते । किन्तु राज्ञः सतः स्वाराज्यकामस्यैव, अधिकारिविशेषत्वेन श्रवणात् ।

क्वचित्तु पुरुषविशेषणत्वेना श्रुतमपि अधिकारिविशेषणम् । यथा—अध्ययनविधिसिद्धा विद्या, क्रतुविधीनामर्थज्ञानापेक्षणीयत्वेन अध्ययनविधिसिद्धार्थज्ञानवन्तं प्रत्येव प्रवृत्तेः ।

एवमग्निसाध्यकर्मसु आधानसिद्धाग्निमत्ता । अग्निसाध्यकर्मणामग्न्यपेक्षत्वेन तद्विधीनानसिद्धाग्निमन्तं प्रत्येव प्रवृत्तेः । अनेन च निरुक्ताधिकारविशेषणेन शूद्रस्य यागेऽनधिकारो ध्वनितः । तस्याध्ययनविधिसिद्धविद्याया अभावादाधानसिद्धाग्निमत्ताया अभावाच्च ।

किञ्च वेदाध्ययने उपनीतस्यैवाधिकारविधानादुपनयनेऽपि च अष्टवर्षं ब्राह्मणमुपनयीत', इत्यादिना त्रैवर्णिकस्यैवाधिकाप्राप्तेः। अग्न्याधानेऽपि" वसन्ते ब्राह्मणोऽग्नीनादधीत" इत्यादिना त्रैवर्णिकमात्रस्याधिकारविधानाच्च। यद्यपि "वर्षासु रथकारोऽग्नीनादधीत" इत्यनेन रथकारस्य सौधन्वनापरनाकस्याग्न्याधानं योगाद् रूढेर्बलीयस्त्वात्। तथापि नास्योपरकर्मस्वधिधारस्तस्याध्ययनविधिहिविद्याया अभावादित्यर्थः। ननु तत्र रथं करोतीति योगव्युत्पत्त्या त्रैवर्णिक एव रथकारो ननु शूद्रस्य तत्रास्ति अधिकारस्तस्य रथकारत्वाभादिति चेन्न। संकीर्णजातिविशेषे 'रथकार' शब्दस्य रूढत्वात्। तथाहि वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः शूद्रायां वैश्यादुत्पन्नः करणी। तस्यां करण्यां माहिष्यादुत्पन्नो रथकारः। तथा च याज्ञवल्क्यः—"माहिष्येण करण्यां तु रथकारः प्रजायते" इत्यादिः। तस्मान्न तादृशयोगव्युत्पत्त्या त्रैवर्णिको "रथकार" शब्देन ग्रहीतुं शक्यत इति।

अपि च कुत्रचिद् यागेऽपि कस्यचिच्छूद्रस्याधिकारो भवतीति दृश्यते "वास्तुमयं रौद्रं चरुं निर्वपेत्" इति प्रकृत्य "एतया निषादस्थपतिं याजयेत्" इति श्रवणात्। वास्तुशब्दः किञ्चित्-प्रकृतिद्रव्यविशेषमाह। एतस्यामिष्टौ अधिकारी निषादस्थपतिशब्दवाच्यस्त्रैवर्णिक एव। कुतः? निषादानां स्थपतिरिति षष्ठीसमासस्य त्रैवर्णिके सम्भवात्। तस्याधीतवेदत्वेन विद्याप्राप्तिसंभवाच्चेति प्राप्ते वयं ब्रूमः—निषादश्चासौ स्थपतिश्चेति कर्मधारयसमासस्य मुख्यत्वान्न षष्ठीसमासेन त्रैवर्णिको "निषादस्थपति" शब्दार्थः। षष्ठीसमासे तु संकीर्णजातिविशेषवाचिना

निषादशब्देन तत्सम्बन्ध उपलक्ष्येत, नत्वयं कर्मधारयेऽस्ति कश्चन दोषः। तस्मात् तात्कालिका चार्योपदेशादिना विद्यां संपाद्य धनिको निषादो रौद्रं यागं कुर्यादिति सिद्धान्तः पन्थाः।

पूर्ववद् एतेषां नयेऽपि विधिप्रेरणाप्रवर्तनादिशब्दाभिधेयः प्रवृत्त्यनुकूलव्यापारो विध्यर्थः। 'गामानय' इत्येवमाचार्यवचः श्रवणानन्तरं शिष्यप्रवृत्तिदर्शनात् शाब्दप्रवृत्तौ प्रवर्तनाज्ञानं हेतुः। सा च प्रवर्तना "पचेत" इत्यादिलौकिकवाक्ये पुरुषनिष्ठोऽभिप्रायविशेषः।

"यजेत" इत्यादिवैदिकवाक्ये तु पुरुषाभावाच्छब्दनिष्ठैव। न च ईश्वरकर्तृकत्वं वेदस्य ईश्वरस्यैवानभ्युपगमात्। शब्दवृत्तित्वादेव च शब्दनिष्ठा भावना इत्युच्यते, सा च लिङ्त्वांशेन अभिव्यज्यते। अर्थनिष्ठा भावना तु प्रवृत्त्यादिरूपा। सा चाख्यतत्त्वांशेनोच्यते। तदुक्तम्—

अभिधां भावनामाहुरन्यामेव लिङादयः।
अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरा॥

म० प्र० ४– पृ० ५८॥

अयमभिप्रायः—"स्वर्गकामो यजेत" इत्यादौ लिङादिप्रत्यये अंशद्वयं वर्तते, आख्यातत्वं—लिङ्त्वञ्च। तत्राख्यातत्वांशेन प्रवृत्त्याख्यो यागकर्तृपुरुषनिष्ठो व्यापारो बोध्यते। अयमेव अर्थभावनाशब्देन व्यपदिश्यते। लिङ्त्वांशेन च प्रवर्तनाख्यः शब्दनिष्ठो व्यापारोऽभिधीयते।

प्राभाकरास्तु कार्यतामात्रं विध्यर्थः। तच्च कृतिसाध्यत्वम्। तथाहि—यद्विषयिणी बुद्धिः प्रवृत्तिजननीमिच्छां जनयति स एव

विधिप्रत्ययप्रतिपाद्यः। प्रवृत्तिजनकेच्छाजनकज्ञानप्रकार इत्यर्थः। अर्थात् प्रवृत्तिजननी च कृतिसाध्यत्वप्रकारिका इच्छा। तादृशेच्छाजननी च कृतिसाध्यत्वप्रकारिका बुद्धिः।

अत्र च एतावानस्ति विशेषः यदस्मिन् मते कार्यत्ववद् इष्टसाधनत्वमपि विध्यर्थो वर्तते। प्रभाकरस्येदमेव कथनं वर्तते यत् कार्यत्ववत्-कृतिसाध्यत्ववद् इष्टसाधनत्वमपि विध्यर्थोऽस्तु, द्वयोरेव प्रवृत्तिजनकज्ञानविषयत्वात्। अतो यथा द्वयोः ज्ञायमानकारणत्वाविशेषस्तथैव द्वयोः विध्यर्थत्वेऽपि अविशेषोऽस्तु। अतएव तैर्नित्यापूर्वं निषेधापूर्वंरूपं पण्डापूर्वमपि "सन्ध्यामुपासीत," "न कलञ्जं भक्षयेत्" इत्यादिविधिनिषेधस्थलयोः कल्प्यते। प्रभाकरमतेऽन्यथाख्यातिर्नास्ति, अतएव तेषां नये कार्यत्वमेव विध्यर्थः स्वीक्रियते। कारणत्वाविशेषाच्च इष्टसाधनत्वस्यापि विध्यर्थत्वमङ्गीकृतं तैः।

अत्रेदं विचारणीयम् प्रभाकरमते कार्यत्वविशिष्टापूर्वस्य विध्यर्थत्वाद् विशेषणांशः कार्यत्वमपि तदर्थः। तेषामिदं कथनं वर्तते यद् यागस्याशुविनाशित्वेन स्वर्गोत्पत्तिकाले यागस्याभावेन स्वर्गोत्पत्त्यर्थं यागजन्यमपूर्वं कल्प्यते। एवं च वेदे कार्यत्वविशिष्टापूर्वसम्भवेन तत्र शक्तिरेव स्वीक्रियते। परन्तु लोके "पचेत्" इत्यादौ अपूर्वे तात्पर्यासम्भवात् कार्यत्वे लक्षणैव।

अथवा लौकिकतिङः कार्यत्वे शक्तिः। वेदे तु स्वर्गकामान्वयानुपपत्त्या क्रियातिरिक्तकार्ये शक्तिः।

अत्र भट्टाः—स्थाय्यपूर्वकल्पनापेक्षया यागस्यैव स्थायित्वं कल्पनीयम्, तत्र प्रवृत्तिः चिकीर्षाजन्या, सा च कार्यत्वज्ञानजन्या,।

कार्यत्वं च कृतिसाध्यत्वम्। तज्ज्ञानमेव चिकीर्षाद्वारेण प्रवर्तकम्। तच्च ज्ञानं कृतिसाध्यत्वप्रकारकम्। तेन ज्ञानेन कृतिसाध्यत्वप्रकारिका इच्छा जन्यते, सा च पाकम् यागं वा कुर्याम् इत्याकारिका चिकीर्षा, तया च प्रवृत्तिर्जन्यते।

तत्र प्रभाकरमतैकदेशानुयायिन एवमाहुः—यत् काम्यस्थले कृतिसाध्यताप्रकारकं ज्ञानम् – इष्टसाधनतालिङ्गककृतिसाध्यानुमितिः—इष्टसाधनताज्ञानकालीनकृतिसाध्यता ज्ञानं वा प्रवृत्तिकारणम्।

नित्यस्थले च "अहरहः सन्ध्यामुपासीत" इत्यादौ अहमिदानींतनकृतिसाध्यसन्ध्यावन्दनकः ब्राह्मणत्वे सति विहितसन्ध्याकालीनशौचादिमत्त्वाद् इति शौचादिमत्त्वप्रतिसन्धाजन्यं कृतिसाध्यताज्ञानं प्रवृत्तिकारणमस्तीत्यन्यत्र विस्तरः। तथा च "अहरहः सन्ध्यामुपासीत" इत्यादौ नित्यतया निष्फले सन्ध्योपासनादौ इष्टसाधनत्वस्यायोग्यत्वेन भवितुमनर्हत्वात् नेष्टसाधनत्वमपि लिङर्थः।

नैयायिकास्तु नित्यकर्मस्थलेऽर्थवादाद्युपस्थापितब्रह्मलोकावाप्तेः—नरकप्राप्त्यन्ताभावस्यैव वा प्रायश्चित्तसन्ध्यावन्दनादिफलत्वसम्भवाद् इष्टसाधनत्वमेव लिङर्थ इति प्राहुः।

तत्रैवं स्मर्यते—

सन्ध्यामुपासते ये तु सततं शंसितव्रताः।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्॥
(भाषापरिच्छेदः)–

तथा चात्र विषये याज्ञवल्क्येनाप्युक्तम्—

निशायां वा दिवा वापि यदज्ञानकृतं भवेत्।
त्रैकाल्यसन्ध्याकरणात्तत् सर्वं विप्रणश्यति ॥

—याज्ञवल्क्य अ० ३—श्लोक ३०८।

यमेनापि अस्मिन् विषये उक्तम्—

यदह्नात् कुरुते पापं कर्मणा मनसा गिरा।
आसीनः पश्चिमां सन्ध्यां प्राणायामैर्निहन्ति तत् ॥

॥ मिताक्षरा ॥

अत्रैव शातातपेनाप्युक्तम्—

अनृतं मद्यगन्धं च दिवा मैथुनमेव च।
पुनाति वृषलान्नं च सन्ध्या बहिरुपासिता ॥

( मिताक्षरा )

## प्रमाणभूतशब्दात्मक मन्त्ररूपवेदस्य विचारः

प्रयोगसमवेतार्थस्मारका मन्त्राः। तेषाञ्च मन्त्राणां तादृशार्थस्मारकत्वेनैवार्थवत्त्वम्। न तु तेषां मन्त्राणां तदुच्चारणं किमपि अदृष्टं फलं जनयति, अदृष्टार्थं वा संभवति। संभवति दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वात्। न च दृष्टस्यार्थस्मरणस्य प्रकारान्तरेणापि संभवान्मन्त्राम्नानं व्यर्थमिति वाच्यम्। मन्त्रैरेव स्मर्त्तव्यमिति नियमविध्याश्रयणात्।

वस्तुतोऽनुष्ठानकारकद्रव्यदेवतालिङ्गस्मारको वेदभागो मन्त्रः। यथा—"आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन" इति अलिङ्गः ऋगादिमन्त्रः अत्रापस्तम्बबोधायनसूत्रम् मन्त्रब्राह्मणयोर्वेदनामधेयम्

इति। ऋग्यजुः सामवेदादेव तेषां मन्त्राणामपि त्रैविध्यं वर्तते। एतेषां मन्त्राणामुच्चारणस्य प्रयोजनञ्च प्रयोगसमवेतार्थस्मरणमेव वर्तते न तु धर्माधर्मात्मकं किमपि अदृष्टं फलमस्ति, यथा चोक्तं प्राक्। अत्र चायमस्ति नियमः यन्मन्त्रैरेव अर्थोऽनुस्मर्त्तव्यः नान्येन। एवं च मन्त्राणां प्रयोगविधिना सहैकवाक्यतया प्रमाण्यं विज्ञेयम्।

नेदं लक्षणं सम्यक् "कपिञ्जलानालभेत' इत्यादिषु विध्यादिरूपेण मन्त्रेष्वव्याप्तेः। किन्तु याज्ञिकसमाख्यातं मन्त्राणां लक्षणं सर्वथा दूषणरहितमेवेति बोध्यमिति भावः।

ते च मन्त्रा द्विविधाः, वैदिकास्तान्त्रिकाश्च। वैदिका अपि द्विविधाः प्रगीता अप्रगीताश्च। प्रगीताः सामानि। अप्रगीताश्च द्विविधाः। छन्दोबद्धास्तद्विलक्षणाश्च। तान्त्रिकलक्षणं स्त्रीपुंनपुंसकभेदेन मन्त्रत्रैविध्यम्। मन्त्राणां च दशविधः संस्कारोऽपि वर्तते। दशविधसंस्कारस्य निर्वचनं लक्षणञ्च निरूपितं "सर्वदर्शनसंग्रहे" क्वचित् प्रतिसूचिहोऽपि शब्दो वर्तते, यथा—'तद्विष्णोः परमम् पदमसदा पश्यन्ति सूरयः" "दिवीव चक्षुराततम्"/ रहसि कर्तव्यावधारणार्थं गुप्तभाषणं मन्त्र इति च नीतिशास्त्रज्ञाः वदन्ति।

## प्रमाणभूतशब्दात्मकनामधेयरूपवेदस्य विचारः

यादृशशब्देन स्वोपस्थाप्य यदर्थमुख्यविशेष्यताकान्वयबोधार्थं स्वोत्तरप्रथमाविभक्तिरपेक्ष्यते तादृशशब्द एव तदर्थकं नामधेयमित्युच्यते। यथा—घट-पट-मठादयो हि शब्दाः प्रथमान्तत्वेन निर्णीताः सन्त एव स्वार्थमुख्यविशेष्यकं बोधं जनयन्ति नान्यथेति। तदुक्तम्—

शब्देनोच्चारितेनेह येन द्रव्यं प्रतीयते ।
तदक्षरविधौ युक्तं नामधेयं मनीषिणः ॥

निरुक्ते—

नाम-नामधेयमित्यादिकं सर्वं पर्यायवाचि विद्यते, कोशाच्चेद-मवगम्यते ।

प्रातिपदिकरूपः शब्दविशेषः नामधेयम् । तथा "देवदत्तोऽस्ति" इत्यत्र देवदत्तशब्दो नामधेयम् इति पाणिनीयाः प्राहुः ।

पौराणिकास्तु वाचकशब्दो नामधेयम् । यथा—"गोविन्द हरे, गोपाल हरे" इत्यादिकं सर्वमपि नामधेयं बोध्यम् । तच्च यौगिकम् रूढम्, योगरूढम्, यौगिकरूढञ्चेति चतुर्विधमस्ति । केचित्तु रूढयौगिकमप्यधिकं पञ्चमं नामधेयं मन्यन्ते । यथा मंडपमहारजतादि । तद्धि कदाचिदवयववृत्त्या योगार्थमेव कथयति, कदाचिच्च समुदायशक्त्या रूढ्यर्थमेव अभिदधाति । तच्च नामधेयं शब्दसंस्कारसिद्धयर्थं त्रिधा भिद्यते, स्त्रीलिङ्गम्—नपुंसकलिङ्गम्–पुंल्लिङ्गञ्चेति ।

तेषाञ्च नामधेयशब्दानां विजातीयव्यावर्त्तकत्वेन विधेयार्थ-निश्चायकत्वेनास्ति अर्थवत्त्वम् । तथाहि—"उद्भिदा यजेत पशुकामः" इत्यत्रोद्भिच्छब्दो यागनामधेयम् । तेन च विधेयी-भूतार्थस्य निश्चयो भवति । तथाहि अनेन अर्थात् "उद्भिदा यजेत पशुकामः" इत्यनेन वाक्येन अप्राप्तत्वात् पशुरूपफलोद्देशेन यागो विधीयते । अत्र यागसामान्यस्य विधानायुक्तत्वाद् यागविशेष एव विधीयते । यतस्तत्र साधनवैलक्षण्यमन्तरेण फलवैलक्षण्या-नुपपत्तेर्नात्रयागसामान्यं विधीयते, पारिशेष्याद् यागविशेष एव

विधातुं युक्त इति भावः। तत्र कोऽसौ यागविशेषो विधीयते इत्यपेक्षायामुद्भिच्छब्दादुद्भिद्रूपो यागविशेषः इति निश्चीयते। "उद्भिदा यागेन पशुं भावयेत्" इत्यत्र सामानाधिकरण्येन नामधेयान्वयात्।

तस्य च यजिना सामानाधिकरण्यं न नीलोत्पलादिशब्दवत्। तत्र हि उत्पलशब्दस्य अर्थादुत्पलादन्यो नीलशब्दस्य वाच्यार्थोऽस्ति नीलगुणः। लक्षणया तु नीलशब्दस्य गुणिद्रव्यपरत्वेन भवति तयोः सामानाधिकरण्यम्। उद्भिच्छब्दस्य तु यज्वगतयागविशेषान्नान्योऽस्ति वाच्यार्थो विशेषवाचित्वात्तस्य।

अतश्चार्थान्तरवाचित्वाभावेन न नामधेयस्य नीलशब्दवत् सामानाधिकरण्यम्, किं तर्हि वैश्वदेव्यामिक्षेत्यत्र आमिक्षाशब्दवद् वैश्वदेवीशब्दस्य हि देवता-तद्धितान्तत्वात्तद्धितान्तस्य च "सास्य-देवता" इति सर्वनामार्थे स्मरणात्, सर्वनाम्नाञ्च उपस्थित-विशेषवाचित्वेन विशेषपरत्वं विज्ञेयम्। तत्र कोऽसौ वैश्वदेवी शब्दोपात्तो विशेष इत्यपेक्षायामामिक्षापदसामानाधिकरण्यादामि-क्षारूपो विशेष इति निश्चीयते। यथाहुः—

आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः।
आमिक्षापदसान्निध्यात्तस्यैव विषयार्पणम्।

तथा—

श्रुत्यैवोपपदस्यार्थः सर्वनाम्ना प्रतीयते।
तदर्थस्तद्धितेनैवं त्रयाणामेकवाच्यता॥

—मीमांसान्यायप्रकाशः

तस्माद् यथा वैश्वदेवीशब्दोपात्तविशेषसमर्पकत्वेन आमिक्षा-शब्दस्य वैश्वदेवीशब्देन सामानाधिकरण्यम्। एवं सामान्यस्या-विधेयत्वाद् यज्यवगतयागविशेषसमर्पकत्वेन नामधेयस्य यजिना सामानाधिकरण्यम्। तत् सिद्धं नामधेयानाम् विजातीयव्यावर्त्त-कत्वेन विधेयभूतस्यार्थस्य च निश्चायकत्वेन अर्थवत्त्वं भवतीति। यथाहुः—

"तदधीनत्वाद् यागविशेषसिद्धेः"

—मीमांसान्यायप्रकाशः

तत्रापि "उद्भिदा यजेत पशुकामः" इत्यत्र उद्भिच्छब्दस्य यागनामधेयत्वं मत्वर्थलक्षणाभयाद् बोद्धव्यम्। तथा हि—न तावदनेन वाक्येन फलं प्रति यागविधानं भवितुमर्हति, तं प्रति च गुणविधानं युज्यते, आवृत्तिरूपवाक्यभेदापत्तेः। अयं भावः अस्मिन् पक्षे तूद्भिद्यते भूमिरनेनेति व्युत्पत्त्या खनित्रवाची असौ उद्भिच्छब्दो भवेत्। तथा च उद्भिदा यजेत पशुकामः इत्यनेन वाक्येन यागेन पशुं भावयेत्, यागं च खनित्रेण भावयेत् इति फलं प्रति यागविधानम्, यागं प्रति च गुणविधानं क्रियेत, तच्च न युज्यते इति यावत्। पूर्वोक्तवाक्यभेदापत्तेरेवेत्यर्थः।

अतश्च करणत्वेनान्वययोग्यगुणनिष्ठकरणत्वोपस्थितिर्लक्षणयैव वाच्या। लक्षणया चोपस्थितकरणत्वस्य, करणीभूतस्य वा, गुणस्य फलभावनायां यत् करणत्वं तदपि लक्षणयैव वाच्यम्। श्रूयमाणया तृतीयया गुणमात्रस्य यागं प्रति करणत्वाभिधानात्। तथा च गुण-फलसम्बन्धविधाने धातोरत्यन्तपारार्थ्यादिबहुदोष-वत्त्वादुद्भिच्छब्दस्य गुणसमर्पकत्वे गुणविशिष्टकर्मविधानमेव

स्वीकार्यमित्येव समीचीनः पन्थाः। एवं च उद्भिद्वता यागेन पशुं भावयेत् इति विशिष्टविधौ च मत्वर्थलक्षणा भवतीत्युक्तमेव अतो लक्षणाभयान्नामधेयत्वाभ्युपगम एव गरीयानुद्भिच्छब्दस्येति भावः।

## प्रमाणभूतशब्दात्मकनिषेधात्मकवेदविचारः

अनिष्टसाधनताबोधको वाक्यविशेषः। स च द्विविधः लौकिको वैदिकश्च। तत्र लौकिकम् "विषं भुङ्क्ष्व" इति वाक्यम्। वैदिकन्तु "न कलञ्जं भक्षयेत्, न सुरां पिबेत्, अष्टम्यां मांसं नाश्नीयात्" इत्यादिवाक्यम्। अत्र मांसभोजने अनिष्टसाधनत्वं बोध्यत इति बोध्यम्।

पुरुषस्य निवर्त्तकं वाक्यं निषेधवाक्यानामनर्थहेतुक्रिया-निवृत्तिजनकत्वेनैवार्थवत्त्वात्। तथाहि—यथा विधिः प्रवर्तनां प्रतिपादयन् स्वप्रवर्त्तकत्वनिर्वाहार्थं विधेयस्य यागादेरिष्टसाधनत्व-माक्षिपन् पुरुषं तत्र प्रवर्तयति, तथैव "न कलज्जं भक्षयेत्" इत्यादि निषेधोऽपि निवर्तनां प्रतिपादयन् स्वनिवर्तकत्वनिर्वाहार्थं निषेध्यस्य कलज्जभक्षणस्य परानिष्टसाधनत्वमाक्षिपन् पुरुषं ततो निवर्तयति। अयमाशयः—"न कलज्जं भक्षयेत्" इत्यादिनिषेधवाक्यानामनर्थ-हेतुभूतायाः कलज्जभक्षणादिक्रियायाः सकाशात् पुरुषस्य निवृत्तिजनकत्वेनैव अर्थवत्त्वामायाति न किञ्चित्कर्तव्यता-प्रतिपादकत्वेन तथात्वं सिद्ध्यति। यथा च विधिवाक्यानां स्वप्रवर्तकत्वान्यथानुपपत्त्या विधेयार्थस्य स्वर्गादिरूपेष्टसाधनत्व-प्रत्यायनेन तत्र विधेयार्थे पुरुषप्रवृत्तिजनकत्वं तथा निषेधानामपि स्वनिवर्तकत्वान्यथानुपपत्त्या निषेध्यस्य पुरुषानिष्टसाधनत्वप्रत्या-

यनेन, ततः कलञ्जभक्षणादेः पुरुषनिवृत्तिजनकत्वमिति दृष्टान्त-दार्ष्टान्तिकाभ्यां निषेधवाक्यानामनर्थहेतुक्रियायाः पुरुषनिवृत्ति-जनकत्वेनैवार्थवत्त्वमस्ति नातोऽन्यथा इति भावः।

ननु तर्हि निषेधवाक्यानां कथं निवर्तनाप्रतिपादकत्वमिति चेद्-उच्यते न तावदत्र धात्वर्थस्य नञर्थेनान्वयः। अव्यवधानेऽपि तस्य प्रत्ययार्थभावनोपसर्जनत्वेनोपस्थितेः। नहि अन्योपसर्जनत्वेनोपस्थितमन्यत्रान्वेति। अन्यथा राजपुरुषमानयेत्यादावपि राज्ञः क्रियान्वयापत्तेः। अतः प्रत्ययार्थस्यैव नञर्थेनान्वयः, तस्य प्राधान्यात्, क्रयभावनयेवारुण्यादीनाम् तत्रापि नाख्यातांशवाच्य-यार्थभावनया तस्या अपि लिङ्त्वाशंवाच्यो पसर्जनत्वेनोपस्थित-त्वात्। अतो लिङ्त्वाशेन नञ् सम्बन्ध्यते। तस्य सर्वापेक्षया प्राधान्यात्। नञश्चैष स्वभावो यत् स्वसम्बन्धिप्रतिपक्षबोधकत्वम्। नास्तीत्यत्रापि अस्तीतिसत्त्वशब्देन संबध्यमानो नञ् सत्त्वप्रतिपक्ष-मसत्त्वं बोधयति, तदिह लिङर्थस्तावत् प्रवर्तना, अतस्तेन सम्बध्यमानो नञ् प्रवर्तनाप्रतिपक्षीभूतां निवर्तनां गमयति। विधिवाक्यश्रवणेऽयं मां प्रवर्तयति इति प्रवर्तनाविषयकप्रतीतिवत्, निषेधात्मकवाक्यश्रवणेऽप्ययं मां निवर्तयति इति निवृत्त्यनुकूल-व्यापाररूपनिवर्तनायाः प्रतीतेः। अतश्च सर्वत्र निषेधेषु निवर्तनैव वाक्यार्थः। एवं च विधिनिषेधयोर्भिन्नार्थत्वं सिद्धं भवति। हननादिवर्जनकर्तव्यतावाक्यार्थपक्षे तु कर्तव्यताया एवोभयत्र प्रतिपाद्यत्वा त्तयोरेकार्थत्वं स्यात्। तच्च न युक्तम्। यथाहुः—

अनन्तरं यादृशं लोके ब्रह्महत्या श्वमेधयोः।
दृश्यते तादृगेवेदं विधानप्रतिषेधयोः॥

—मीमांसान्या०

तथा—

फलबुद्धिप्रमेयाधिकारिबोधकभेदतः ।
पञ्चधात्यन्तभिन्नत्वाद्भेदो विधिनिषेधयोः ॥ (तत्रैव)

तथा च मन्मते इष्टसाधनत्वं लिङर्थः तन्मतेऽपि लिङ्संसृष्टो नञ् इष्टसाधनत्वप्रतिपक्षमनिष्टसाधनत्वं गमयति सर्वथापि तु नञः प्राधान्यात् प्रत्ययेनान्वयः । यदा तु तदन्वये किञ्चिद्बाधकं तदाऽगत्या धात्वर्थेनान्वयः ।

## प्रमाणभूतशब्दात्मक-अर्थवादरूपवेदविवेचनम्

प्राशस्त्य निन्दान्यतरपरं वाक्यमर्थवादः । तस्य च लक्षणया प्रयोजनवदर्थपर्यवसानम् । तथाहि—अर्थवादवाक्यं हि स्वार्थ-प्रतिपादने प्रयोजनाभावाद् विधेय-निषेधयोः प्राशस्त्यनिन्दितत्वे लक्षणया प्रतिपादयति । स्वार्थमात्रपरत्वे आनर्थक्यप्रसङ्गात् । आम्नायस्य हि क्रियार्थत्वात् । न चेष्टापत्तिः, "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनविधिना सकलवेदाध्ययनं कर्तव्यमिति बोधयता सर्ववेदस्य प्रयोजनवदर्थपर्यवसायित्वं सूचयतोपात्तत्वेनानर्थक्यानुपपत्तेः ।

अयं चार्थवादी वेदः—अर्थस्य प्रयोजनस्य, वादो = वादनम्, विध्यर्थप्रशंसापरं वाक्यमित्यर्थः । अर्थवादो हि स्तुत्यादिद्वारा विध्यर्थं शीघ्रं प्रवृत्तये प्रशंसति । निषिद्धार्थं च निन्दति—शीघ्रं निवृत्तये इति । स चायम् अर्थवादः लोके वेदे च समानः । तत्र लौकिकः—"ओदन-कामस्तण्डुलं पचेत्" तृप्तिकामस्तण्डुलोदनं भुञ्जीत" इत्यादौ विध्यर्थस्य तण्डुलपाककरणस्य तण्डुलोदनभोजन-रूपस्य च स्तावकं तण्डुलपाक ऋषिभिः पूर्वं स्वर्गाद्यर्थं कृतः

ओदनममृतम् इत्यादिवाक्यम्। एवं "कफज्वरपीडितो दुग्धं न पिवेत्" इत्यादिविधिनिषेधस्थलेऽपि दुग्धपानस्य निन्दकं पशुभिर्भक्षितेनापथ्यतृणादिना दुग्धं जन्यते तच्च विषरूपमित्यादिकं वाक्यम्।

स चार्थवादो द्विविधः—विधिशेषो निषेधशेषश्च। विधिशेषरूपोऽर्थवादश्च चतुर्विधः—प्रशंसा निन्दा-परकृति पुराकल्पभेदात्। तत्र "वायव्यं श्वेतमालभेत भूतिकामः" इत्यादिविधिशेषस्य "वायुर्वैक्षेपिष्ठा देवता" इत्यादिन विधेयार्थस्य प्राशस्त्यबोधकतयाऽर्थवत्त्वम्। "वर्हिषि रजतं न देयम्" इत्यादिनिषेधशेषस्य च "सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्" इत्यादेर्निषेधस्य निन्दितत्वबोधकतयाऽर्थवत्त्वम्। वैदिकोदाहरणानि च "वायुर्वै क्षेपिष्ठादेवता इत्यादिः, सोरोदीदित्यादिर्वा। अत्र च वायव्यं श्वेतमालभेत भूतिकामो वायुर्वैक्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स सचैनं भूतिं गमयति" इत्यादौ वायुर्वेक्षेपिष्ठा देवतेत्याद्यर्थवादो हि वायव्यं श्वेतमालभेतेत्यादिविधिविहितं श्वेतपश्वालम्भनं श्वेतपशुकरणको भागः प्रशस्तः इति प्रशंसतीति विज्ञेयम्। 'सोऽरोदीद्यदरोदीत्तद्रुद्रुस्यरुद्रत्वम्' इति वाक्यन्तु क्रतौ ऋत्विग्भ्यो रजतं न देयमिति निषिद्धं रजतदक्षिणादानं निन्दतीति बोध्यम्। न च प्राशस्त्यादिबोधस्य निष्प्रयोजनकत्वेन नार्थवादस्यार्थवत्त्वमिति वाच्यम्। आलस्यादिवशादप्रवर्तमानस्य पुंसः प्रवृत्त्यादिजनकत्वेन तद्बोधस्योपयोगात्। अर्थवादजन्यप्राशस्त्यादिबोधस्य विधेयकर्मानुष्ठानादौ उपयोगादर्थवादस्यार्थवत्त्वमुपपद्यत इत्यर्थः।

प्रकारान्तरेण सोऽर्थवाद स्त्रिविधः। गुणवादः—अनुवादः—भूतार्थवादश्चेति। तदुक्तम्—

विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥

अर्थसंग्रहः—

अयमभिप्रायः—प्रमाणान्तरविरोधे सति अर्थवादो गुणवादो भवति । यथा—"आदित्यो यूपः" इत्यादिः । यूप आदित्याभेदस्य प्रत्यक्षबाधितत्वाद् आदित्यवदुज्ज्वलत्वरूपगुणोऽनेन लक्षणया प्रतिपाद्यते । प्रमाणान्तरावगतार्थबोधकोऽर्थवादोऽनुवादः, यथा—"अग्निर्हिमस्य भेषजम्" इति । अत्र हिमाग्न्यो विरोधस्य प्रत्यक्षेणैव स्फुटं ज्ञायमानत्वात् । प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधकोऽर्थववा दो भूतार्थवादः कथ्यते । यथा—"इन्द्रो वृत्राय वज्रमुदयच्छत्" इत्यादिकं सर्वमूह्यमिति भावः । मीमांसकास्तु विधिशेषः—निषधशेषश्चेत्यर्थवादं द्वैविध्येन विभेजिरे ।

## शाब्दप्रमायाः करणविषयको विचारः

प्राचीननैयायिकैः पदस्यैव ज्ञायमानस्य शाब्दबोधकरणता स्वीकृता । नवीनैश्च पदज्ञानस्येत्येतावानस्ति अनयोर्विशेषः । अत्रेदं विचार्यते—किं नाम पदमिति । अत्र शाब्दिका इत्थं वदन्ति-यत्-"सुप्तिङन्तं पदम्" "ते विभक्त्यन्ताः पदम्" यथादर्शनं विकृता वर्णा विभक्त्यन्ताः पदसंज्ञा भवन्ति । विभक्तिर्द्वयी नामिकी आख्यातिकी च । पाचकः, पचति इत्यस्ति द्वयोरुदाहरणम् । उपसर्गनिपातास्तर्हि न पदसंज्ञा भवन्ति । लक्षणान्तरं वाच्यमेतेषामिति । पदत्वञ्च वृत्तिमत्त्वम्, सकेतवद्वर्णत्वम्, विशिष्टशब्दनिष्ठः पुण्यजनकतावच्छेदको जातिविशेषः । केचित्तु वाक्यैकदेशः पदमित्यप्याहुः ।

न्ययायनये च शक्तं पदम् । निरूपकतासम्बन्धेन शक्तिविशिष्टं पदम् । तच्च पदं द्विविधम् । मुख्यम्, गौणञ्च । यत् पदं यादृशशक्तिवृत्त्या यमर्थं समुपस्थापयति तत् पदम् तस्मिन्नर्थे मुख्यम् । यथा च गो-घटादिव्यक्तीनां समुपस्थापकं गोघटादिपदम् । मुख्यमपि चतुर्विधम्—यौगिकम्, रूढ़म्, योगरूढ़म्, यौगिकरूढ़ं चेति । तत्राद्यं पाचकादिपदम् । द्वितीयं ब्राह्मणवाचकं ब्राह्मणपदम् । गोमण्डलादिपदञ्च । तृतीयं पङ्कजादिपदम्, चतुर्थम् उद्भिदादिपदम् ।

यच्च पदं लक्षणावृत्त्या यमर्थं समुपस्थापयति तत् पदं तस्मिन्नर्थे गौणं लाक्षणिकं इति वोच्यते । यथा "गङ्गायां घोषः" इत्यत्र लक्षणावृत्त्या तीररूपमर्थं समुपस्थापयति गङ्गापदमत इदं लाक्षणिकम् पदमपि गौणमुच्यते इति भावः ।

केचन विद्वांसः शास्त्रान्तरे चत्वारि पदान्याहुः । नाम-आख्यात-उपसर्ग-निपाताश्चेति ।

वाचकम्-लक्षकम्-व्यञ्जकम् चेति त्रिविधं पदम् इति आलंकारिका आहुः ।

एतावता प्रबन्धेन ज्ञायमानपदस्य या कारणता प्राचीननैयायिकमतानुसारतः शाब्दबोधं प्रति निश्चितरूपेण सुस्थिरीकृता सेदानीं निराक्रियते, तथा हि न तावत् ज्ञायमानं पदं करणं किन्तु पदज्ञानं करणम् । यथोक्तम् विश्वनाथेन । "पदज्ञानं तु करणं" इत्यादिना भाषापरिच्छेदे-

"ज्ञायमानं लिङ्गन्तु करणं न हि"

अयमर्थः—

शाब्दबोधत्वावच्छिन्नकार्यतानिरूपितकारता पदज्ञान एव न तु पदे। तथा सत्येव मौनिश्लोकादावपि शाब्दबोधः सुसम्पन्नो भवति। तत्रपदाभावेऽपि अर्थात् पदोच्चारणाभावेऽपि मौनिकर्तृकवाक्यबोधकलिप्यादौ नानुपपत्तिः शाब्दबोधस्य। तथा च मौनिश्लोकस्थले, विजातीयहस्तचेष्टास्थले च शाब्दोच्चारणाभावेन ज्ञायमानपदाभावान्न तत्र शाब्दबोधः स्यादित्यतोऽकामेनापि पद्ज्ञानस्यैव कारणत्वं स्वीकृतम् भवति। पदज्ञानस्य कारणत्वे तु न दोषः लिप्या-हस्तचेष्टया च पदज्ञानस्योत्पादनात् ततः शाब्दबोधोत्पत्तेर्निर्बाधत्वात्।

व्यापाररूपेण कारणीभूता पदार्थोपस्थितिरपि पदज्ञानजन्या सती एव शाब्दबोधं जनयति। अतएव पदजन्यपदार्थस्मरणस्यैव व्यापारत्वमपि स्वीकृतं शाब्दबोधे। पदजन्येत्यस्य पदज्ञानजन्यत्वमेवार्थः अत्रैव पदज्ञानजन्यपदार्थोपस्थितावेव शक्तिज्ञानस्याप्युपयोगः। पूर्वं शक्तिग्रहाभावे शक्य-सम्बन्धरूपलक्षणाया ग्रहस्याप्यसंभवेन पदज्ञाने जातेऽपि तत्सम्बन्धेन पदार्थस्मरणानुपपत्तेः। पदज्ञानस्यैव हि एकसम्बन्धिज्ञानविधया पदार्थोपस्थापकत्वं वर्तते। तथा च पदार्थोपस्थितिरूपव्यापारद्वारैव पदज्ञानं शाब्दबोधं जनयतीति स्वीकृते न कोऽपि दोषः समापतति। व्यापारत्वञ्चोपस्थितेः पदज्ञानजन्यत्वे सति पदज्ञानजन्यशाब्दबोधजनकत्वरूपम्।

## शाब्दबोधं प्रति पदार्थोपस्थितेः कारणत्वविचारः

पदेन अभिधीयमानोऽर्थः पदार्थस्तस्योपस्थितिः = स्मरणम् = स्मृतिः, शाब्दबोधे कारणमस्ति। सापि पदार्थोपस्थितिः

व्यापारमुद्रया एव शाब्दबोधे हेतुः। सापि पदेन जायमाना एव शाब्दबोधे कारणम् अतएवोक्तम्—

"पदजन्यपदर्थस्मरणं व्यापारः"

अर्थात् पदजन्यपदार्थोपस्थितिः कारणं वर्तते। अन्यथा पदविषयकश्रावणप्रत्यक्षशालिनः पुरुषस्य चक्षुरादीन्द्रियात्मकप्रत्यक्ष प्रमाणादिना पदार्थोपस्थितावपि शाब्दबोधापत्तेः, अतः पदार्थोपस्थितिः पदजन्या सत्ययेव शाब्दबोधं प्रति हेतुः। प्रत्यक्षादिना जायमानाया उपस्थितेः पदाजन्यत्वान्नोक्तदोषः। तथापि पदजन्यपदार्थोपस्थितिघटकं पदजन्यत्वं वृत्तिज्ञानसहकारेण बोध्यम्। तथा च वृत्तिज्ञानसहकृतपदजन्यपदार्थोपस्थितिः शाब्दबोधापत्तिः शाब्दबोधे कारणम् इति भावः। तदुक्तम्—

शक्तिज्ञानात्मकवृत्तिज्ञानस्य सहकारिकारणत्वानभ्युपगमेय त्र घटादिपदात् समवायसम्बन्धेनाऽऽकाशस्मरणं जातं तत्रापि आकाशस्य शाब्दबोधापत्तिः स्यात्। वृत्तिज्ञानस्य सहकारिकारणत्वस्वीकारे तु वृत्तिज्ञानसहकृतघटपदज्ञानस्याऽऽकाशोपस्थितौ कारणत्वाभावेननतादृशाकाशोपस्थितिरूपकारणादाकाशादिविषयकशाब्दबोधस्याऽऽपत्तिः।

पदेनाभिधीमानोऽर्थः पदार्थ इति पूर्वमुक्तम्, इदानीं किं नामपदार्थत्वमिति किंचिद् विस्तृत्य विचार्यते। तदुक्तम्—

"जात्याकृतिव्यक्तयस्तु पदार्थः" गोतमसूत्रम्---२-२-६८॥

पदजन्यप्रतीतिविषयत्वम् पदाभिधेयत्वम् वा पदार्थत्वम् जाति-आकृति-व्यक्तिषु एतेषु त्रिष्वेव समन्वेति। एतेषां त्रयाणामेव पदार्थत्वात्। यथा—"गामानय" इत्यादौ गोपदाभिधेयः गोत्वा-

त्मकजातिः, अवयवसंस्थानात्मकाकृतिविशिष्टो गोव्यक्तिविशेषो गोपदार्थः। पदार्थत्वम् = पदशक्तिः, तया वृत्त्या पदोपस्थाप्यत्वं वा यदुक्तं प्राक्।

इत्थञ्च गो-घटादि पदानामेव व्यवस्थितिः। न तु नित्यातिन्द्रियद्रव्यवाचकपदानाम्, आहोस्विद्गुणकर्मादिवाचकपदानामियं गतिः। तेषां तु जाति-व्यक्तिमात्र मेवार्थः। आकाशादिपदानां जात्यवाचकत्वेन शब्दाश्रयत्वावच्छिन्नस्य, अष्टद्रव्यातिरिक्तद्रव्यत्वावच्छिन्नस्य वा वाचकत्वमस्तीति स्वीक्रियते। जातिपदस्य धर्ममात्रपरत्वे तु आकाशादिपदानामपि जातिव्यक्त्योर्वाचकत्वं निर्विवादमेवेति ध्येयम्। "जात्याकृतिव्यक्तयस्तु पदार्थः इत्यत्र" पदार्थः" इत्येकवचनेन ज्ञायते यत् तिसृषु जात्याकृति व्यक्तिषु शक्तिरस्तीति सांप्रदायिका वदन्ति। नवीनानामिदं कथनं वर्तते यत् सौत्रमेकवचनं जातिव्यक्त्योः रेकशक्ति सूचयति। आकृतिरूपन्तु संस्थानमतिरिक्तमेव शक्यम्।

वस्तुतस्तु आकृतिपदस्यसर्वत्र नहि अवयवसंस्थानरूपोऽर्थः, किन्तु जातिव्यक्त्येः समवायात्मक एव संसर्गः इति समवायात्मकसंसर्गपरम् आकृतिपदम्।

स च पदजन्यप्रतीतिविषयीभूतेर्थः पदार्थो द्विविधः भावोऽभावश्चेति जगदीशतर्कालङ्कारस्य मतम्।

वैशेषिकाश्च द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायाभावाः सप्तपदार्थाः सन्तीति वदन्ति।

नैयायिकैश्च प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त सिद्धान्त-अवयवतर्क - निर्णय-वाद-जल्प - वितण्डा-हेत्वाभास - छल - जाति-

निग्रहस्थानरूपाः सन्ति षोडशपदार्था इति मन्यते। एतेषां षोशपदार्थानाम् अन्तर्भावः सप्तस्वेव पदार्थेषु अस्ति इति नातिरिक्तत्वं प्रसज्यते तेषाम्। तथा हि—प्रमाणस्येन्द्रियादेर्द्रव्यादिषु अन्तर्भावः। व्याप्तिज्ञान-सादृश्यज्ञान-पदज्ञानानाश्च गुणेऽन्तर्भावो बोध्यः। आत्मशरीरेन्द्रियार्थं इत्यादि प्रमेयभूतपदार्थानां केषाञ्चिद् द्रव्ये केषाञ्चिद् गुणे, सर्वविधदुःखानाम् आत्यन्तिकध्वंसरूपस्यापवर्गस्य अभावेऽन्तर्भावः। संशयस्य गुणे साध्यतयेच्छाविषयात्मकस्य प्रयोजनस्य यथायथं द्रव्यादिषु। तत्तच्छास्त्रसिद्धार्थरूपस्य सिद्धान्तस्य द्रव्यादिषु। शब्दस्वरूपप्रतिज्ञाद्यन्यतमरूपाणामवयवानां गुणे। तत्त्वबुभुत्सोः कथारूपवादस्य गुणे। विजिगीषुकथारूपजल्पस्य गुणे। स्वपक्षस्थापनाहीनकथारूपवितण्डाया गुणे। अनुमितितत्करणज्ञानैतदन्यतरप्रतिबन्धकज्ञानविषयरूपाणां हेत्वाभासानां यथा यथं द्रव्यादिषु अन्तर्भावः। छलस्य गुणे। असदुत्तररूपाया जातेर्गुणे। पराजयहेतुस्वरूपनिग्रहस्थानानां यथायथं द्रव्यादिषु अन्तर्भावः। तथाहि-प्रतिज्ञाहानेरभावेऽन्तर्भावो बोध्यः। प्रतिज्ञार्थसाधनार्थं निर्देशरूपस्य प्रतिज्ञान्तरस्य शब्दात्मकस्य गुणेऽन्तर्भावः। प्रतिज्ञाहेत्वोर्विरोधरुपस्य-शब्दात्मकस्य प्रतिज्ञाविरोधस्यापि गुणे एवान्तर्भावः। प्रतिज्ञातार्थापनयनरुपस्य अथवा प्रतिज्ञातार्थनिन्हवरूपस्य प्रतिज्ञासंन्यासस्याभावेऽन्तर्भावः। हेत्वन्तरस्य-अर्थान्तरस्य निरर्थकस्य-अविज्ञातार्थस्य अपार्थकस्य-अप्राप्तकालस्य-न्यूनस्य-अधिकस्य-पुनरुक्तस्य-चैतेषां सर्वेषांगुणे एवान्तर्भावः। एवम् अननुभाषणस्य-अज्ञानस्य-अप्रतिभायाः-विक्षेपस्य च अभावेऽन्तर्भावः मतानुज्ञायाश्च गुणे। पर्यनुयोज्योपेक्षणस्याभावेऽन्तर्भावः। निग्रहस्थानकथनरूपस्य शब्दात्मकस्य

निरनुयोज्यानुयोगस्य गुणे । अपसिद्धान्तस्याभावे । हेत्वाभासानाञ्च द्रव्यादिषु अन्तर्भावः ।

विज्ञानवादिने बौद्धास्तु इत्थं समुद्गिरन्ति यत् सामान्यादयः पदार्था अलीका एवेति तेषां कथैव नास्ति । वस्तुतः दर्शनभेदेन मतभेदेन च सन्ति पदार्था-अनेकविधाः । तथाहि—शक्ति-सादृश्यादिवत् विषयतातत्त्वादिवच्च प्रतियोगित्वानुयोगित्वाधेयत्वाधिकरणत्वविषयिता-संसर्गतादयोऽपि सन्ति अतिरिक्ताः पदार्थाः इति केचन विद्वांसो मन्यन्ते । अद्वैतवादिनो वेदान्तिनः चिदचिदात्मकं पदार्थद्वयमेव स्वीकुर्वन्ति । माध्ववेदान्तिनश्च स्वतन्त्रपरतन्त्रात्मकौ द्वौ पदार्थौ एवाङ्गीकुर्वन्ति । रामानुजीयास्तु चित्, अचित् ईश्वर-भेदेन त्रय एव पदार्थाः सन्तीति कथयन्ति । नाकुलीशाः शैवाश्च पति-पाश पशु भेदेन पदार्थत्रयमेव मन्यन्ते । प्राचीनवैशेषिकाः-द्रव्य-गुण-कर्म सामान्य विशेष-समवायानां षण्णां पदार्थानामस्तित्वं स्वीकुर्वन्ति इत्यर्थः । तथाचोक्तम्—धर्मविशेषप्रसूतात् द्रव्य-गुण - कर्म - सामान्य - विशेष - समवायानां पदार्थानां-साधर्म्यं वैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम् ( वैशेषिकसूत्रम् १।१।४ ) ।। नवीननैयायिकाश्च प्रमाण-प्रमेयादि षोडशपदार्थान् स्वीकुर्वन्ति । तच्चोक्तं पूर्वमेव । तेषाञ्चान्तर्भावोऽपि सप्तस्वेव पदार्थेषु प्रादर्शीत्यपि बोध्यम् ।

सांख्यदर्शने चतुर्विधाः पदार्थाः सन्ति निरूपिताः । संक्षेपतः कश्चित् पदार्थः प्रकृतिरेव । तल्लक्षणन्तु अजन्यत्वे सति जनकत्वम् । कश्चित् पदार्थो विकृतिरेव । तल्लक्षणन्तु जन्यत्वे सति तत्त्वान्तरानारम्भकत्वम् । कश्चित् पदार्थः प्रकृति विकृत्युभयरूप एव, तल्लक्षणन्तु जन्यत्वे सति जनकत्वम् । कश्चिच्च पदार्थः अनुभयरूप

एव, तल्लक्षणन्तु अजन्यत्वे सति अजनकत्वम्। सामान्यत इमे चतुर्विधाः पदार्था निरूपिताः। परन्तु संकलनया च पंचविंशति-पदार्था भवन्ति इति कपिलमतानुयायिनो वदन्ति। तदर्थं—

"प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्चभूतानि ॥
इतिकारिकां पठन्ति। पुरुषञ्चापि स्मरन्ति।

भट्टमतानुयायिनस्तु द्रव्य-गुण-कर्म-सामान्यान् चतुरः पदार्थान् स्वीकुर्वन्ति। प्राभाकरैश्च द्रव्य-गुण-कर्म सामान्य-संख्या-समवाय-सादृश्य-शक्तयश्चाष्टौ पदार्थाः स्वीक्रियन्ते इत्यर्थः। इमे भावभूता एव पदार्थाः सन्ति निरुपिताः कथिताश्च। अभावस्तु स्वरूपवानपि नोद्दिष्टः, प्रतियोगिनिरुपणाधीननिरुपणत्वात् न तु तुच्छत्वाद् इत्यभावः सप्तमः पदार्थोऽस्तीति दार्शनिकैरुद्घोषितम्।

## पदज्ञानस्य प्रामाण्यविवेचनम्

प्रामाण्यपदार्थो द्विविधः। प्रमाकरणस्वरूपः प्रमात्वरूपश्च। तत्र तद्वति तत्प्रकारकज्ञानत्वं, तद्वति तद्वैशिष्ट्यज्ञानत्वं, तद्वन्निष्ठ-प्रकारताशाल्यनुभवत्वं, तद्वद्विशेष्यकत्वावच्छेदेन तत्प्रकारकत्वरूपं वा प्रमात्वम् इति तान्त्रिकाः प्रमात्वात्मकप्रामाण्यपरिभाषां वदन्ति। गदाधरभट्टाचार्येण सिद्धान्तलक्षणे प्रमात्वस्य "यद्वा तत्सम्बन्धानुयोगिविशेष्यकत्वावच्छिन्न - तत्प्रतियोगिकसम्बन्धाव-वच्छिन्नप्रकारकज्ञानत्वम्" इत्येवंविधं लक्षणं प्रोक्तम्। एवञ्च बहुभिर्मीमांसकैः अनधिगतार्थग्राहित्वरूपं प्रामाण्यमुच्यते। अनधिगतार्थग्राहित्वञ्च स्वसमानाधिकरणस्वाव्यवहितपूर्ववर्तिस्व-समानाकारज्ञानविषयाविषयकत्वम्। सत्यरजतस्थले इदं रजत-

मितिज्ञानस्य। एवम्—"घटेऽयं घटः" इति ज्ञानस्याचोक्तं प्रमात्वमुपपन्नं भवति। प्रभाकरमते च सर्वेषां ज्ञानानां प्रमात्वेन तेषां नयेन तत्प्रकारकज्ञानत्वमात्रमेव प्रमात्वं वाच्यम् इति न कोऽपि दोष इति भावः। उदयनाचार्येण तु "यथार्थानुभवो मानमनपेक्षतयेष्यते" इत्येवोक्तं प्रमात्वम्। अत्र मानशब्दस्य प्रमारूपोऽर्थो विज्ञेयः। प्रयोगश्च—यथार्थानुभवः प्रमाशब्दवाच्यः अनपेक्षत्वात्, अनपेक्षत्वञ्च स्वसमानाधिकरणं स्वसमानविषयकं च यद् ज्ञानं तत्प्रमात्वानधीनप्रमात्वकत्वरूपमस्तीति विज्ञेयम्। तेन स्मृतेर्व्यावृत्तिः।

अत्रेदं विचार्यते शाब्दबोधकारणीभूतं यत् पदज्ञानं, तादृशपदज्ञाननिष्ठं प्रामाण्यं प्रकृते कीदृशं विवक्षितम्। यतो हि प्रामाण्यपदं व्युत्पत्तिवैचित्र्यात् प्रमात्व-प्रमाकरणत्वरूपोभयार्थकं भवति। तथाहि—"प्रमीयते यत्" इति व्युत्पत्त्या तद्वति तत्प्रकारकत्वरूपप्रकर्षविशिष्टं ज्ञानं प्रशब्दोपसंहितेन" मा धातुना प्रत्याय्यते, तच्च भावल्युटा च तादृशज्ञानत्वरूपम्। "प्रमीयतेऽनेनेति" करण व्युत्पत्त्या प्रमाकरणत्वरूपं प्रामाण्यं प्रामाण्यशब्देन करणल्युटा तद्धितान्तेनोपस्थाप्यते। तच्च करणल्युटा तद्धितान्तेनोपस्थाप्यमानं प्रमाकरणत्वरूपं प्रामाण्यं प्रमाकरणनिष्ठं। तदाश्रयत्वादेव प्रत्यक्षादिकं प्रमाणमिति कथ्यते। प्रमाता येनार्थं प्रमिणोति तत् प्रमाणम्। प्रमिणोति च स प्रत्यक्षादिभिरर्थमतस्तत्प्रमाणम्। शास्त्रेषु प्रतिपादितानां पदार्थानां वस्तुमात्रस्य वा निश्चयः प्रमाणतत्त्वाधीन इति तदर्थं प्रमाणत्वस्यनिरूपणं निर्वचनञ्च सर्वथाऽऽवश्यकं मन्यते मनीषिभिः।

## प्रामाण्यस्य स्वतस्त्वादिविवेचनम्

प्रमाणत्वं हि प्रमाकरणत्वमित्युक्तम्, तस्य निश्चयस्तद्घटकप्रमात्वग्रहं विनादुर्घटो घटितज्ञाने घटकज्ञानस्य कारणत्वात्। तच्च प्रमात्वं कथं ग्राह्यमित्यत्र सन्ति मतभेदा विपश्चितम्, तत्र माध्यमिकमतानुयायिनो बौद्धास्तु तस्य ग्रहणासम्भवमेवोद्घोषयन्ति। तथा हि-तन्मते प्रमात्वस्य ग्रहणं स्वतः परतो वा न संभवत्यनेकदूषणगणग्रासात्। यथोक्तं तन्मतमुपपादयता श्रीगंगेशोपाध्यायेन—"प्रमाणतत्त्वावधारणस्याशक्यत्वात्। तद्धि प्रमातत्त्वावधारणाधीनम्, तच्च स्वतः परतो वा न संभवति। वक्ष्यमाणदूषणगणग्रासात्"।

—प्रामाण्यवादचिन्तामणिः॥

गदाधरो पि समर्थयति गङ्गेशोपपादितं मतमिदं वक्ष्यमाणं ब्रुवाणः—"ननु प्रमाकरणत्वरूपप्रमाणतत्त्वावधारणे तद्घटकप्रमातत्त्वावधारणस्यापि अपेक्षिततया तस्य स्वतः परतश्चासंभवेन प्रमाणतत्त्वस्य दुरवधारणतया तदवधारणसम्पादनेन शास्त्रस्य निःश्रेयसोपयोगित्वं यत् सूत्रकृतोक्तं तन्न युज्यते"।

—प्रामाण्यवादगादाधरी—

पदज्ञानस्य शाब्दबोधहेतुत्वपक्षे अयमेव प्रश्नः समुदेति यत् पदज्ञाननिष्ठं प्रामाण्यं स्वतोग्राह्यम्, परतोग्राह्यं वेति।

शाब्दबोधात्मकप्रमायाः हेतुत्वरूपं करणत्वं पदज्ञानस्य वा तावदेव निर्वहति यावत्ततः पूर्वं प्रमातत्त्वं निर्वाह्यं स्यादिति। तथा च पदनिष्ठस्य पदज्ञाननिष्ठस्य वा प्रमाकरणत्वरूपप्रमाण-

तत्त्वस्यावधारणे तद्घटकप्रमातत्त्वावधारणस्याप्यत्रापेक्षिततया तस्य प्रमातत्त्वस्य स्वतः परतश्चासंभवेन पदज्ञाननिष्ठस्य पदनिष्ठस्य प्रमाकरणत्वस्य दुरवधारणतया पदज्ञानस्य ज्ञायमान-पदस्य वा यत् शाब्दबोधोपयोगित्वं शास्त्रकारैः दार्शनिकैश्चोक्तं-तन्न संगच्छते। यतो हि अस्मिन् विषये विचाराङ्गसंशयजननीनां विप्रतिपत्तीनां सत्त्वात्। तथाहि तत्र विप्रतिपत्तयः—

"ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राह्यं न वा" ?

—प्रामाण्यवादचिन्तामणिः

अत्र विधिकोटिः मीमांसकानाम्, निषेधकोटिः नैयायिकानाम्। तादृशयावज्ज्ञानग्राहकसामग्रीग्राह्यत्वं स्वतो ग्राह्यत्वम्, तच्च मीमांसकानाम्। तादृशसामग्रीग्राह्यत्वाभावश्च नैयायिकानामस्ति परतोग्राह्यत्वरूपः। ° तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्री-ग्राह्यत्वरूपं स्वतस्त्वं गुरुमिश्रभट्टानां मतत्रयसाधारणमस्ति। तथा च ज्ञाननिष्ठं यद् अप्रामाण्यं तादृशाप्रामाण्याग्राहिका या यावती ज्ञानग्राहिका सामग्री तज्जन्यग्रहविषयत्वरूपम्। एवं च प्राथमिकज्ञानग्राह्यत्वमेव मतत्रये ज्ञानस्य स्वतस्त्वम्। तादृशो ज्ञानग्रहश्च गुरुमते व्यवसाय एव ज्ञानस्य स्वप्रकाशत्वम्। मिश्रमते सोऽनुव्यवसायरूपस्तस्य मनोवेद्यत्वम्। भाट्टमते च ज्ञाततालिङ्ग-कानुमितिरूपः, ज्ञानस्यातीन्द्रियत्वात्।

अयमाशयः—गुरुमते ज्ञानमात्रस्य यथार्थत्वेन अप्रमात्मकं ज्ञानमेव किमपि नास्ति इति या सामग्री ज्ञानं जनयिष्यति सैव सामग्री तादृशज्ञाने प्रामाण्यमपि ग्राहयिष्यति। यतस्तन्मते ज्ञानत्वस्य, ज्ञानधर्मिकप्रामाण्यज्ञानत्वस्य च समनियततया

समनियतधर्मावच्छिन्नकार्योत्पादिका सामग्री समानियतधर्मान्तरावच्छिन्नकार्योत्पादिका इति तत्सिद्धान्तात्। एवञ्च गुरुमते "अयं घटः" "घटमहं जानामि" इत्याकारकज्ञानस्य जायमानत्वेन स्वस्यैव स्वनिष्ठप्रामाण्याविषयकतया तद्विषयत्वस्य प्रमात्वे (प्रामाण्ये) सत्त्वेन प्राथमिकज्ञानग्राह्यत्वरूपस्वतस्त्वोपपत्तिः। मिश्रमते च चक्षुःसंयोगाद्यानन्तरं यद् "घटः" इत्याकारकं ज्ञानम्, सद्विषयकं यद् "घटमहं जानामि" इत्यनुव्यवसायात्मकं लौकिकमानसप्रत्यक्षं तद्विषयत्वस्य प्रमात्वे सत्त्वेन तादृशस्वतस्त्वोपपत्तिः।

भाट्टमते च ज्ञानमतीन्द्रियम्, अतो न मिश्रमतवद् अनुव्यवसायेन प्रामाण्यभानोपपत्तिः, किन्तु ज्ञानेन विषये ज्ञाततानामकः कश्चिद्धर्मो जन्यते, स च ज्ञातो घट इति प्रतीतिसाक्षिको विषयताविशेषरूप एव। तया ज्ञाततया ज्ञानमनुमीयते। तथा चाऽनुमानप्रयोगः—इयं ज्ञातता घटत्वप्रकारकघटविशेष्यकज्ञानजन्या घटवृत्तिघटत्व प्रकारकज्ञातत्वाद्, अथवा घटवृत्ति घटत्वप्रकारकज्ञाततायाः इत्यस्य हेतुत्वं बोध्यम्। आद्ये हेतुतावच्छेदकसम्बन्धः स्वरूपसम्बन्धः। द्वितीये च तादात्म्यसम्बन्धः। या यद्वृत्तिर्यत्प्रकारिका ज्ञातता भवति सा तद्विशेष्यकतत्प्रकारकज्ञातता स्वीक्रियते। यथा-परविशेष्यक परत्वप्रकारकज्ञानविषयभूतपर- निष्ठा ज्ञातता पटविशे पटत्वप्रकारकज्ञानजन्या इति सामान्यतो व्याप्तिः निश्चीयते। परं मतमिदानीं युक्तं न प्रतिभाति, यतोऽतीताऽनागतज्ञानेन विषयरुपा धाराभावेनज्ञाततायाः उत्पादनस्याशक्यतया तादृशज्ञानाग्रहणासम्भवात्।

एवमसन्निकृष्टविषयकानुमित्यादिना ज्ञातताजननेपि तदाश्रस्यासन्निकृष्टतया तस्याः प्रत्यक्षासम्भवात् तदरिक्तस्य तज्ज्ञानस्योपायाभावो वक्तुमशक्यत्वात् तदात्मकलिङ्ग ज्ञानस्यासम्भवेन तादृशानुमितेर्ज्ञानासंभवाच्च।

अस्तु यथाकथंचिद् ज्ञाततायाः उदयान्तस्या ज्ञानं ततश्च ज्ञानानुमितिः परं तथापि प्रमात्वस्य स्वतोग्राह्यत्वपक्षो न स्वच्छो भवितुमर्हति वक्ष्यमाणानां दोषाणां निराकरणासम्भवात्। तथाहि—अत्र नैयायिका इत्थं समुद्गिरन्ति यत् प्रामाण्यस्य स्वतोग्राह्यत्वे अर्थात् तादृशयावज्ज्ञानग्राहक सामग्री ग्राह्यत्वे अनभ्यासदशोत्पन्नज्ञाने प्रामाण्य संशयो न स्यात्, यतो हि प्रामाण्यस्य स्वतस्त्ववादे ज्ञानग्रहे सति तत्र प्रमात्वस्यनिश्चयात्। यदि पुनः ज्ञाने ज्ञातेऽपि प्रमात्वस्य निश्चयो न स्यात्। तदा प्रमात्वे स्वतोग्राह्यत्वं न सिध्येत्। न च संशयस्थले ज्ञानग्रह एवं नास्ति इति वाच्यम् तथासति ज्ञानाग्रहे ज्ञानधर्मिक प्रामाण्य तदभावकोटिकसंशयायनुपपत्तेः। संशये धर्मिज्ञानस्य कारणत्वस्वीकारात्। इयञ्च संशयानुपपत्तिः मीमांसकानां नये निष्प्राणबन्धं गले पतिता स्यात्। यतो हि यदि ते प्रमाण्यस्य स्वतो ग्राह्यत्वं स्वीकरिष्यन्ति तदा अनभ्यासदृशायां मीमांसकानां मते प्रमाण्यसंशयानुपपत्तिरेव भविष्यति। न चेष्टापत्तिः वक्तुं शक्यते, ज्ञानग्रहानन्तरं यत्र जलज्ञानं जातं तत् प्रमा न वा इति प्रमात्संशयस्य लोकानुभवसिद्धत्वात्। प्रमात्वस्य स्वतोग्राह्यत्वपक्षे संशयोऽयं नैव युज्यते, कुत्र इति चेत् तन्मते ज्ञानग्रहे जायमाने ज्ञाने प्रमात्वस्यापि नूनं निश्चितत्वात्। तथा च प्रामाण्यंस्वतोग्राह्यत्वाभाववत् अनभ्यासदशायां सांशयिकत्वात् अप्रामाण्यवत्। स्वतो ग्राह्यत्वे

प्रामाण्यसंशयो न स्यात्। ज्ञाननिश्चायकसामग्र्या एवतन्निश्चयादिति भावः। अस्ति च प्रामाण्यस्य परतोग्राह्यत्वे अनुमानं प्रमाणम्। तच्चैवम्।

"विवादास्पदीभूतं प्रमात्मकं ज्ञानं ज्ञानग्राहकसामग्र्यतिरिक्त सामग्री ग्राह्यं कार्यत्वे सति तद्विशेषत्वाद् अप्रमावत्"

परतस्त्वम्—परतोग्राह्यत्वं द्विविधम्। ज्ञप्तौ उत्पत्तौ च। प्रामाण्यस्य ज्ञप्तौ परतस्त्वं चेत्थम्—सर्वतः प्राग् जलज्ञानानन्तरं प्रवृत्तौ सत्यां जलावाप्तौ पूर्वमुत्पन्नं ज्ञानं प्रमा सफलप्रवृत्तिजनकत्वात् यज्ज्ञानं प्रमा न भवति तज् ज्ञानं सफलप्रवृत्तिजनकमपि न भवति, यथा—अप्रमा। इत्यनुमानेनाऽनभ्यासदशोत्पन्नज्ञाने प्रमात्वं गृह्यते। एतावानयं विशेषो यद् अनभ्यासदशोत्पन्न प्राथमिकजलादिज्ञाने जाते तत्र प्रामाण्यसंशये सत्यपि पुरुषप्रवृत्तिर्जायते। प्रामाण्यज्ञप्तेः परतरानुकूलस्तर्कस्तावदित्थं यदि ज्ञानस्य प्रामाण्यं स्वतोग्राह्यं स्यात्तदाऽनभ्यासदशोत्पन्नज्ञाने प्रामाण्यसंशयो न स्यात्। तथाहि यदि ज्ञानं जातं तदा मीमांसकमते तदानीमेव प्रामाण्यमपि ज्ञातमेव इति कथं तत्र संशयः। यदि च ज्ञानमेव न ज्ञातं तदाधर्मिज्ञानाभावादेव कथं संशयः। तस्माज् ज्ञाने प्रामाण्यं सर्वथाऽनुमेयमेव। तथाहि—

"इदं जलज्ञानं प्रमा जलत्ववति जलत्वप्रकारकम्, सफलप्रवृत्तिजनकत्वात्, यन्नैवं तन्नैवं यथाऽप्रमा। एवम् इदं पृथिवीत्वप्रकारकं ज्ञानं प्रमा गन्धवति पृथिवीत्वप्रकारकत्वात्, इत्यनुमानेन ज्ञाने प्रामाण्यसिद्धिर्बोद्धव्या। यत्र यत्र प्रमात्वाभावस्तत्र सफलप्रवृत्तिजनकत्वाभावः यथा अप्रमायाम्"।

—न्या० सि० मु० विलासिनी टीका

एवं सर्वज्ञानं प्रमा, न किमपि ज्ञानं भ्रम इति प्रभाकरमतमपि न सम्यक्। यथाहि सर्वेषां ज्ञानानां यथार्थत्वे प्रमालक्षणे तद्वद्विशेष्यकत्वं विशेषणं व्यर्थं स्यात् तत्प्रकारकत्वमात्रस्यैव सम्यक्त्वात्। न च तत्प्रकारकत्वमात्रस्यैव प्रमालक्षणत्वमस्तु सर्वेषां ज्ञानानां यथार्थत्वपक्षे दोषाभावादिति वाच्यम्, भ्रमात्मकज्ञानस्यावश्यमुपगन्तव्यत्वात्, अन्यथा रङ्गे रजतार्थिनः रङ्गविशेष्यकरजतत्वप्रकारिका प्रवृत्तिर्न स्यात्, तन्मते भ्रमस्यैवाऽभावात्। अयं भावः विशेष्यतासम्बन्धेन तद्धर्मप्रकारकप्रवृत्तौ विशेष्यतासम्बन्धेन तद्धर्मप्रकारकेच्छायाः तादृशेच्छां प्रति च तेन सम्बन्धेन तद्धर्मप्रकारकज्ञानस्य च कारणत्वमिति रीत्या ज्ञानेच्छाप्रवृत्तीनां समानप्रकारकत्वेन कार्यकारणभावः। तथा च मीमांसकस्य मते रङ्गविशेष्यक रजतत्वप्रकारकज्ञानाऽप्रसिद्धया कारणाभावेन रङ्गे रजतार्थिनः प्रवृत्त्यनुपपत्तिरिति।

ज्ञानेच्छाप्रवृत्तीनामयमस्ति क्रमः प्रथमं जलजलत्वयोर्निर्विकल्पकम्, तदनन्तरम् "इदं जलम्" इति विशिष्टज्ञानम्, ततः इच्छा, ततः प्रवृत्तिः, तत् पश्चाज्जलप्राप्तिः जायत इति भावः।

एतादृशजलप्राप्त्यनन्तरमेव संवादिप्रवृत्तिजनकत्वलिङ्गकानुमित्या जातज्ञाने प्रामाण्यनिश्चयो जायते।

अत्र मीमांसका इत्थं वदन्ति यत् प्रामाण्यस्य परतो ग्राह्यत्वे अनवस्था स्यात्। अन्यथानुपपत्तिसिद्धमेव तस्य स्वतो ग्राह्यत्वम्। तथाहि—अप्रामाण्यज्ञानास्कन्दिज्ञानात् प्रवृत्त्यादिकार्यानुत्पत्त्या गृहीतप्रामाण्यकज्ञानत्वेनैव प्रवृत्तिकारणत्वमुपगन्तव्यम्। एवं प्रामाण्यग्रहस्यापि अप्रामाण्यज्ञानास्कन्दितस्याऽकिञ्चित्करतया

तत्रापि गृहीतप्रामाण्यकत्वमवश्यं निवेशनीयम्। एवं तादृशप्रामाण्यग्रहादावपि गृहीतप्रामाण्यकत्वं निवेशनीयम्।

एवं परतः प्रामाण्यग्रहपक्षे प्रवृत्त्यापि जनकज्ञाने अनुमानाद्यधीत एव प्रामाण्यग्रहोऽपेक्षणीयः। एवं तत्रापि तथाविधप्रामाण्यग्रहान्तरमपेक्षणीयमितिक्रमेणाऽनवस्थितप्रामाण्यग्रहधाराया अपेक्षिततया कदापि प्रवृत्त्यादिकार्यं नोत्पद्येत।

अस्माकं मते तु प्रवृत्त्यादिजनकीभूतज्ञानस्यैव स्वीयप्रामाण्यविषयकतया न प्रामाण्यग्रहान्तरापेक्षा। न च प्रामाण्यग्रहान्तरानपेक्षणेऽपि विषयानवस्था स्वतो ग्राह्यत्वपक्षे दूर्वारेव। तन्मतेऽयं घट इत्याकारकज्ञानस्यैव घटत्व-तत् प्रमाण्यादिघटिततत् प्रामाण्यप्रवाहावगाहित्वस्याऽङ्गीकरणीयत्वात्। तत्तत्प्रामाण्यावगाहित्वानभ्युपगमे गृहीतप्रामाण्यकप्रामाण्यज्ञानविरहेण प्रवृत्त्यनुदयापत्तिरिति वाच्यम्। एकस्यैव प्रामाणिकप्रामाण्यधारावगाहित्वस्य स्वीकारेऽपि नास्ति कोऽपि दोष इत्यवधेयम्।

एवं परतो ग्राह्यत्वपक्षे प्रवृत्तिकारणीभूतज्ञानादौ आनुमानिक एव प्रामाण्यग्रहो वाच्यः, तत्र च गृहीतप्रामाण्यकलिङ्गादिज्ञानापेक्षा, तत्र प्रामाण्यग्रहोऽपि गृहीतप्रामाण्यकलिङ्गज्ञानान्तरादित्येवं क्रमेण अनवस्थितलिङ्गादिज्ञानतत्प्रामाण्यप्रवाहापेक्षणे प्रवृत्त्यादिकार्यानुत्पत्तिरपिदुर्वारैवेति विभावनीयम्।

अथ स्यादप्येवं यदि गृहीतप्रामाण्यकज्ञानत्वेन प्रवृत्त्यादिकारणता स्यात्। तदेव नास्ति, अप्रामाण्यज्ञानास्कन्दितज्ञानात् प्रवृत्त्यादि कार्यंवारणाया प्रामाण्यज्ञानाभावविशिष्टज्ञानत्वेनैव तत्कारणत्वोपगमात्। न च प्रामाण्यग्रहवैशिष्ट्यनिवेशापेक्षया

अप्रामाण्यग्रहाभाववैशिष्ट्यनिवेशे गौरवमिति वाच्यम्। यतः सन्दिग्धप्रामाण्यकनिश्चयात्तत्कार्यविशेषापत्तिवारणाय निश्चितप्रामाण्यकत्वमेव भवता निवेश्यम्। मम तु मते संशयसाधारणाऽप्रामाण्यग्रहत्वावच्छिन्नाभावस्य निवेश इति निश्चयत्वस्याऽनिवेशेन लाघवमिति चेन्न। अगृहीताप्रामाण्यकनिश्चयत्वेन कारणतानयेऽपि प्रमात्वाभावग्रहकाले भ्रमत्वग्रहकाले च तत्तत्कार्यवारणाय प्रमात्वाभावभ्रमत्वरूपद्विविधाऽप्रामाण्यग्रहाभावः कारणतावच्छेदककोटौ निवेश्यः, तदपेक्षया एकविधप्रामाण्यग्रहस्यैव तथात्वमुचितम्। तदभाववति तत्प्रकारत्वरूपस्य विशेष्यावृत्तिप्रकारकत्वरूपस्य च भ्रमत्वस्याऽभावापेक्षया तद्वति तत्प्रकारकत्वस्य लघुशरीरतापा एव विनिगमकत्वात्। अथ गृहीतप्रामाण्यकनिश्चयत्वेन प्रवृत्त्यादिहेतुत्वोपगमेऽपि यत्र पूर्वोत्पन्नाप्रामाण्यग्रहविरोधेन प्रामाण्याविषयक एव विषयनिश्चयस्ततो प्रामाण्यग्रहनाशः, तदुत्तरं प्रवृत्त्याद्यनुदयप्रसंग इति चेत्—न जायते एव तादृशनिश्चयात् प्रवृत्त्यादिकार्यम्, अपि तु प्रामाण्यावगाहि निश्चायान्तरादेव। एवं च सिद्धे गृहीतप्रामाण्यकनिश्चयत्वादिना प्रवृत्त्यादिहेतुत्वे प्रामाण्यस्य स्वतस्त्वमावश्यकम्, परतस्त्वे तूपदर्शिताऽनवस्थाबाधकस्य जागरूकत्वात् इति भावः।

अत्र नैयायिकास्तदनुयायिनश्च इत्थं वदन्ति, यत् प्रथमानुव्यवसायस्य प्रामाण्यग्राहकत्वे व्यवसायतृतीयक्षणे तद्धर्मिकप्रामाण्यसंशयानुपपत्तिरिति अनाद्यतया भवद्भिः प्रामाण्यप्रत्यक्षं प्रति प्रामाण्यज्ञानत्वेन कारणत्वं कल्प्यते अतो न प्रामाण्यस्य स्वतस्त्वम्। न च प्रकारित्वविशेष्यत्वादिप्रामाण्यघटकपदार्थानां विशकलितोपस्थितिदशायामपि विशेष्ये विशेषणमिति न्यायेन प्रामाण्योपनीत-

मानोदयात् कथं प्रामाण्यप्रत्यक्षं प्रति प्रामाण्यविषयकज्ञानत्वेन हेतुता इति वाच्यम्। प्रामाण्यग्रहं विना विशेष्ये विशेषणमिति-न्यायेनापि प्रामाण्यप्रत्यक्षानभ्युपगमात्। अतएव मणिकृता प्रामाण्यरूपविशिष्टसाध्योपस्थितिं विना व्याप्तिप्रमासंभवेन कथं प्रामाण्यानुमितिरिति पूर्वपक्षमाशंक्य प्राग्भावीयसंस्काराधीन प्रामाण्यस्मरणमूलकव्याप्तिग्रहात् प्रामाण्यानुमितिरिति सांप्रदायिक-सिद्धान्तो दर्शितः।

एवं भट्टमतमपि सर्वथा निर्युक्तिकम्, तथाहि "ज्ञातो घटः" "अनुभूतो घटः" इत्यादि प्रतीतेः घटे ज्ञाननिरूपितविषयत्वाव-गाहित्वाङ्गीकारेणैवोपपत्तेः, प्रमाणान्तराभावाच्च ज्ञाततायाः अप्रसिद्धत्वेन तल्लिंगकज्ञानजन्यत्वप्रकारकानुमितेः सुतराम-प्रसिद्धत्वेन तत्र प्रामाण्यावगाहित्वासंभवात्। ज्ञानस्यातीन्द्रियत्वे घटं जानामीत्याद्याकारकज्ञाननिष्ठलौकिकविषयताशालिप्रत्यक्षा-पलापापत्तेः। आत्मसमवेतवृत्तिलौकिकविषयतासम्बन्धेन मानस-प्रत्यक्षत्वावच्छिन्नं प्रति तादात्म्येन ज्ञानत्वेन प्रतिबध्यप्रतिबन्धक-भावान्तरकल्पनापत्तेश्च। ज्ञानस्य ऐन्द्रियकत्वावश्यकत्वाच्चेत्य-न्यत्र विस्तर इति ध्येयम्।

एवं प्रमाया गुणजन्यत्वम्, अप्रमायास्तु दोषजन्यत्वमस्तीत्यपि बोध्यम्। तथाहि—प्रत्यक्षप्रमायां यथा भूयोऽवयवावच्छेदेन इन्द्रियसन्निकर्षात्मकगुणजन्यत्वम्। अथवा विशेषणविशेष्यसन्नि-कर्षात्मकगुणजन्यत्वम्। तदुक्तम्—

"प्रत्यक्षे तु विशेष्येण विशेषणवता समम्।
सन्निकर्षो गुणस्तु स्यादथत्वनुमितो गुणः।
पक्षे साध्यविशिष्टे तु परामर्शो गुणो भवेत्।

शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः।
शाब्दबोधे योग्यतायास्तात्पर्यस्याथवा प्रमा।
गुणः स्यात्" ॥ –भाषापरिच्छेदः–

"भ्रमभिन्नन्तु ज्ञानमात्रोच्यते प्रमा" (तत्रैव)

एवमनुमितौ व्यापकवति व्याप्यवत्ताज्ञानरूपगुणजन्यत्व-मस्तीति विदांकुर्वन्तु।

उपमितिरूपायां प्रमायां यथार्थसादृश्यज्ञानात्मकगुणजन्यत्वं वर्तते इत्यपि स्वीकुर्वन्ति उपमानप्रामाण्यविदो विद्वांसः।

शाब्दबोधप्रमायां यथार्थयोग्यताज्ञानरूपग्रहजन्यत्वम्, यथार्थ-वक्तृवाक्यार्थज्ञानरूपगुणजन्यत्वं विद्यते। इदमेव चोत्पत्तौ पर-तस्त्वम्। तथा च नैयायिकानां नये प्रमात्वरूपस्य प्रामाण्यस्य यथा परतोग्राह्यत्वं तथैव अप्रमात्वरूपस्य अप्रामाण्यस्यापि परत ग्राह्यत्वमेवेति न कश्चिद् दोष इत्यपि विभावनीयम्।

प्रामाण्याप्रामाण्ययोर्द्वयोरेव स्वतो ग्राह्यत्वमस्तीति सांख्याः वदन्ति। वेदान्तिनश्च प्रामाण्यं स्वतोग्राह्यमस्ति, अप्रामाण्यञ्च परतोग्राह्यमस्तीति व्याहरन्ति। नैयायिकास्तु उभयस्यैव परतो-ग्राह्यत्वं स्वीकुर्वन्ति। प्रामाण्यमपि परतोग्राह्यम्, अप्रामाण्यमपि परतोग्राह्यमिति कथयन्ति। तच्च विशदं निरूपितम्।

अप्रामाण्यनिश्चायकानुमानप्रयोगस्त्वित्थं वर्तते—यत्—

"शुक्तौ रजतम् इति ज्ञानम् अप्रमा विसंवादिप्रवृत्तिजन-कत्वात् यन्नैवं तन्नैवं यथा प्रमा" इत्यनेन विसंवादिप्रवृत्तिजनकत्व-लिङ्गकानुमानेन ज्ञाने भ्रमात्मके अप्रामाण्यमनुमीयते इति भावः।

अद्वैतवेदान्तिनां मते दोषाभावे सति यावत् स्वाश्रयग्राहकसामग्री-ग्राह्यत्वं स्वतस्त्वम्। एतेषां नयेऽपि प्रामाण्यं स्वत एव ज्ञायते स्वत एवोत्पद्यते च। ज्ञानसामान्यसामग्रीप्रयोज्यं हि प्रमात्वम्। ज्ञान-सामान्ये प्रमात्वप्रयोजिका सामग्री नहि भूयोऽवयवेन्द्रियसन्निकर्षः। रूपादिप्रत्यक्षे आत्मप्रत्यक्षे च तदभावात्। सत्यपि शंख तादृश-सन्निकर्षे पीतः शंख इति प्रत्यक्षस्य भ्रमत्वाङ्गीकाराच्च। अतएव अनुमित्यादिप्रमायां न सल्लिङ्गकपरामर्शादिकं गुणः। असल्लिङ्गक-परामर्शादिस्थलेऽपि विषयाबाधेन अनुमित्यादेः प्रमात्वात्। अद्वैतवेदान्तिनां मते स्वतस्त्वं च दोषाभावे सति यावत् स्वाश्रयग्राहकसामग्रीग्राह्यत्वम्। तथाहि—एवं प्रमात्वम्, तदाश्रयः वृत्तिज्ञानम्, तद्ग्राहकम् साक्षिज्ञानम्, तेन वृत्तिज्ञाने ज्ञायमाने तद्गतं प्रामाण्यमपि ज्ञायते। न चैवं प्रामाण्यसंशयानुपपत्तिः। तत्र संशयानुरोधेन दोषस्यापि सत्त्वेन दोषभावघटितस्वाश्रय-ग्राहकाभावेन तत्र प्रामाण्यस्यैवाऽग्रहात्।

यावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वयोग्यत्वं वा स्वतस्त्वम्। प्रामाण्यसंशयस्थले प्रामाण्यस्य स्वाश्रयग्राहकग्राह्यत्वयोग्यतायाः सत्त्वेपि दोषवशादग्रहेण न संशयानुपत्तिः। प्रामाण्यस्य ज्ञान-सामान्यसामग्रीप्रयोज्यत्ववत् अप्रामाण्यं न तथाविधम्। प्रमाया-मप्यप्रामाण्यापत्तेः। किन्तु दोषसामग्री ग्राह्यमप्रामाण्यमस्ति। यतो हि अप्रामाण्यघटकतदभावत्वादेः वृत्तिज्ञानानुपनीतत्वेन साक्षिणा ग्रहीतुमशक्यत्वात्। परन्तु विफलप्रवृत्त्यादिलिङ्गानुमि-त्यादिविषयीभूतमेवाप्रामाण्यमिति परत एवाऽप्रामाण्यं ज्ञायते उत्पद्यते च इति तु निष्कर्षः।

———

# शब्दस्य प्रमाण्याप्रामाण्य विचारः

बौद्धा वैशेषिकाश्च प्रत्यक्षानुमानातिरिक्तस्य कस्यापि प्रामाण्यं नाङ्गीकुर्वन्ति। ते हि शब्दोपमानादीनां विभिन्नवादिभिः स्वीकृतानामतिरिक्तप्रमाणानामनुमाने एवान्तर्भावं वदन्ति, विवदन्ते चात्र बहवः। तेषामयमाशयः—

"शब्दोपमानयोर्नैवं पृथक् प्रामाण्यमिष्यते, अनुमानगतार्थत्वात्" ( न्या० सि० मु० )। इत्येयं ब्रुवन्तो वैशेषिकाः शब्दोपमानयोरनुमानविधयैव प्रामाण्यं न तु स्वातन्त्र्येण इति कथयन्ति। तथाहि 'दण्डेन गामानयेत्यादिलौकिकपदानि, 'स्वाराज्यकामो वाजपेयेन यजेत' इत्यादिवैदिकपदानि वा तात्पर्यविषयस्मारितपदार्थसंसर्गप्रमापूर्वकाणि आकांक्षादिमत्पदकदम्बत्वात् 'घटमानये'त्यादिपदकदम्बवत्।

अथवा—एते पदार्थाः परस्परं संसर्गवन्तः योग्यतादिमत्पदोपस्थापितत्वात् तादृशपदार्थवत्। एवम्—गवयव्यक्तिप्रत्यक्षानन्तरम्—

"गवयपदं गवयत्वप्रवृत्तिनिमित्तकम् असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात्। असति वृत्त्यन्तरे वृद्धैर्यत्र यत् प्रयुज्यते तत्र तत् तत्प्रवृत्तिनिमित्तकम्, यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम्।

अथवा—'गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वाद्' इत्यनुमानेन पक्षधर्मताबलात् ( इतरबाधनिश्चयसहकृता ) तस्य गवयत्वप्रवृत्तिनिमित्तकत्वं सिद्ध्यति।

यद्वा 'गवयपदं गवयत्वप्रवृत्तिनिमित्तकं गवयत्वेतराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिनिमित्तकत्वा'दित्यनुमानेन गवयपदे गवयत्वप्रवृत्तिनिमित्तकत्वं साधनीयम्। तत्र इतराप्रवृत्तिनिमित्तकत्वे वादिनामविवाद एव। गोत्वादेर्गवयावृत्तित्वेन, द्रव्यत्वादेरतिप्रसक्तत्वेन सादृश्यस्य च गुरुत्वेन गवयपदप्रवृत्तिनिमित्तत्वासम्भवात्।

न च 'गवयपदं गवयत्वावच्छिन्ने शक्तम्' इत्याकारिका गवयत्वावच्छिन्नशक्तत्वानुमितिर्न सम्भवति, गवतेऽन्यत्र च गवयपदवाच्यत्वस्यासिद्धतया साध्याप्रसिद्धेः। अतस्तदर्थमुपमानस्य पृथक् प्रामाण्यं स्वीकार्यमिति वाच्यम्। गवयव्यक्तिप्रत्यक्षानन्तरं 'गवयो गवयपदवाच्यः, गवयपदनिरूपितलक्ष्यत्वाभाववत्त्वे सति गवयपदनिरूपितशक्तिज्ञानजन्योपस्थितिविशेष्यत्वात्'। अस्ति हि सार्वत्रिकीयं सामान्यव्याप्तिः—'योऽर्थः यत्पदनिरूपितलक्ष्यत्वाभाववत्त्वे सति यत्पदनिरूपितशक्तिज्ञानजन्योपस्थितिविशेष्यतावान् सोऽर्थः तत्पदनिरूपितवाच्यतावान्, यथा गौरित्युक्तानुमानाद् गवये गवयपदवाच्यत्वानुमितेः संभवात्। एवं 'गवयो गवयपदनिरूपितवाच्यतावान् असति वृत्त्यन्तरे गवयशब्दप्रयोगविषयत्वाद्' इत्यनुमानेनापि गवये गवयपदवाच्यत्वं सिद्ध्यतीति भावः।

प्रशस्तपादभाष्यकारेणापि—"शब्दादीनामप्यनुमानेऽन्तर्भावः, समानविधित्वाद्" इत्युक्तम्। यथा प्रसिद्धसमयस्यासन्दिग्धलिङ्ग-दर्शनप्रसिद्ध्यनुस्मरणाभ्यामतीन्द्रियेऽर्थे भवत्येवम् अनुमानं शब्दादिभ्योऽपि। यथा—व्याप्तिग्रहणबलेनानुमानं प्रवर्तते तथा शब्दादयोपीत्यर्थः। तथा हि 'शब्दोऽनुमानं व्याप्तिबलेनार्थं प्रतिपादकत्वाद् धूमवद्' इत्यनुमानेन शब्दस्यानुमानगतार्थत्वं मुक्तद्वारम्।

अयमभिप्रायः—यथा अनुमानं व्याप्तिबलेन प्रवर्त्तमानं दृश्यते तथैव शब्दादयोऽपि व्याप्तिबलेन प्रवर्तन्ते। अतः सिद्धमेतद् यद् यथा धूमोऽनुमानरूपेण प्रमाणं भवति तथैव शब्दोऽपि अनुमानरूपेणैव प्रमाणं भवति, नान्यथा। तावद्धि शब्दो नार्थं प्रतिपादयति यावदयमस्याव्यभिचारीत्येवं नावगम्यते, अवगते त्वव्यभिचारे स्वार्थे प्रतिपादयन् धूम इव शब्दोऽपि लिङ्गं स्यात्।

अत्र केचित् शब्दस्यातिरिक्तप्रामाण्यवादिन इत्थं संगिरन्ते यदनुमाने तु साध्यधर्मविशिष्टो धर्मी पक्षत्वेन प्रतीयते किन्तु शब्देनार्थानुमाने को धर्मीप्रतीयताम्? इत्यपि वदन्तु भवन्तः। न तावदर्थस्तस्येदानीमप्यप्रतीतत्वात्। शब्द एव धर्मित्वेन प्रतीयत इति चेत् तर्हि किमस्यानुमानस्य साध्यं भविष्यतीत्यपि वाच्यम्। अर्थवत्त्वमेव साध्यमिति चेत् न। पर्वतादेरिव वन्ह्यादिना शब्दस्याप्यर्थेन सह संयोगसमवायादिलक्षणः कश्चित् सम्बन्धः प्रतिपाद्यताम्, येन सम्बन्धेन अर्थविशिष्टोऽयं शब्दरूपो धर्मी साधनीयः स्यात्। शब्दार्थयोः प्रतिपाद्यप्रतिपादकभावरूप एव सम्बन्धो भवितुमर्हति नान्यः। स चार्थप्रतीत्युत्तरकालीन एव स्यात् नार्थप्रतिपादनात् प्राग् भवितुमर्हति। नापि वह्निधूमयोरिव

शब्दार्थयोरस्ति अविनाभावनियमः, देशकालव्यभिचारात्। अर्थात् यस्मिन् देशे शब्दस्तिष्ठति, एवं यस्मिन् काले शब्दस्तिष्ठति तस्मिन् देशे तस्मिन् काले वा अर्थस्य स्थितिरवश्यमेव स्यादित्यत्र नास्ति कश्चन नियमः। इदानीं कलिकाले अर्जुनशब्दस्य स्थितिस्तु-दृश्यते परन्तु अर्जुनरूपोऽर्थस्तु न प्राप्यते। एवम् असत्यामपि लङ्कायां भारते लङ्का चशब्दः श्रूयते, तस्मादनुमानसामग्रीवैचित्र्यात् शब्दो नानुमानं भवितुमर्हति, देशविशेषे कालविशेषे वा अर्थ-व्यभिचारात्। धूमस्तु न क्वचिदपि वह्निं व्यभिचरति, शब्दस्तु व्यभिचरति, इत्येवं व्यभिचारविचारभिया शब्दस्य नानुमानेऽन्तर्भावो मन्तुं शक्यते।

अपि च यदि शब्दोऽनुमानं स्यात्तर्हि शब्दस्यापि पक्षसत्त्व-सपक्षसत्त्वविपक्षासत्त्वैव त्रैरूप्यज्ञानेनैन प्रामाण्यनिश्चयः स्यात्, नाप्तोक्तत्वज्ञानमात्रेण, आप्तोक्तत्वज्ञानमात्रेण तु निश्चीयमान-प्रामाण्यकतया शब्दोऽनुमानात् स्वयमेव व्यतिरिच्यते उभयो-र्वैधर्म्यात्।

अत्रोच्यते—उपरिकृतायां तर्जन्याम् अंगुल्यां देशकालव्यवहितेषु अर्थेषु यद् दशसंख्यानुमानं न तत्र संख्या धर्मिणी, अज्ञायमान-त्वात्। नापि तर्जनीविन्यासो धर्मी, तस्य प्रतिपाद्यमानया दशसंख्यया सह संयोग-समवायादिसम्बन्धाभावेन दशसंख्याविशिष्ट-तर्जनीविन्यासरूपधर्मिप्रतिपादनायोगात्। तर्जनीविन्यासदश-संख्ययोर्नास्ति एकदेशता, नाप्यस्ति एककालता, वद कस्यानुरोधेन कथं तत्र स्यादनुमानप्रवृत्तिः। वैश्यानां क्रय-विक्रयव्यवहारेऽस्ति एतादृशोऽव्यभिचरितो नियमः येन केवलं तर्जन्या उत्थानमात्र-रूपविन्यासेन दशसंख्या बोद्धव्या इति, अतः तथाविधतर्जनी-

विन्यासेन तर्जनीमुपरिउत्त्थापयितुः पुरुषस्य अयमस्ति अभिप्रायो यत् तर्जन्या उपरि उत्त्थापनेन अस्य पुरुषस्य दशसंख्याविषयकबोधो जायतामिति। एवं सति अर्थानुमानप्रसङ्गेऽपि शब्देन इयमेव रीतिर्बोद्धव्या। सर्वतः प्राग् "गौः" इति शब्दोच्चारणेन वक्तुः ककुदादिमदर्थविषयकबोधानुकूला इच्छा गम्यते, स्वसन्ताने गोशब्दोच्चारणस्य पदार्थविवक्षापूर्वकत्वोपलम्भात्। तादृशार्थ-विवक्षणेन चार्थानुमानमेव।

अयं चात्रास्ति अनुमानप्रयोगः—पुरुषजातीयो गोरूपधर्म्यात्मक-ककुदादिमदर्थविवक्षावान् गोशब्दोच्चारणकर्त्तृत्वात्, अहमिव। अर्थसत्ताया अभावेऽपि अनाप्तपुरुषाणां विवक्षोपलब्धेर्न विवक्षा-तोऽर्थसिद्धिरिति चेत्? तर्हि पृथक् प्रमाणत्वेन स्वीकृतादपि शब्दात्कथमर्थसिद्धिः स्यात्? यतोऽभिधाभ्रान्त्या विप्रलम्भधिया वाऽर्थशून्यस्य शब्दस्य प्रयोगदर्शनात्। आप्तपुरुषोच्चरितशब्दाद-र्थतप्रतीतिर्जायत इति चेदाप्ताभिप्रायादेवार्थस्याधिगतिः (अनुमितिः) इति समानार्थः।

पूर्वमेतद् यदुक्तं, यत् सत्यपि लिङ्गत्वे (अर्थज्ञापकत्वे) शब्दस्य देशविशेषे कालविशेषे च अर्थव्यभिचारो दृश्यते, न धूमस्य। तत्रैष न्यायः—धूमः स्वाभाविकेन संयोगसम्बन्धेन अग्नेर्लिङ्गम् अर्थात् ज्ञापको भवति। शब्दस्तु न तथा। स तु यथा पुरुषकृतसङ्केतद्वारा तर्जन्याद्यङ्गुलीनां विशेषविन्यासरूपचेष्टया दशसंख्याया अनुमानं भवति तथैव शब्दोऽपि पुरुषस्य बोधनेच्छा-रूपसंकेतद्वारा अर्थं बोधयतुं प्रवर्तते, अतः पुरुषस्य संकेतः यत्र यत्रार्थे यस्य यस्य शब्दस्य भवति, तस्य तस्यैव अर्थस्य विवक्षावग-

तिद्वारेण तल्लिङ्गं भवति। यथा अविच्छिन्नमूलाविशिष्टे ऊर्ध्वं-मुखरेखाविशिष्टे च धूमे वह्नेरव्यभिचार (व्याप्ति) रूपो दृश्यते सम्बन्धः। तथैव आप्तपुरुषोच्चरितेऽपि शब्देऽर्थस्य अव्यभिचार (व्याप्ति) रूपः सम्बन्धोऽपि सर्वथाऽप्रतिहत एवेति नास्ति तत्र लेशतोऽपि कश्चित् सन्देहावसरः। अत शब्दोऽनु-मानरूप एव।

## बौद्धमतेन शब्दप्रामाण्यखण्डनम् :—

बौद्धा अपि शब्दस्य प्रामाण्यं नाङ्गीकुर्वन्ति। ते हि इत्थं वदन्ति शब्दो न प्रमाणं प्रमित्युपधायकत्वाभावात् स्मृति-संस्कारवत्। न च शब्दविषयकलौकिकश्रावणप्रत्यक्षमादाय वाधः, शब्दस्य स्वविषयिणीं श्रावणप्रत्यक्षप्रमितिं प्रति विषयविधया जनकत्वादिति वाच्यम्। हेतुघटकप्रमितौ शब्दाविषयकत्वस्य विशेषणीयत्वात्। न चैवमपि गगनं मेघवद् विलक्षणशब्दवत्त्वाद् इत्याकारकशब्दलिङ्गकानुमितिमादाय पुनरपि बाधो दुर्वार एव, तादृशानुमित्युपधायकत्वस्यैव शब्दे सत्त्वादिति वाच्यम्। अनुमितिभिन्नत्वस्यापि प्रमितौ विशेषणीयत्वात्। पक्षीभूतशब्द-ज्ञानपरम् अन्यथा नैयायिकानां मतेऽपि शब्दज्ञानस्यैव प्रमाण-त्वात् सिद्धसाधनतापत्तेः। ज्ञायमानशब्दस्य कारणत्वे तु यथाश्रुत-मेव सम्यक् प्रतीयते। अत्र पक्षतावच्छेदकावच्छेदेनैव साध्यसिद्धिः अभिप्रेता, तेन अनुत्पन्नशाब्दबोधके शब्दज्ञाने शब्दे वा सिद्धसाधन-सत्त्वेऽपि न क्षतिः। अवच्छेदकावच्छेदेन अनुमितौ सामानाधि-करण्येन सिद्धेः अप्रतिबन्धकत्वात्। न च पूर्वोक्तरीत्या शब्दज्ञानस्य प्रमाजनकत्वे शब्दस्य च प्रमाजनकत्वानभ्युपगमे शब्दश्रवणसम-

नन्तरं विशिष्टानुभवस्यैवाप्रसिद्धेः किन्तु पदार्थोपस्थितिमात्रं तत्र जायते, उपस्थितस्यार्थस्य असंसर्गाग्रहमात्रं वा भवति तेनैव च प्रवृत्त्यादीनामुपपत्तिरपि अप्रत्यूहेति विभावनीयम्। न च विशिष्टविषयकानुभवस्यानुभविकत्वादनुभवापलापो युक्त इति वाच्यम्। एवमपि शब्दात् प्रातिविस्करूपेण तत्तत्पदार्थोपस्थितौ जायमानायां मानसात्मकस्यैव विशिष्टबोधस्य स्वीकारादिति न कोऽपि दोषः।

अत्रेदं विचारणीयम्—शब्दो न प्रमाणमिति वाक्यं प्रमोपधायकं न वा अर्थात् प्रमाजनकं न वा। प्रथमपक्षे अर्थात् प्रमोपधायकत्वपक्षे "शब्दो न प्रमाणं प्रमित्युपधायकत्वाभावात्" इति न वक्तुं शक्यते, यतः प्रमोपधायकत्वपक्षे प्रमोपधायकत्वपक्षे प्रमित्युपधायकत्वस्यैवं शब्दे सत्त्वेन प्रमित्युपधायकत्वाभावरूपहेतोरसत्त्वेन स्वरूपासिद्धिः स्यात्, अतः प्रथमपक्षो न समीचीनः। द्वितीयपक्षे अर्थात् प्रमोपधायकत्वाभावपक्षे नास्ति स्वरूपासिद्धिः, परन्तु तथा सति भ्रमोपधायकत्वम्, प्रमित्यनुपधायकत्वं वा अर्थतः आयाति। परन्तु सर्वथाऽनुभवविरुद्धमेतत्, अतो द्वितीयपक्षोऽपि न समीचीनः।

अपि च शब्दस्य प्रमोपधायकान्यत्वे भ्रमोपधायकत्वे वा नास्ति किमपि प्रमाणम्, प्रत्युत एतद्विपरीतपक्षे प्रमोपधायकत्वे एव अस्ति भवदुक्तवाक्यमेव प्रमाणम्। अतो हेतोरपि नास्ति द्वितीयपक्षः साधुरित्यपि विभावनीयम्।

अन्यच्च द्वितीयपक्षे भागासिद्धिश्च स्यात्, यत आकांक्षादिमतः पदार्थोपस्थित्यादिरूपव्यापारवतश्च शब्दात् शाब्दबोधात्म-

कप्रमित्युत्पत्तेरावश्यकत्वेन ताद्दशशब्दे प्रमित्युपधायकत्वस्यैव सत्त्वात् । न च आकांक्षायोग्यतादिज्ञानविशिष्टेऽपि शब्दे आकांक्षायोग्यतादिज्ञानरूपसामग्रीविरहदशायां प्रमोपधायकत्वाभावस्तत्रापि स्वीकृतः स्याद् इति न भागासिद्धिरिति वाच्यम् । तथापि चक्षुरादौ व्यभिचारापादनं दुर्वारमेव, चक्षुरादावपि इतरसामग्र्यसमवधानदशायां प्रमात्मकफलोपधायकत्वाभावस्य सत्त्वाभावः । अन्योन्याभावस्य व्याप्यवृत्तितानियमवादिनये तत्र साध्यविरहात् । प्रमोपधायकत्वात्यन्ताभावस्य साध्यत्वे सिद्धसाधनादिति भावः ।

## शब्दप्रामाण्यखण्डने विशेष विचारः—

वस्तुतो घटमर्थमहं श्रृणोमि, इदञ्च पुराणादिभ्य एव मया श्रुतम् इत्याद्यनुभवविशेषसिद्धेव शाब्दत्वजातिः। न च "श्रु" धातोः श्रवणेन्द्रियजन्यश्रावणप्रत्यक्षे एव शक्तिः स्वीक्रियतामिति कथं शाब्दत्वजातिः ताद्दशानुभवविषयसिद्धा भविष्यति इति वाच्यम् । "श्रु" धातोर्नानार्थकत्वात्, "आत्मा वाऽरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादिश्रुतौ, घटरूपोऽर्थो मया श्रुत इत्यादिलौकिकवाक्ये च शाब्दबोधेपि "श्रु" धातोः प्रयोगदर्शनात् ।

अपि च अस्तु शाब्दत्वं जातिः, अस्तु वा तदवच्छिन्नं प्रति पदज्ञानजन्यपदार्थोपस्थितिः कारणम् । परन्तु सा जातिर्मानसत्त्वव्याप्येव मन्तव्या, एवं च चक्षुरादिवत् शब्दोऽपि प्रत्यक्षप्रमाणान्तर्गत एव आयाति तावतापि तस्य प्रमाणान्तरत्वं

नास्तीति भावः। न च तस्य मानसत्वव्याप्यत्वे शब्दादनुपस्थितानामपि घट-पटादीनां शाब्दबोधे मानं स्यात्, एवं च घटादिकं शृणोमीत्यनुव्यवसायापत्तिरिति वाच्यम्। शाब्दत्वावच्छिन्नविषयताया घट-पटादिषु असत्त्वेन तादृशा तु व्यवसायापत्तिर्नास्ति, यतस्तावद् यदंशे वृत्त्या पदजन्यपदार्थोपस्थित्यादिजन्यत्वं तत्रैवास्माभिः तादृशविषयतायाः स्वीकारादिति चेन्न। शाब्दत्वजातेर्मानसत्वव्याप्यते प्रमाणाभावेन तदवच्छिन्नं प्रति वृत्त्या पदजन्यपदार्थोपस्थित्याकांक्षाज्ञानादेर्हेतुत्वस्यावश्यमङ्गीकर्त्तव्यतया लाघव-गौरवविषयकविचारस्यावकाशाभावात्। न च शाब्दत्वस्य मानसत्वविरुद्धत्वे मानसत्वावच्छिन्नं प्रति अवश्यं तादृशशाब्दसामग्र्याः स्वातन्त्र्येण प्रतिबन्धकत्वं परिकल्प्यताम्, मानसत्वव्याप्यत्वे च शाब्दत्वस्य न तादृशशाब्दसामग्र्याः प्रतिबन्धकत्वं परिकल्पनीयम् इति वाच्यम्। यतस्तावत् शाब्दसामग्रीत्वेन ममापि मानसत्वावच्छिन्नं प्रति न प्रतिबन्धकत्वेऽस्ति कश्चिदाग्रहः, अपि तु अनुमित्यादिसाधारणमानसेतरज्ञानसामग्रीत्वेनैव प्रतिबन्धकत्वं कल्पनीयम्। तच्च अनुमित्याद्युत्पत्तिदशायां मानसोत्पत्तिवारणाय भवताऽपि आवश्यकत्वेन स्वीकार्यमेवेति कुतो लाघवम्। प्रत्युत एतद्विपरीतं गौरवमेव प्रतिभाति, तथा हि—शाब्दत्वस्य मानसत्वविरुद्धत्वपक्षे मानसभिन्नज्ञानसामग्र्या मानसत्वमेव प्रतिबध्यतावच्छेदकं स्यात्। मानसत्वव्याप्यत्वपक्षे तु शाब्दभिन्नमानसत्वमेव प्रतिबध्यतावच्छेदकं वाच्यम्। इतरथा भिन्नविषयकलौकिकप्रत्यक्षसामग्रीसत्त्वे।

## बौद्धानां प्रमाणद्वैविध्यनियमः

सौगतानामत्र विषयेऽयमाशयः यदनुमानं परोक्षार्थविषये प्रवर्तते तादृशानुमानात् परोक्षविषयत्वाविशेषेण शब्दस्य नास्ति अर्थान्तरत्वम्। तथा चाह—

मानं हि द्विविधं मेयद्वैविध्याच्छक्त्यशक्तितः।
अर्थक्रियायां केशादिर्नार्थोऽनर्थाधिमोक्षतः॥

—न्यायभूषणे पृ० ३८०॥

प्रमाणद्वैविध्यसाधने मेयद्वैविध्यं हेतुः। अर्थात् विषयद्वैविध्यात् प्रमाणद्वैविध्यं प्रवर्तते। विषयद्वैविध्ये तु "शक्त्यशक्तितः" इति हेतुः। यदा साक्षात् स्वविषयकज्ञानजननं प्रति शक्तत्वं तदा सा शक्तिः, यदा तु पारम्पर्येण शक्तत्वात् प्रतीयते तदा तच्छक्तत्वमशक्तिः। तत्र शक्तोऽर्थः स्वेन रूपेण लक्ष्यमाणत्वात् स्वलक्षणं प्रत्यक्षस्य विषयः। अन्यस्तु सामान्यरूपेण ज्ञायमानत्वात् सामान्यलक्षणमनुमानस्य विषयो भवति। सौगतानां नये द्विविध एवार्थः—प्रत्यक्षः परोक्षश्च। तद्ग्राहकं प्रमाणमपि द्विविधं प्रत्यक्षमनुमानञ्च। प्रत्यक्षं स्वलक्षणे प्रवर्तते, अनुमानञ्च सामान्यलक्षणे। "यस्यार्थस्य सन्निधानासन्निधानाभ्यां ज्ञानप्रतिभासभेदस्तत् स्वलक्षणम्। अन्यत् सामान्यलक्षणम्"।

ना० वि० पृ० १६॥

बौद्धानामिदमपि कथनं साधु संगच्छते यदपरमस्माकं परममित्रं वैशेषिकोऽपि अस्मत्प्रमाणव्यवस्थावदेव प्रमाणं प्रतिपद्यते। केवलं तयोर्लक्षणव्याख्ययोर्भेदः। बौद्धानां नये लक्षण-व्याख्ये भिन्ने वैशेषिकाणां नये चाभिन्ने। बौद्धानां नये

प्रमाणविषयको "वादः" प्रमाणव्यवस्थाशब्देन कथ्यते, अन्येषां च "प्रमाणसंप्लव" शब्देन गीयते। इत्थं च पारिशेष्यात् "शब्दो न प्रमाणं प्रमित्युपधायकत्वाभावात् स्मृतिसंस्कारवत्" इत्येवं अनुमानं निष्पन्नमिति भावः। एतेन शब्दस्य प्रमाणस्वातन्त्र्यं सर्वथा निरस्तं भवति, अनुमाने एव सोऽन्तर्भूतो भवति। तदुक्तम्—

शब्दस्य खलु पश्यामो नानुमानाद्विभिन्नताम्।
अतस्तल्लक्षणाक्षेपान्न वाच्यं लक्षणान्तरम्॥
यथा प्रत्यक्षतो धूमं दृष्ट्वाऽग्निरनुमीयते।
तथैव शब्दमाकर्ण्य तदर्थोऽप्यवगम्यते॥
पक्षधर्मत्वमप्यस्ति शब्द एव यतोऽर्थवान्।
प्रकल्पयिष्यते पक्षो धूमो दहनवानिव॥
अतएव हि मन्यन्ते शब्दस्यापि विपश्चितः।
आप्तवादाविसम्वादसामान्यादनुमानताम्॥

न्यायमञ्जरी—पृ० १३६॥

## शब्दस्यानुमानात् पार्थक्यम्

शब्दस्यानुमानान्तर्भावो न युक्तः, यतः—आकांक्षादिमत्-पदस्मारितत्वं परस्परसंसर्गव्याप्यमिति व्याप्तिविरहकाले, पदस्मारितत्वाभाववती गौरिति पक्षधर्मत्वाभावनिश्चयकाले च शाब्दबोधस्यानुभवसिद्धत्वात् नानुमानेऽन्तर्भावो भवितुमर्हति शब्दस्य। एतादृशव्याप्तिविरहकाले, पक्षधर्मत्वाभावनिश्चयकाले वा अनुमितिकारणीभूतस्य परामर्शस्यैवानुत्पादेन तदानीमुत्पन्नस्य शाब्दबोधस्य कस्यानुरोधेनानुमितिरूपता स्यात्? पदस्मा-

रितत्वाभावनिश्चयदशायामपि च 'घटमानय', 'पटमानय' इत्यादिवाक्यात् घटपटकर्मकानयनानुकूलकृतिमानिति शाब्दबोधस्यानुभवसिद्धत्वात् पूर्वोक्तपरामर्शस्यैव तत्रानुत्पादेन शब्द कुतोऽनुमानेऽन्तर्भावयितुं शक्यते। ननु शाब्दबोधे पदजन्यपदार्थोपस्थितिज्ञानमेव हेतुः इति पदजन्यस्मृतिविषयत्वरूपस्य पदस्मारितत्वस्याज्ञानदशायां शाब्दबोध एव न भवति इति चेन्न। स्वरूपसती एव पदार्थोपस्थितिः शाब्दबोधे कारणं न तु ज्ञाता सती प्रमाणाभावात्, अनुमितौ तु व्याप्यवत्तानिश्चयस्यैव हेतुत्वात्। अन्यच्च स्वरूपसत्या एव पदजन्यपदार्थोपस्थितेः शाब्दबोधहेतुत्वे पदैरस्मारितस्यापि पदजन्यपदार्थस्मृतत्वग्रहात् शाब्दबोधप्रसङ्गाच्च तथा च कार्यकारणभावग्राहकाद् अन्वयसहचाराद् व्यतिरेकसहचाराच्च व्याप्तिज्ञानं न शाब्दबोधकारणं भवितुमर्हतीति तत्त्वम्। अत्रेदं विचारणीयम् "एते पदार्थाः परस्परं संसर्गवन्त आकांक्षायोग्यतादिमत् पदस्मारितत्वात्" इत्यत्र संसर्गवत्त्वं साध्यम्। तत्रेदं पृच्छ्यते यत् साध्यीभूतं संसर्गवत्त्वं किं नियमतः संसर्गवत्त्वम्, आहोस्वित् संसर्गस्वरूपयोग्यत्वं? प्रथमे—'पयसा सिञ्चती'त्यादौ व्यभिचारः, यतः पयस्त्वावच्छिन्ने सेचनकरणत्वस्य नियमतोऽभावात्। सर्वासु पयोव्यक्तिषु सेचनकरणत्वाभावात्, तथा च येन पयसा कदाचिदपि क्वचिदपि सेको न जातस्तत्रैव व्यभिचार इति भावः। द्वितीयपक्षे न संसर्गनिश्चयः, निश्चयाभावे च न प्रवृत्तिः। तदभिमुखं तदर्थि प्रवृत्तिं प्रति तत्र तदर्थसंसर्गनिश्चयस्य कारणत्वात्। यथा गृहाभिमुखं घटार्थिनः प्रवृत्तिं प्रति गृहे घटसत्वनिश्चयस्य कारणत्वम्। इदमत्रोक्तम्—चिन्तामणौ प्रामाण्यवादेः तावदेवमुक्तं यत्

"यस्य संशयव्यतिरेकनिश्चयो प्रवृत्तिप्रतिबन्धको तन्निश्चयस्तद्धेतुः। अनुमितौ व्याप्तेरिव इति"। प्रामाण्यवादचिन्तामणौ पृ० १५॥

अस्यायमाशयो यद् अर्थस्य संशयः, अर्थस्य व्यतिरेकनिश्चयश्च अर्थविषयकप्रवृत्तौ प्रतिबन्धकौ दृश्येते, अतस्तन्निश्चयो हेतुर्वाच्यः। यथा घटस्य संशयः भूतलं घटवन्न वा, एवं भूतलं घटाभाववत् इत्याकारकघटव्यतिरेकनिश्चयश्चेति द्वावेव घटविषयिण्याम् अर्थात् घटानयनविषयिण्यां प्रवृत्तौ प्रतिबन्धकौ स्तः। फलतया तत्सत्त्वे घटानयने प्रवृत्तिर्न दृश्यते। एवम् अनुमितौ पर्वतो वह्निमान् इत्याद्यनुमितौ "धूमो वह्निव्याप्यो न वा" इति संशयः "धूमो वह्निव्याप्यभावानि" इत्याकारको व्यतिरेकनिश्चयश्चेति द्वावेव "पर्वतो वह्निमान्" इत्याकारकानुमितौ प्रतिबन्धकौ स्तः, अतो व्याप्तेर्निश्चयः अर्थात् "धूमो वह्निव्याप्यः" इत्याकारको धूमधर्मिकवह्निव्याप्तिनिश्चयः पर्वतो वह्निमान् "इत्यनुमितौ हेतुः, इति सर्वैः निस्संशयमुपगम्यते। एवञ्च संसर्गस्वरूपयोग्यत्वस्य साध्यतापक्षे—" एते पदार्थाः परस्परं संसर्गवन्तः" इत्यादि पदार्थपक्षकानुमितौ संसर्गवत्त्वरूपसाध्यस्य निश्चय एव न स्यात्, निश्चयाभावे च कथं प्रवृत्तिरिति स्वयं विदांकुर्वन्तु विचक्षणाः। अतोऽयं द्वितीयपक्षोऽपि न साधुरिति सुतरां पर्यवस्यति।

अन्यच्च पदार्थपक्षकानुमितौ संसर्गवत्स्वरूपसाध्यस्य यदि संसर्गस्वरूपयोग्यत्वमर्थः तदाऽपि अस्माभिः पृच्छ्यते, सा योग्यता अन्वयप्रयोजकरूपवत्त्वरूपा, बाधविरहरूपा वा? यदि अन्वय-

प्रयोजकरूपवत्त्वरूपा सा योग्यता, तत्रेदं पृच्छ्यते यद् "अन्वयः=संसर्गः, तत्प्रयोजकम् पयस्त्वादिकं तद्वत्त्वरूपेव सा वाच्या, एवञ्च तस्या हेतुविशेषणत्वे सिद्धसाधनात्। हेतुतावच्छेदकरूपेण हेतुनिश्चयस्य पूर्वमपेक्षितत्वात् हेतुतावच्छेदककोटिप्रविष्टयोग्यताघटकतयैव अन्वयरूपसंसर्गसिद्धेः। द्वितीये अर्थाद् बाधविरहरूपयोग्यतापक्षे न सिद्धसाधनमिति न वक्तुं शक्यते, मीमांसकैस्तदनङ्गीकारात्। अपि च तादृशबाधाभावरूपयोग्यतायाः पदार्थनिष्ठतया पदधर्मत्वाभावेन तन्निवेशस्य कर्त्तुमशक्यत्वाच्च। अन्वयप्रयोजकरूपवत्त्वस्य तु पयस्त्वादेः पदवाच्यतया पदधर्मत्वात्। किं च बाधनिश्चयाभावेन अन्यथासिद्धस्य बाधाभावरूपयोग्यतानिश्चयस्य सर्वथा अनावश्यकत्वात्। पूर्वोक्तयोग्यतायाः हेतुविशेषणत्वासंभवात्। आकांक्षायाश्च स्वरुपसत्या एव हेतुतया तस्या अपि हेतुविशेषणत्वं नोपपद्यते, अनुमितौ च हेतुविशेषणनिश्चयस्यावश्यकत्वात्। अथापि व्यापकतावच्छेदकरुपेणैव अनुमितेर्व्यापकविषयत्वात् विशेषसंसर्गासिद्धिः। विशेषसंसर्गासिद्धौ च प्रवृत्तेरप्यनुपपत्तिः। विशेषरुपावच्छिन्नविषयताशालिनिश्चयस्यैव विशेषरूपावच्छिन्ने प्रवृत्तिजनकत्वात्। तथा च शाब्दबोधानन्तरं प्रवृत्तेरानुभविकतया, आवश्यकतया च तादृशप्रवृत्त्युपपत्तये विशेषसंसर्गबोधकः शब्दः अवश्यं प्रमाणान्तरत्वेन स्वीकार्यः। एतेन अनुमानाद् व्यतिरिक्तः शब्दः प्रमाणान्तरं सिद्ध्यतीति भावः।

एवमेव घटादन्य इत्यत्रापि भेदो घटप्रतियोगिताक इति रीत्या भेदात्मकपक्षविधया घटान्यत्वस्यमानेऽपि घटान्यत्वेन

घटान्यस्य अनुमितौ मानमसंभवि, यतः पक्षो भेदः अन्यपदार्थश्च भेदवान्, तथा च भेदवानिति अन्यशब्दार्थबोधोपपत्त्यर्थं शब्दस्य प्रमाणान्तरत्वं सर्वथाऽऽवश्यकमित्यपि बोध्यम् ।

इदानीं पदपक्षकानुमानं विमृश्यते—तथा हि 'एतानि पदानि तात्पर्यविषयस्मारितपदार्थसंसर्गप्रमापूर्वकाणि, आकांक्षायोग्यताऽऽसत्तिमत्पदकदम्बत्वात्, घटमानयेतिपदकदम्बवत् "इति पदपक्षकमनुमानं तैरुद्घोष्यते । अत्र शब्दप्रामाण्यवादिनामयमाग्रहो यत् तत्र आकांक्षायाः कारणत्वमेव न संभवति, यतो हि आकांक्षायाः स्वरूपसत्या एव कारणत्वाद्, अनुमितौ च हेतुनिश्चयस्यापेक्षितत्वात् । समभिव्याहृतपदस्मारितपदार्थजिज्ञासाया एवाकांक्षात्वात् । तथा च एवंभूताऽऽकांक्षाया विद्यमानत्वे तादृशाकांक्षाज्ञानाभावेऽपि च शाब्दबोधस्य सर्वथाऽनुभविकतया तत्र शाब्दबोधोपपत्तये शब्दस्य प्रमाणान्तरत्वमावश्यकम् ।

यदि च जिज्ञासारहितस्यापि पुरुषस्य शाब्दबोधो जायेत इत्युच्यते तदा तु जिज्ञासायोग्यत्वमेव वाच्यमिति शब्दमणौ सुस्पष्टीकृतम् । इयं च आकांक्षा प्राचीनैः स्वीक्रियते ।

नवीनैस्तु समभिव्याहाररूपैवाकांक्षा स्वीक्रियते, साऽपि ज्ञातैवोपयुज्यत इति नास्ति पूर्वोक्तदोषाणामवकाशलेशोऽपि । परन्तु इदञ्च पूर्वोक्तं दूषणं परैः स्वीकृतामेवाकांक्षामनुसृत्य प्रदत्तमित्यपि विभावनीयम् ।

इदन्तु चिन्त्य-अर्थविषयकं ज्ञानमेव प्रवर्तकम्, न तु तद्विषयकज्ञानविषयकं ज्ञानम्, गौरवात् । कार्यकारणभावग्राहकाद् अन्वयसहचाराद् व्यतिरेकसहचाराच्च "इदं रजतम्" इति ज्ञानादेव

प्रवृत्तिर्दृश्यते न तु तद्विषयकज्ञानाद् अर्थाद् रजतज्ञानविषयकानु-व्यवसायादिति व्यभिचाराच्चापि रजतविषयकज्ञानविषयकं ज्ञानं न प्रवृत्तिजनकम् ।

यद्यपि रजतज्ञानं विषयविधया अवगाहमानं रजतमहं जानामीत्यनुव्यवसायात्मकं ज्ञानमपि रजतविषयकं वर्तत एवेति, तथापि तस्य अनुव्यवसायात्मकज्ञानस्यरजतांशे रजतत्वप्रकारकत्वं नास्ति। तत्र ज्ञानस्य रजतत्वप्रकारकत्वेन भावात् । प्रवृत्ति-जनकीभूतं तु ज्ञानं रजतत्वप्रकारकमेवेति विभावनीयम् । अन्यथा भ्रान्तपुरुषस्येव भ्रान्तिं जानतोऽपि पुरुषस्य प्रवृत्त्यापत्तेः, तस्येव भ्रान्तत्वापत्तेश्च । एवमनुमितेर्व्यापकतावच्छेदकप्रकारताकत्व-नियमात् स्मारितपदार्थसंसर्गप्रमापूर्वकत्वसिद्धावपि रजतविषयक-प्रमापूर्वकत्वं तु पुनरपि असिद्धमेव। न च रजतार्थिपुरुषस्य तावन्मात्रात् प्रवृत्तिर्दृश्यते, अतः प्रवृत्तिकारणीभूतज्ञाननिर्वाहार्थं शब्दस्य प्रमाणान्तरत्वमवश्यं स्वीकार्यमिति भावः ।

वस्तुतस्तु शाब्दबोधस्यानुमितित्वे सत्येव आकांक्षादिमत्पद-समूहत्वरूपलिङ्गकत्वं तत्र कल्पनीयम्, परन्तु तस्याऽनुमितित्वमेवा-सिद्धम्, प्रमाणाभावात् । शाब्दबोधोऽनुमितिः लिङ्गजत्वादित्य-नुमानं च पक्षे हेत्वभावेन स्वरूपासिद्धमेव। न चास्तित्वेन गामनुमिनोमीत्यनुव्यवसाय एव शाब्दबोधस्यानुमितित्वे मानम-स्तीतिवाच्यम् अस्तित्वेन गामनुमिनोमीत्यनुव्यवसायस्यैव कालत्रयेऽपि भवितुमशक्यत्वात् । अपि तु अस्तित्वेन गौः श्रुतो नत्वनुमित इत्यस्यैवानुभूयमानत्वेन शब्दो नानुमानमिति भावः। एतादृशानुव्यवसायानङ्गीकारे च वह्न्याद्यनुमितिः वह्न्यादिपद-

ज्ञानजन्या अनुमितित्वात्" इत्यनुमानेन पदज्ञानजन्यत्वं प्रसाध्य, अनुमितिः शाब्दबोध। पदज्ञानजन्यत्वादित्यनुमानेन[1] शाब्दत्वसिद्धौ[3] अनुमितेः[2] अनुमानस्यापि शब्दवत् प्रमाणान्तरत्वं भज्येत। तथाहि आह विश्वनाथपञ्चाननः "नहि सर्वत्र शब्दश्रवणानन्तरं व्याप्तिज्ञाने प्रमामस्तीति, किञ्च सर्वत्र शाब्दस्थले यदि व्याप्तिज्ञानं कल्प्यते तदा सर्वत्रानुमितिस्थले पदज्ञानं कल्पयित्वा शाब्दबोध एव किं न स्वीक्रियतामिति ध्येयम्"। न्यायसिद्धान्तमु० ॥

## शब्दस्यानुमानात् पार्थक्यम्

बौद्धैः वैशेषिकैश्च शब्दस्यानुमानात् पृथक् प्रामाण्यं खण्डितम्, अर्थात् शब्दो नास्ति अनुमानात् पृथक् प्रमाणम् इत्यादिः। तत्रेदं पुनस्तैर्विचोर्यते शब्दो हि द्विविधः, पदस्वरूपः, वाक्यस्वरूपश्च। वाक्यघटकशब्दार्थसम्बन्धद्वारैव वाक्यं शाब्दबोधं जनयितुं समर्थः भवति। अभिनवविरचितश्लोकश्रवणे सति पदसंस्कृतबुद्धीनां बुद्धिमतां विदुषां तदर्थावगमनदर्शनात्। अतः सम्बन्धाधिगममूलप्रवृत्तिशालिनाऽनुमानेन सह शब्दस्य तादात्मयम् कथमपि न संभावयितुं शक्यते। शब्दस्य तु सम्बन्धाधिगमसापेक्षत्वेनतद्विषयभेदप्रयुक्तत्वेन सामग्रीभेदप्रयुक्तत्वेन च अनुमानाद् भेदः सुस्पष्ट एव। शब्दलिङ्गयोर्विषयस्तावत् सुतरां भिन्न एवेति नास्त्यत्र लेशतोऽपि संशयावकाशः। अनुमानं तु वाक्यार्थविषयम् "अत्राग्निरग्निरग्निमान् पर्वत" इति तत एव निश्चयात्। उक्तं च धर्मविशिष्टो धर्मी साध्यः। पर्वतादिविशेष्यकज्ञानपूर्विका बह्न्यादिविशेषणकज्ञप्तिः धूमलिङ्गाज्जायते, शब्दात्तु विशेष्यज्ञानमिति सुस्पष्टो विषयभेदः।

ननूक्तं यथाऽनुमाने धर्मविशिष्टो धर्मी साध्यः, एवमत्र अर्थविशिष्टो हि शब्दः साध्यो भवतु, मैवम्, शब्दस्य तु हेतुत्वात्। न च हेतुः पक्षो भवितुं युक्त इति भावः। अतश्च शब्दस्यानुमानात् पार्थक्यम् सर्वथा स्वीकर्त्तव्यमिति।

अपि च यथा "घट" गताऽऽपूर्वी भिन्ना, सा च घकारोत्तर-अकारोत्तरटकारोत्तर-अत्वरूपा वर्तते, एवं घटगताऽऽनुपूर्वीतोऽपि पटगताऽऽनुपूर्वी सर्वथा भिन्नाऽस्ति, सा च पकारोत्तर-अकारोत्तर-टकारोत्तर-अत्वरूपेति।

तथैव शब्दानुमानयोरपि आनुपूर्वी परस्परं विभिन्नैव। शब्दानुपूर्वी तावत् शकारोत्तर-अकारोत्तर-बकारोत्तर-दकारोत्तर-अत्वरूपा वर्तते, अनुमानगता चानुपूर्वी सर्वथा ततो विलक्षणैव। सा च अकारोत्तर-नकारोत्तर-उकारोत्तर-मकारोत्तर-आकारोत्तर-नकारोत्तर-अत्वरूपेति सर्वथा ततो वैलक्षण्यं चास्तीति विभावयन्तु भवन्तः। एवं च सर्वत्र आनुपूर्वीविशेषात्मकाकांक्षाविच्छिन्न-विषयिणी बुद्धिरपि तादृशाऽनुपूर्वीभेदाद् भिद्यते एव। तथा च तादृशानुपूर्वीभेदात्, एवं तादृशानुपूर्वीविशेषात्मकाकांक्षावच्छिन्न-विषयकबुद्धिभेदाच्चापि शब्दानुमानयोरस्ति परस्परं भेद इत्यपि चास्ति सर्वथा सुस्पष्टः पन्थाः।

अन्यच्च लिङ्गस्थले धूमेन लिंगेन अग्निरूपो लिङ्गी गम्यते न तु जन्यते। शाब्दबोधस्थले च अर्थविषयिणी प्रतीतिः शब्देन जन्यते न तु गम्यते, इति लिङ्गलिङ्गीस्थले गम्य-गमकभावः, अर्थप्रतीतिस्थले शाब्दबोधस्थले च जन्य-जनकभाव इत्यनेनाप्यनयोरस्ति पार्थक्यम्।

अपि च नास्ति कश्चन अर्थप्रतीतिस्थले नियमः यद् यत्र देशे काले च शब्दः प्रतीयते तत्रैवार्थं इति यथोक्तं सप्रमाणं पूर्णं श्रोत्रियः। मुखे हि शब्दमुपलभामहे भूभावार्थमिति। कर्णाकाशे शब्दमुपलभामहे न तु तत्रार्थमिति। एवं यस्मिन् काले शब्दस्तस्मिन्नेव कालेऽर्थोऽपीत्यपि नास्ति नियमः। युधिष्ठिरार्जुनप्रभृतीमर्थानाम् भावेऽपि श्रावणप्रत्यक्षात्मिका शब्दोपलब्धिस्तु भवत्येव। लिङ्गलिङ्गिस्थले च यत्र देशे काले च लिङ्गं तत्रैव देशेकाले च लिङ्गी अपि वर्तते इति नास्ति तत्र देशभेदः कालभेदो वा इति। यथा महानसप्रदेशे महानसीयो धूमो वर्तते तस्मिन्नेव प्रदेशे महानसीयवह्निरपि वर्तते। अतोऽनुमानप्रमाणतः सर्वथा भिन्नोऽयं शब्द इत्यत्र न कैश्चिदपि क्वापि विप्रतिपत्तिरुद्भावनीया, इति।

ननु अन्वयसहचारव्यतिरेकसहचार निश्चयद्वारेण शब्दार्थसम्बन्धे निश्चीयमानेऽन्वयव्यतिरेकौ अवश्यमुभयोगिनौ भवतः। यथोक्तम्—

तत्र योऽन्वेति यं शब्दमर्थस्तस्य भवेदसौ।
अन्यानुपपत्त्या हि शक्तिस्तत्रवातिष्ठते॥

श्लोकवार्तिके वाक्यपाराधिकरणे श्लो० १५७॥

अयमाशयः—यं शब्दं योऽर्थोऽन्वेति तस्य शब्दस्य सोऽर्थं इत्यन्यथानुपपत्त्या तस्य शब्दस्य तत्रार्थे एव शक्तिर्निर्णीयते। सत्यमेतत्—किन्तु सम्बन्धबलेन सिद्धायामर्थबुद्धौ समयनियमार्थावन्वयव्यतिरेकौ भवतः, ततोऽर्थबुद्धिरपि धूमादेरिव शब्देनान्वयव्यतिरेककृतैव वर्तते।

अपि च—

धूमादिभ्यः प्रतीतिश्च नैवावगतिपूर्विका ।
इहावगति पूर्वैव शब्दादुत्पद्यते मतिः ॥
स्थविरव्यवहारे हि बालः शब्दात् कुतश्चन ।
दृष्ट्वाऽर्थमवगच्छन्तं स्वयमप्यवगच्छति ॥

॥ न्यायमञ्जरी ॥

तत्राप्येवं संकेतो विधीयते—"एतस्माच्छब्दादयमर्थो बोद्धव्यः" घटशब्दात् कम्बुग्रीवादिमद्व्यक्तिरूपोऽर्थः बोद्धव्यः, पटशब्दात् तन्तूनाम् आतानवितानभावापन्नः पटव्यक्तिरूपोऽर्थः बोद्धव्य इति । बोधश्चात्र प्रतीतिरेव । अनुमानस्थले लिङ्गलिङ्गिनोरविनाभावो नाम सम्बन्धः, अन्यश्च शब्दार्थयोः समयापरनामा वाच्यवाचकभावः सम्बन्धः कारणत्वेन निर्दिष्टो वेदितव्यः । अतश्च अनुमानस्थले लिङ्गलिङ्गिनोः योऽविनाभावनामकोऽस्ति कश्चन सम्बन्धः, ततो भिन्न-एव वाच्यवाचकभावनामकः कश्चन सम्बन्धः शब्दार्थयोः शाब्दबोधस्थलेऽपि अवश्यं स्वीकर्त्तव्यः । एवं विध-विषयभेदात् सामग्रीभेदाच्च प्रत्यक्षवद् अनुमानाद् भिन्न एव शब्द इति सिद्धम् । अतश्च शब्दोऽपि अनुमानात् पृथगेव प्रमाणम् ।

शब्दस्य प्रामाण्यन्तु सिद्धम्, इदानीन्तु तस्य भेदाभेदपरीक्षणं क्रियते । अर्थात् शब्दस्य प्रामाण्यं शब्दो भिन्नम् अभिन्नं वेत्यादि । अर्थात् शब्दः स्वयं प्रामाण्यरूपस्ततोऽतिरिक्तो वा इत्येवं केवलं विचार्यते । अर्थविषयकप्रतीतिजनकत्वरूपं शब्दस्य प्रामाण्यन्तु प्रागेव विचारितम् । "अयं घटः" इत्याकारिका या घटरूपार्थ-विषयिणी प्रतीतिः, तस्या जनकः घटशब्दः । पटविषयिण्या

"अयं पटः" इत्याकारिकायाः प्रतीतेः कारणं पटशब्दः। यतोहि तत्तच्छब्दोच्चारिते सति तत्तदर्थंविषयकबोधो जायते।

परन्तु अत्रेदं विचार्यते, यत् कोऽसौ अर्थः ? यादृसार्थंविषयकप्रतीतिजनकत्वेन शब्दस्य प्रामाण्यं निश्चीयते। स च अर्थः, जातिरूपः व्यक्तिरूपः, तद्वान्नामरूपो वा कश्चन अस्ति इत्येवंविधविकल्पमात्रमूलत्वात् शब्दा अर्थं न स्पृशन्ति, अर्थात् शब्दा अर्थं निरूपयितुं न प्रभविष्यन्ति इत्यर्थः। तदुक्तम्—

विकल्पमात्रमूलत्वान्नार्थं शब्दाः स्पृशन्त्यमी।
अर्थो निरूप्यमाणश्च को वा शब्दस्य शक्यते॥

वक्तुं न जातिर्न व्यक्तिर्न तद्वान्नाम कश्चन। अन्यच्च योऽसौ निरूप्यमाणोऽर्थः स जातिरूपो भवेद् व्यक्तिरूपो वा भवेद्, अथवा तद्वान्नामरूप एव कश्चन स्यात्, इत्यत्रापि नास्ति अस्माकं विप्रतिपत्तिः, परन्तु तेन अर्थेन सह शब्दस्य कीदृशः सम्बन्धः ? स च सम्बन्धः समयात्मकः, नित्यो वा कश्चन तदतिरिक्तोऽस्ति सम्बन्ध इत्यपि वाच्यम् ?

परन्तु अतीन्द्रियेऽर्थे कस्यापि सम्बन्धस्य निर्णयः कर्तुं न पार्यते, अतएव पारमार्थिकरूपेण वाक्यार्थोऽपि न निश्चेतुं शक्यते। सम्बन्धनिश्चयं विना शब्दार्थोपस्थितिः पदार्थोपस्थितिर्वा सर्वथा भवितुमशक्या, कथमपि न भवितुमर्हतीतिभावः। अनयोः सम्बन्धस्याग्रे निरूप्यमाणत्वात् शक्ति निरूपणावसरेऽत्र तु एतावन्मात्रमेवोक्त्वा विरमामः।

अपि च शब्दस्य आप्तोक्तत्वं नित्यत्वञ्चापि न विश्वासपथमधिरोहति। श्रूयते वेदानुपूर्वी शब्दात्मिका सर्वापि नित्या। अस्तु

वेदानुपूर्वी नित्या परन्तु तस्या नित्यत्वेऽपि वैदिक्यो रचनाः कर्तृपूर्विकाः। कृतकत्वेऽपि केन कृता इत्यपि दुर्गमं स्यादिति। कर्त्ताऽस्ति, स च निर्द्वन्द्वः, स च एकः, स च सर्वविद्, एवं स परमकारुणिक इति न प्रतिपत्तुं शक्यते परस्परविरुद्धत्वात्। परस्परविरुद्धाश्च सन्ति सर्वेऽप्यागमाः। तेषां कस्य कर्त्ता ईश्वरः, कस्य नेति न वयं मन्महे। वेदे सन्ति बहवो दोषाः, व्याघातश्चास्ति, पुनरुक्ततार्ऽपि, फलस्यानुपलम्भश्च, एवं फलविपर्ययोऽप्यस्ति। एवं विरुद्धार्थाभिधायिनाम् अर्थवादानां मन्त्राणां नामधेयादिपदानां वा कथं स्यात् समन्वयः। इत्यादिभिर्बहुभिः प्रमाणैः वेदप्रामाण्यं सर्वथा संदिग्धं विषये पथि च वर्तते। स्वीयजीविकोपायबुद्ध्या स्वश्रद्धया वा एतादृशी नाटकरचना रचिता भवेदिति प्रतीयते। नास्त्यत्र किमपि हेत्वन्तरं प्रतीयमानं दृष्टिपथमवतरति इत्यादिभिः हेतुभिः शब्दस्य प्रामाण्यं नहि सुस्थिरं प्रतीयते।

## शब्दप्रामाण्यसमर्थनम्

पूर्वं बहुभिः प्रमाणैः वेदप्रामाण्यं संदिग्धं विषये पथि च वर्तमानं तदुक्तं तन्न समीचीनं प्रतिभाति, अर्थासंस्पर्शित्वदोषद्रष्टारस्ते इत्थं प्रतिपादयन्ति 'अस्मदंगुल्यग्रे हस्तियूथशतमास्ते' इति स्वभाव एव शब्दानामर्थासंस्पर्शित्वं वर्तते। दुर्लभपदार्थसंसर्गं विकल्पमात्राधीनोत्पादनसमर्थाः स्वीयं महत्त्वमनुवर्तमाना निरस्तबाह्यपदार्थसमन्वयान् विकल्पमात्रगर्भितान् प्रत्ययानुत्पादयन्तो दृश्यन्ते। चक्षुरादिज्ञानेन्द्रियाणामपि अलीककचकूर्चकादिप्रतीतिहेतुत्वं वर्तते, तावतापि तेषामर्थासंस्पर्शित्वं नास्ति इति

चेत्—तेषां हि तिमिरादिदोषदुष्टचक्षुषामेव तथाविधविभ्रम-कारणत्वं प्रतीयते न तु स्वमहिम्नैव, तद्वदत्रापि पुरुषदोषाणामेव महिमा न शब्दानामिति चेत् कथयन्ति भवन्तः तन्नः युक्तियुक्तं प्रतीयते—तथाहि—अस्माभिरिदं दृश्यते यद् दोषवतामपि मूकादि-मनुष्याणां अनुच्चारितशब्दानामपीदृशविप्लवोपजननपटुत्वा-भावात्, असत्यपि च मनुष्यान्तःकरणकालुष्ये यथा प्रयुज्यमाना-न्यंगुल्यग्रादिवाक्यानि विप्लवभाजो भवत्येवेति शब्दानामेव अयं महिमा न पुरुषवक्तृदोषाणाम्। तदेवोक्तम्—

विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः।
तेषामन्योन्यसम्बन्धे नार्थं शब्दाः स्पृशन्त्यमी ॥
॥ न्यायमञ्जरी ॥

अत्राहुः—स्यादेवं यदि न कदाचिदपि कश्चिदपि शब्दः यथार्थ-ज्ञानं समुत्पादयेत्, अर्थसंस्पर्शित्वमेव शब्दस्य स्वरूपमिति ज्ञायते, भवति हि गुणवत्पुरुषभाषितात् 'नद्यास्तीरे फलानि सन्तीति' वाक्याद् अनिरस्तबाह्यार्थविषयकं यथार्थं ज्ञानमिति, तदनन्तरं पुरुषस्य तादृशार्थप्राप्तेः। एतादृशार्थप्राप्तिश्च न अर्थसंस्पर्श-शून्यादपि शब्दविकल्पमात्राद् भवितुमर्हतीति भावः। ननु आप्त-पुरुषैरेतादृशवाक्यप्रयोगेऽपि संदिग्धो व्यतिरेकः किं शब्दाभाव-प्रयुक्तोऽयमयथार्थप्रतीत्यनुत्पादः, अथवा वक्तृपुरुषदोषाभावादिति नैतदेवम्—

अनुच्चरितशब्दोऽपि पुरुषो विप्रलम्भकः।
हस्तसंज्ञाद्युपायेन जनयत्येव विप्लवम् ॥ न्यायमंजर्याम् ॥

न च हस्तसंज्ञादिना शब्दानुमानम्, शब्दानुमानकृतश्च विप्लवः इति वोच्यताम्, एवंविधप्रतीत्यभावान्नेत्थं वक्तुं

शक्यते। पूर्वोक्तनद्यादिवाक्यात् कुत्र चित् विज्ञाने जायमाने नदीतीरमनुगच्छन् अनासादितफलः प्रवृत्तिकारणीभूप्रतीतिः पुरुषमेवाधिक्षिपति, धिक्, हा, तेन दुरात्मना विप्रलब्धोऽस्मि इति, न शब्दम्, प्राप्तफलश्च पुरुषमेव श्लाघ्यते साधुः साधुना तेनोपदिष्टमित्यतः पुरुषनिष्ठदोषस्यैवान्वयानुविधानात्तदभावकृत एव आप्तपुरुषेषु तूष्णीमासीनेषु विभ्रमानुत्पाद इति न पूर्वोक्तः संदिग्धो व्यतिरेकः, पुरुषदोषकृत एव शब्दाद्विप्लवो न स्वरूपनिबन्धनः।

ननु पुरुषदोषकृतश्चेद् विप्लवः तर्हि पुरुषदोषकृतत्वेऽपि किं स्यात्, पुरुषस्य गुणवतो दोषवतो वा शब्दोच्चारणमात्रे एव व्यापारः, पश्चात् कार्यन्तु शब्दायत्तमेवेति तत्स्वरूपकृत एवायं विभ्रमः इत्येव आयातम्। खेदस्तावत्, नद्यास्तीरे फलानि सन्तीति यथार्थनिश्चये जातेऽपि तत्र शब्दस्यैव व्यापारः, पुरुषस्तु उच्चारणमात्रेणैव कृतकृत्यः चरितार्थो वा स्यात् इति नैकान्ततः शब्दस्यार्थासंस्पर्शित्वमेव स्वरूपं वक्तुं शक्यते, वस्तुत एतदेव युक्तमपि प्रतीयते, यत् प्रदीपवदर्थप्रकाशत्वमात्रमेव शब्दस्य स्वभावो न यथार्थत्वमयथार्थत्वं वेति विचार्यताम्। विपरीतेऽप्यर्थे प्रदीपस्य प्रकाशत्वपक्षस्तु सर्वथानिवार्यपक्ष एव। एतावास्तुविशेष-प्रदीपस्तु स्वरूपसदेव वस्तु प्रकाशयति, शब्दे नास्ति अयं नियमः स तु ज्ञायमानवस्तुरूपार्थप्रकाशकः, न तु स्वरूपसत् वस्तु प्रकाशकः। अतएव अंगुलिशिखराधिकरणक रेणुसतृशवचसि बाधितेऽपि भूयो भूयोऽप्युच्चार्यमाणे भवति अयं विभ्रमः, प्रकाशकत्वतद्रूपानपायात् नत्वेष दोषः शब्दस्येति सुतरां विदांकुर्वन्तु भवन्तः। तदुक्तम्—

पदार्थानान्तु संसर्गमसमीक्ष्य प्रजल्पतः ।
वक्तुरेव प्रमादोऽयं नशब्दोऽत्रापराध्यति ।। न्यायमंजर्याम्—

अपि च अतिरिक्तप्रमाणादर्शनमेवात्र बाध्यते, नहि तावत् हस्तियूथशतमपि तत्र बाध्यते इति शाब्दोऽन्वयः । पुरुषस्तु एकमात्रं स्वीयं दर्शनमेव शब्दद्वारा परेषां प्रकाशयति । तत्रेदं विचार्यते, यदि तत्र तदेव दर्शनमस्ति दोषदुष्टं तर्हि शब्दोऽपि तत्र सर्वथा दोषदुष्ट एव स्यात् । नास्ति चेद्दोषदुष्टस्तर्हि शाब्दोऽपि सर्वथा अदुष्ट एवेति विभावनीयम् । इत्यनेन स्पष्टमिदमायातं यद् दोषवतः पुरुषस्य दर्शनं सर्वथा दुष्टं भवति, गुणवतश्चादुष्टं भवति । अदृष्ट्वापि किमपि वस्तु यदुपदिश्येत सोऽपि बुद्धिदोष एव न तु शब्दनिष्ठो दोषविशेषः । तस्मात् सकलवस्तुविषयकदर्शनस्य पुरुषगतगुणदोषान्वयव्यतिरेकानुविधायित्वात् तत्कृतमेव । तत्कृते एव च शाब्दस्य यथार्थत्वायथार्थत्वे । तदुक्तं—सत्यमपि भवति—असत्यमपि भवति ।

तेनाभिधातृदौरात्म्यकृतेयमयथार्थता ।
प्रत्ययस्येति शब्दानां नार्थसंस्पर्शिता स्वतः ।।
या तु जात्यादिशब्दार्थपराकरणवर्त्मना ।
अर्थासंस्पर्शिता प्रोक्ता सा पुरस्तान्निषेत्स्यते ।।

शक्तिग्रहनिरूपणावसरे जात्यादिशब्दार्थं स्वयं वयं निराकरिष्यामः ।।

—————

# पदार्थसामान्यविवेचनम्

पदजन्यपदार्थोपस्थितेः शाब्दबोधे करणत्वं प्रतिपादितम्। तादृशोपस्थितेर्विषयीभूतः पदार्थः क इति जिज्ञासायां महर्षिगौतमेनाप्युक्तम्—

"जात्याकृतिव्यक्तयस्तु पदार्थः" गौतमसूत्र—२।२।६८ ॥

यथा घटमानयेत्यादिस्थले घटपदाभिधेयः घटत्वात्मकजातिः, तादृशजातेर्वैशिष्ट्यात्मकः समवायसम्बन्धः कम्बुग्रीवादिमान् व्यक्तिविशेषो घटपदार्थः। महर्षिणा गौतमेन पदार्थत्वं जात्याकृति-व्यक्तिषु त्रिष्वेव व्यवस्थापितम्। तथापि जातिमदर्थक पदस्य जातिरूपोऽर्थः शक्यतावच्छेदकत्वेन व्यवह्रियते। आकृतिः = सम्बन्धः, स च शक्यतावच्छेदकतावच्छेदकत्वेन कथ्यते। व्यक्तिः = रूपादिविशेषगुणाश्रयभूता मूर्तिः = मूर्तं द्रव्यं व्यक्तिरित्युच्यते। सा च व्यक्तिः पदनिरूपितायाः शक्तेराश्रयभूतापि वर्तते। जात्याकृतिसमानाधिकरणः संख्यादिभिन्नो यो गुणस्तदाश्रयीभूतः पदार्थो व्यक्तिरित्युच्यते यथा घटादिर्व्यक्तिः। अपरे तु जात्याश्रयो द्रव्यमेव व्यक्तिरित्याहुः। केचन विद्वान्सः परिच्छिन्न-

परिमाणस्याश्रयो मूर्तिः सैव व्यक्तिः, व्यक्तेर्लक्षणमित्यर्थो वा। केषाञ्चिद्विदुषामयमाशयो यत् सर्वेषामेव पदार्थानां संज्ञा व्यक्ति-रेवेति भावः। यथा—देवदत्त–यज्ञदत्तेत्यादि संज्ञैव व्यक्तिः। एवञ्च जात्याकृति-व्यक्तिषु त्रिष्वेव पदार्थत्वं व्यवस्थितं भवतीति भावः।

तच्च पदार्थत्वं पदाभिधेयत्वरूपम्, पदवाच्यत्वरूपम्, क्वचित्-पदबोध्यत्वरूपं वा, पदतात्पर्यविषयत्वरूपम्, वृत्त्या पदोपस्था-प्यत्वरूपं वा, पदशक्यत्वरूपं वा, तादृशशक्यतावच्छेदकरूपं वा, तादृशशक्यतावच्छेदकतावच्छेदकरूपं वा, पदशक्तिरूपं वा इत्यादि। पदनिष्ठनिरूपकतानिरूपितनिरूप्यतावत्या लक्षणा-त्मिकया वृत्त्या बोध्यमाने लक्ष्यार्थभूततीरे वर्तमानं पदार्थत्वं पदबोध्यत्वरूपं वर्तते। व्यञ्जनयावृत्त्या साहित्यिकैरङ्गीकृतया बोध्यमाने व्यङ्ग्यार्थे पदतात्पर्यं विषयत्वरूपं पदार्थत्वं वर्तते। अन्यत् सर्वमपि पदार्थत्वं वाच्यार्थे, शक्यभूतेऽर्थे समन्वितं बोध्यम्। सर्वमपि मतमतान्तरेण सर्वथा निर्दुष्टं च वर्तते इत्यपि बोध्यम्। एतेषां पदार्थानाम् अन्तर्भावो विभागश्च प्रागेव विनिरूपितः। "शाब्दबोधं प्रति पदार्थोपस्थितेः कारणत्वविचारावसरे" एवा-स्माभिः सर्वमपि निरूपितम्।

## गवादिपदानां विशिष्टे शक्तिरुपलक्षिते वा

गवादिपदानां गोत्वाद्यवच्छिन्ने एव गवादिपदार्थे शक्तिः, गोत्वादिकञ्च गवादिपदार्थे विशेषणमेव न तूपलक्षणमित्यर्थः। यदि गवादौ गोत्वादिकमुपलक्षणं स्यात्तदा गोत्वादेरुपलक्षणत्वेन रूपेण प्रमेयत्व-वाच्यत्व-द्रव्यादिधर्माविशेषाद् यथा गवादिपदाद्

गवादेर्गोत्वादिना बोधो जायते तथा प्रमेयत्वेन—वाच्यत्वेन—द्रव्यत्वादिना वा रूपेणापि बोधो भवतु, परन्तु गवादिपदाद् गवादेः प्रमेयत्वादिरूपेण बोधो न भवति प्रत्युत् गोत्वादिरूपेणैव बोधो जायते इति नियमो नोपपद्येत, गोत्वादेर्विशेषणत्वे तु गोत्वादिकं विशेषणमेव प्रमेयत्वद्रव्यत्वादिकञ्च उपलक्षणमिति विशेषाद् विशेषणीभूतधर्मस्वरूपेणैव बोधाङ्गीकाराच्चोक्तनियमः साधु संगच्छते इति भावः।

ननु यथा गवादिपदार्थे गोत्वादिकं वर्तते तथा द्रव्यत्वादिकमपि वर्तते एवेति गवादिपदानां गोत्वादिविशिष्टे एव शक्तिर्न तु प्रमेयत्वद्रव्यत्वादिविशिष्टे शक्तिरिति नियमस्य किन्तात्पर्यमस्ति इत्यपि वाच्यम् ?

गवादौ निरूपकतासम्बन्धेन गवादिपदनिरूपिता शक्तिरपि वर्तते समवायेन च गोत्वद्रव्यत्वादिकमपि च वर्तते इति गवादिपदशक्तौ गोत्वद्रव्यत्वादिकमपि च वर्तते इति गवादिपदशक्तौ गोत्व-द्रव्यत्वादिधर्मस्य सामानाधिकरण्यरूपं वैशिष्ट्यमपि चास्ति इति शक्तौ यादृशधर्मस्य सामानाधिकरण्यरूपं वैशिष्ट्यं भवति तादृशधर्मेणैव पदार्थस्य शक्त्या बोधो जायते। अस्ति च गवादि पदशक्तौ द्रव्यत्वादेरपि सामानाधिकरण्यरूपं वैशिष्ट्यम् इति गवादिपदाच्छक्त्या गवादेर्द्रव्यत्वादिरूपेणापि कथं न बोधो जायते ?

अत्रोच्यते—गोपदस्य गो-गोत्व-तत्समवायेषु च शक्तिः। एवमन्यत्रापि घट-पटादिस्थलेषु सर्वत्र बोध्यम्। गवादौ गोत्वादेरेव विशेषणत्वं, द्रव्यत्वप्रमेयत्वादेश्चोपलक्षणत्वमेव न तु विशेषण-

त्वम्। गोत्वादेर्विशेषणत्वे युक्तिश्चेत्थम् निरूपकतासम्बन्धेन गवादिपदनिष्ठशक्तिमति गवादौ यद्यपि द्रव्यत्वादिवैशिष्ट्यमस्ति। तथापि द्रव्यत्वादौ अवच्छेदकतासम्बन्धेन तच्छक्तिविरहात् गवादिपदनिरूपितायाः शक्तेरभावात् द्रव्यत्वादीनामुपलक्षणत्वमेव वक्तव्यम्। गोत्वादौ च अवच्छेदकतासम्बन्धेन गोपदनिरूपितायाः शक्तेः सत्त्वेन गोत्वादीनां विशेषणत्वमेव सिद्ध्यतीत्यर्थः। "गोपदाद्गोर्बोद्धव्या" "गोपदं गोत्वावच्छिन्नबोधकम्" इत्याकारिका या भगवदिच्छारूपा शक्तिरस्ति तत्र गोर्नाम समवायेन गोत्वावच्छिन्ना व्यक्तिरेव, इति भगवदिच्छारूपशक्तौ गौः गोत्वम् तयोर्वैशिष्ट्यं समवायश्चेति त्रितयमेव भासते न तु द्रव्यत्वम्, प्रमेयत्वादिकञ्च, येन द्रव्यत्वाद्यवच्छिन्ने गवादिपदानां शक्तिः सिद्ध्येदिति भावः।

## गोत्वादेर्गवादिपदवाच्यत्वे प्रमाणम्

गवादिपदानां बोधकत्वलक्षणा या गवादौ प्रवृत्तिरस्ति तत्र गोत्वादिकमेव निमित्तं वर्तते, यतो हि गोत्वावच्छिन्ने एव तादृशप्रवृत्तेर्दर्शनात् इति गोत्वादिकमेव गोपदस्य प्रवृत्तिनिमित्तं बोध्यम्।

तत्र हि यदि गोत्वादेर्गवादिपदवाच्यत्वं न स्यात्तदा प्रवृत्तिनिमित्तलक्षणे प्रवृत्तिनिमित्तस्य गोत्वादेर्वाच्यत्वे सतीति विशेषणं नोपद्येत तथैव हि "जात्याकृतिव्यक्तयः पदार्थः" इति न्यायसूत्रोक्तपदार्थत्वं च नोपपद्येत, इत्यतो गोत्वादेरपि गवादिपदवाच्यत्वमावश्यकमेवेत्यर्थः। एवञ्च प्रवृत्तिनिमित्तेपि-शक्यतावच्छेदकेऽपि शक्तेः सत्त्वात् तस्यापि वाच्यत्वमवश्यमभ्युपगन्तव्यम्।

वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वं प्रवृत्तिनिमित्तत्वम्। यथा—गोत्वादौ वाच्यत्वमप्यस्ति—गोपदवाच्यगवादिरूपार्थंवृत्तित्वमप्यस्ति गोपदवाच्यगवादिरूपार्थविशेष्यकोपस्थितिप्रकारत्वमप्यस्ति इति प्रवृत्तिनिमित्तत्वस्य गोत्वादौ सत्त्वेन गोत्वस्य गोपदनिरूपितवाच्यत्वमक्षतमेवेति भावः।

शब्दाश्रयत्वस्य आकाशवृत्तित्वाद् आकाशोपस्थितौ प्रकारतया भासमानत्वाच्च आकाशपदप्रवृत्तिनिमित्तत्वापत्तिवारणाय वाच्यत्वे सतीति विशेषणमुक्तम्। तथा च शब्दाश्रयत्वस्य आकाशपदवाच्यत्वाभावान्न तदापत्तिः।

ननु "गोपदाद् गौर्बोद्धव्या" इत्याकारकभगवदिच्छीयगोपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यता आश्रयत्वसम्बन्धे न गवि एव वर्तते न तु गोत्वादौ भगवदिच्छाविषयतामात्रन्तु वस्तुमात्रे एव वर्तते इति गोपदनिरूपिता शक्तिः गोगोत्वसमवायेषु त्रिष्वेवेति नियमः कथमुपपद्येत ?

अत्र वदन्ति "गोपदाद् गौर्बोद्धव्या" इत्याकारकभगवदिच्छानिरूपिता या गोपदजन्यबोधीयतत्तन्निष्ठविषयता प्रयोजकतत्तद्विषयता, तदात्मकसम्बन्ध एव "तत्र तत्र गो—गोत्वादौ गवादिपदशक्तिरस्ति इतिव्यवहारस्य नियामको वर्तते। स च सम्बन्धो नैकविध एव येन गवादेरेव गोपदवाच्यत्वं स्यात् न गोत्वादेः किन्तु तस्य त्रिविधत्वाद् गो-गोत्वसमवायेषु त्रिष्वेव शक्तिरिति नियम उपपद्यते। एवं च गवि गोपदजन्यबोधविषयताया नियामिका आश्रयत्वसम्बन्धावच्छिन्नगोपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितभगवदिच्छीयविशेष्यता गवादौ

अस्तीति सैव गवादौ गवादिपदानां शक्तिः । एवमेव गोत्वेऽपि गोपदनिरूपिता शक्तिरस्ति, तथाहि गोत्वे गोपदजन्यबोधविषयताया नियामिका आश्रयत्वसम्बन्धावच्छिन्नागोपदजन्यबोधविषयतात्वावच्छिन्नप्रकारत्वावच्छिन्नावच्छेदकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितभगवदिच्छीयविशेष्यता गोत्वे वर्तते इति सैव गोत्वे गोपदस्य शक्तिः ।

एवम् आश्रयत्वसम्बन्धावच्छिन्न गोपदजन्यबोधविषयतात्वावच्छिन्नप्रकारत्वावच्छिन्नसम्बन्धावच्छिन्नावच्छेदकत्वसम्बन्धावच्छिन्नप्रकारताकर्मसंसर्गतावच्छेदकतावच्छेदकता समवाये वर्तते इति सैव समवाये गोपदनिरूपिता शक्तिः । इत्थं गोगोत्वसमवायेषु गोपदशक्तेः निर्वाहो भवतीति भावः ।

यथोक्तं गदाधरेण—

"एवञ्चाश्रयत्वसम्बन्धावच्छिन्नबोधविषयत्वप्रकारतानिरूपितविशेष्यत्वं घटस्य, अवच्छेदकत्वसम्बन्धावच्छिन्ना घटविशेषणतापन्नबोधविषयत्वस्य या प्रकारता तन्निरूपितविशेष्यत्वं घटत्वस्य, घटविशेषणतापन्नबोधविषयत्वांशावच्छेद्यतासम्बन्धेन प्रकारत्वं वा घटत्वस्य, घटत्वे बोधविषयतायाः संसर्गविषयाभासमानेऽवच्छेदकत्वेऽवच्छेदकतया भासमानत्वं समवायस्य इति त्रितयमेव घटपदजन्यबोधविषयतायामुपयुज्यते इति त्रयाणां वाच्यतोपपत्तिः" ।

## त्रिषु अर्थेषु वर्तमाना शक्तिरेकैव

इदानीमाशङ्क्यते पदार्थे—पदार्थावच्छेदके—तयोः समवायात्मके सम्बन्धे च एतेषु त्रिषु पदार्थेषु वर्तमाना निरुक्ता शक्तिः

सम्बन्धभेदेन भिन्नैवेति गो-गोत्व-समवायेषु, त्रिषु च कथमेका शक्तिरित्युपपद्येत। अत्र गदाधरस्य समाधानमित्थम्—"घट-घटत्व-संसर्गेषु संकेतविषयतानां मिथोवैलक्षण्येऽपि तन्निरूपकबोध-विषयताया ऐक्याच्छक्त्यैक्यप्रवादो न तु संकेतैक्यात्" ॥

अयमाशयः—घट-घटत्वसमवायेषु उक्तरीत्या संकेतविषय-तानां परस्परं भेदेऽपि भगवत्संकेतीयबोधनिष्ठविषयताया ऐक्यादेव शक्त्यैक्यप्रवादो न तु संकेतैक्यादित्यर्थः। यदि च संकेतभेदेनैव शक्तिभेदः स्यात्, संकेतैक्येन च शक्त्यैक्यं स्यात् तदा भगवदि-च्छारूपस्य संकेतस्य नित्यत्वादैक्येन शक्तताशक्यतयोरवच्छेदक-भेदेनापि शक्तिभेदो न स्यात् इष्टश्च शक्तशक्यतावच्छेदकभेदेन शक्तिभेद इति भगवत् संकेतीयबोधनिष्ठविषयताया भेदाभेदौ एव शक्तिभेदाभेदनियामकावित्यभ्युपगन्तव्यम्।

नन्वेवं सति घटत्वादीनामपि वाच्यत्वेन पदार्थत्वात् "नित्यो घटः" इत्यादौ घटपदवाच्यघटत्वे नित्यत्वस्य पदार्थान्त-रस्यान्वयः स्यात् न चैतदिष्यते। अथवा घटत्वे नित्यत्वान्वय-तात्पर्येण "नित्यो घटः" अयं प्रयोगः स्यात्। यतो हि प्रागुक्त-रीत्या घटत्वस्यापि घटपदवाच्यत्वेन पदार्थत्वात्, "पदार्थः पदार्थेनान्वेति" इत्यस्य नियमस्य सहकारित्वाच्च। परन्तु ताव-तापि "नित्यो घटः" अस्य प्रयोगस्य बाधितत्वात् नेष्यते एव कुत्रापि अयं प्रयोगः।

अत्रोच्यते—

पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्द-बुद्धित्वावच्छिन्नं प्रति आश्रयत्वसम्बन्धावच्छिन्नबोधविषयतात्वा-

वच्छिन्नप्रकारतानिरूपित भगवदिच्छीयविशेष्यतात्मकशक्ति ज्ञानस्य कारणत्वं वाच्यम्। "नीलो घटः" इत्यत्र नीलात्मक-पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिः घटे जायते तत्र आश्रयतासम्बन्धावच्छिन्नबोधविषयतात्वा-वच्छिन्नप्रकारतानिरूपितभगवदिच्छीय-विशेष्यतात्मकशक्तेः सत्त्वेन तत्र तादृशशक्तिज्ञानस्य निर्बाधत्वात्। "आश्रयत्वसम्बन्धा-वच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारताकभगवदिच्छीयविशेष्य-तात्मकशक्तिः घट एव वर्तते न तु घटत्वे अतो न "नित्यो घटः" इत्यत्र घटत्वे नित्यत्वान्वयः। यस्मिंश्च घटपटादिरूपे पदार्थे तादृशबोधविषयतात्वनिष्ठप्रकारतानिरूपित - भगवदिच्छीयविशेषता वर्तते तत्रैव पदार्थान्तरस्यान्वयो जायते नत्वतिरिक्ते पदार्थे इति तु परमार्थः विभावनीयम्। यदा तु आश्रयतासम्बन्धा-वच्छिन्नघटपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपित - भगवदिच्छीयविशेष्यताया घटत्वे भ्रमो जायते तदा तु घटत्वादौ पदार्थतावच्छेदकेऽपि पदार्थान्तरस्यान्वये भवत्येव।

ननु पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्द-बुद्धित्वावच्छिन्नं प्रति आश्रयत्वसम्बन्धावच्छिन्नबोधविषयतात्वा-वच्छिन्नप्रकारतानिरूपितभगवदिच्छीय - विशेष्यतात्मकशक्तिज्ञानं कारणमित्येवं रूपात्मकस्य कार्यकारणभावस्य स्वीकारो नोचितः प्रयोजनाभावात् प्रकारतायाम् आश्रयतासम्बन्धावच्छिन्नत्वनिवेशो गौरवञ्च। किन्तु पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति संकेतीयमुख्यविशेष्यताज्ञानं कारणम्, अयमेव शक्तिज्ञानशाब्दबोधयोः कार्यकारणभाव आद-रणीयः। तथा च पूर्वोक्तस्थले "नीलो घटः" इत्यत्र संकेतीयमुख्य-

विशेष्यताज्ञानं घटविशेष्यकं वर्तते इत्यतो घटे एव नीलपदार्थस्यान्वयो जायते नान्यत्र। एवमेव "नित्यो घटः" इत्यत्रापि संकेतीयमुख्यविशेष्यताज्ञानम् घटे एवास्ति न तु घटत्वे। घटत्वे तु तादृशप्रकारत्वावच्छेदकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितभगवदिच्छीयविशेष्यता यद्यपिवर्तते तथापि तस्या घटनिष्ठविशेष्यतानिरूपितप्रकारत्वावच्छिन्नतया तस्यां प्रकारत्वानवच्छिन्नत्वरूपं मुख्यत्वं नास्ति। प्रकारत्वानवच्छिन्नाया एव विशेष्यताया मुख्यत्वस्वीकारात्। अतः कारणबोधेन "नित्यो घटः" इत्यत्रघटे नित्यत्वान्वयस्य प्रसङ्गः। यदा च घटत्वे तादृशमुख्यविशेष्यताया भ्रमस्तदा भवत्येवोक्तवाक्यतो घटत्वे नित्यत्वान्वयबोधः, तादृशवाक्याप्रामाण्यत्वं तु तादृशभ्रमशून्यान् पुरुषान् प्रत्येवोपगम्यते।

एवं "लोमादिमान् पशुपदाद् बोद्धव्यः" इत्याकारकभगवत्संकेते लोमत्वेन रूपेण यद्यपि लोम्नामुपस्थितिरवश्यमस्ति,बोधविषयतानिष्ठप्रकारता निरूपितभगवदिच्छीयविशेष्यताऽपि तत्र वर्तते एव तथापि लोमसु न संकेतमुख्यविशेष्यता अस्ति यतस्तत्र लाङ्गूलनिष्ठविशेष्यतानिरूपितप्रकारतया अपि वर्तमानत्वात् तन्निष्ठविशेतायां तादृशप्रकारत्वाच्छिन्नत्वस्यावश्यकत्वात्। अतो न दीर्घः पशुः" इति वाक्यतो लोमादौ दीर्घत्वान्वयबोधो न वा लोम्नि विद्यमानस्य पशुभेदस्य बोधतामादाय "पशुरपशुः" इति वाक्यस्य प्रामाण्यम्।

अयमाशयः—लोमांशे बोधविषयतात्वच्छिन्नप्रकारतानिरूपितविशेष्यतायाः सत्त्वेऽपि लोमादेर्लोमवद्धर्मिभूतव्यक्तौ विशेषणतया भासमानत्वेन प्रकारत्वात् प्रकारत्वावच्छिन्नमेव बोधविषयतानिष्ठ-

प्रकारतानिरूपितविशेषत्वम् अस्ति न तु मुख्यविशेष्यत्वम् अर्थात् प्रकारत्वावच्छिन्नविशेष्यत्वम् अथवा प्रकारतासमानाधिकरण-विशेष्यत्वम् न तत्रास्तीति न लोमादौ दीर्घत्वादिपदार्थान्तरान्वया-पत्तिः। संकेतमुख्यविशेषष्यतावत्येव पदार्थान्तरान्वयोपगमात्। इति चेन्न, वक्ष्यमाणदोषस्य दुरुद्धरत्वात्। तथाहि यदि संकेतीय-मुख्यविशेष्यताज्ञानं मुख्यविशेष्यतासम्बन्धेन पदार्थान्तरान्वयबोधं प्रति कारणं स्यात्तदा "लोम पशुपदजन्यबोधविषयतावच्छेकं भवतु" इत्याकारकाधुनिकसंकेतीयावच्छेदकत्वसम्बन्धावच्छिन्नबोधविषय-तात्वावच्छिन्नप्रकारतानिरूपितमुख्यविशेष्यताया लोम्नि सत्त्वेन लोमधर्मिकतादृशमुख्यविशेष्यतागोचरज्ञानात् लोमनिष्ठमुख्यविशेष्य-ताकः पदार्थान्तरान्वयशाब्दबोधः स्यादेव, अस्मिन् संकेतेलोम्न एव मुख्यविशेष्यत्वात्। परन्तु अस्मात् संकेतज्ञानात् लोमनिष्ठमुख्य-विशेष्यताकः पदार्थान्तरान्वयशाब्दबोधो न जायते इति तादृशान्व-यबोधापत्तिपरिहाराय तादृशबोधविषयत्वप्रकारतायाम् आश्रयत्व-सम्बन्धावच्छिन्नत्वं निवेश्य पदार्थान्तरान्वयबोधम् प्रति आश्रय-त्वसम्बन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितभगव-दिच्छीयविशेष्यताज्ञानस्य कारणत्वमवश्यं वाच्यम्। एवञ्चाश्रय-त्वसम्बन्धावच्छिन्नबोधविषयत्वनिष्ठप्रकारतातिरूपितविशेष्यता—ज्ञानस्य तादृशसङ्केतद्वारा दुर्घटत्वेन लोम्नि पदार्थान्तरान्वयबोधा-पत्तिरसम्भवा।

ननु "लोमपशुपदजन्यबोधविषयतावच्छेदकं भवतु" इत्याका-रकसंकेतविषयकादुक्तज्ञानादपि लोमादिविषयको मुख्यविशेष्यताकः शब्दबोधो जायतां का नो हानिः, को वा दोषः इति चेदत्र गदाधर एवं जगाद—

"तत्र च लोमावच्छिन्नविशेष्यकबोधस्यैव संकेतविषयतया ग्रहेणान्यादृशबोधोत्पत्तेरनुभवविरुद्धतयेष्टापत्तेरयोगाद्" इति। (शक्तिवादः)

अयमाशयः—"लोमादिमान् पशुपदात् बोद्धव्यः," इत्याकारे संकेते लोमवल्लांगूलवद्विशेष्यकबोधस्यैव विषयतया, तादृशसंकेतज्ञानेन पशुविशेष्यक एव शाब्दबोधो भवति। लोमादिविशेष्यकबोधस्य च तादृशसंकेताविषयतया तादृशसंकेतज्ञानान्न लोमादिविशेष्यकबोधोत्पत्तिः येन संकेतेन यादृशो बोधो विषयीक्रियते तादृशसंकेतज्ञानात्तादृशबोधस्यैवानुभविकत्वात्। "लोम पशुपदजन्यबोधविषयतावच्छेदकं भवतु" इत्येतादृशसंकेते लोम्नः बोधविषयतावच्छेदकत्वेनभासमानतया तादृशसंकेतज्ञानेन पशुविशेष्यकबोधोत्पादनस्यैवोचितत्वादिति भावः।

आश्रयत्वसम्बन्धावच्छिन्नबोधविषयतानिष्ठप्रकारतानिरूपितभगवदिच्छीयविशेष्यतायाः पदार्थान्तरान्वयबोधीयविशेष्यताप्रयोजकत्वाङ्गीकारे च नीलादिपदार्थः घटादिपदार्थनैवान्वेति न तु घटत्वादिरूपपदार्थैकदेशेन। "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इत्यत्र बोधविषयताश्रयत्वेनेश्वरसंकेतविषयत्वरूपस्य पदार्थत्वस्य तादृशबोधविषयतावच्छेदकत्वेनेश्वरसंकेतविषयत्वरूपार्थैकदेशत्वस्य च विवक्षितत्वात्। आश्रयत्वसम्बन्धावच्छिन्नबोधविषयत्वनिष्ठप्रकारत्वावच्छिन्नावच्छेदकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकत्वमेव शक्यतावच्छेदकत्वमिति गीयते। घटत्व-पटत्वादौ तादृशविशेष्यतात्मिका शक्यतावच्छेदकता वर्तते।

"जात्याकृतिव्यक्तयस्तु पदार्थः" इति सूत्रे पदार्थत्वं तु पदविशिष्टत्वपरमेव विवक्षितम्, वैशिष्ट्य स्वजन्यबोधविषयत्वनिष्ठाश्रयत्वसम्बन्धावच्छिन्नप्रकारतावत्त्वसम्बन्धेन, तादृशप्रकारतावत्त्वं च स्वनिरूपिता विशेष्यत्व, स्वावच्छिन्नावच्छेदकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्ववत्त्वं, स्वावच्छिन्नतादृशप्रकारताकुसंसर्गतावच्छेदकतावच्छेदकत्वैतदन्यतमसम्बन्धेन । अतोघटघटत्वसमवायेषु सूत्रोक्तस्यपदार्थत्वस्य नानुपपत्तिः ।

एवाञ्चाश्रयत्वसम्बन्धावच्छिन्नबोधविषतात्वावच्छिन्नप्रकारतानिरूपितभगवदिच्छीयविशेष्ताश्रयत्वं पदार्थत्वम् । तादृशप्रकारत्वावच्छिन्नावच्छेदकत्वसम्बन्धावच्छिन्नबोधविषयतानिष्ठप्रकार-तानिरूपितभगवदिच्छीय-विशेष्यताश्रयत्वम् पदार्थैकदेशत्वमिति भावः ।

# पदपदार्थयोः सम्बन्धविचारः

शब्दबोधकारिणी भूता या पदार्थोपस्थितिस्तादृशपदार्थोपस्थित्यनुकूलो यः पदपदार्थयोः सम्बन्धः सा वृत्तिः। यथा—घटादिपदज्ञानजन्या या घटादिपदार्थोपस्थितिः सा घटादिपदार्थविषयकशाब्दबोधे कारणं भवति। तादृशोपस्थितेः अनुकूलो यो घटादि पदानां घटादिरूपैः अर्थैः सह समन्वयः स एव सम्बन्धो वृत्तिः सा च वृत्तिः शक्तिपदेन, क्वचिल्लक्षणापदेन क्वचिच्च व्यञ्जनापदेनाप्यभिधीयते। तात्पर्यरूपा वृत्तिरपि क्वचित् स्वीक्रियते।

अत्रेदं पृच्छ्यते यत् पद पदार्थयोः, अथवा शब्द-शब्दार्थयोः सम्बन्धो नैयायिक-वैशेषिकप्रभृतिदार्शनिकानां नये वृत्तिरूपः स्वीकृतो वर्तते। परन्तु "घटवद्-भूतलम्" इत्यत्र घटभूतलयोः प्राप्तिरूपः संयोगसम्बन्ध इव स संयोगरूप एव कथं न स्वीक्रियते। अथवा "घटवत्कपालम्" इत्यत्र घटकपालयः समवाय इव स समवायरूप एव कथनं स्वीक्रियते। अथवा "वह्निमान् धूमात्"

इत्यादिस्थले वह्नि-धूमयोः व्याप्तिलक्षणः सम्बन्ध इव स व्याप्तिरूप एव कथं न स्वीक्रियते ? कुतः स वाच्यवाचकभावात्मकशक्तिरूपः कथं वा शक्यसम्बन्धात्मकलक्षणारूपः कथं वा अयं शब्दोऽस्यार्थस्य व्यञ्जक इति प्रतीतिसाक्षिकस्वरूपविशेषात्मकव्यञ्जनारूपः स्वीक्रियते ?

अयमत्र आवान्तरप्रश्नोऽपि समुदेति यत् पद-पदार्थयोः, शब्दशब्दार्थयोर्वा कश्चन सम्बन्ध एव न स्वीक्रियताम्, काऽवश्यकता तयोः मध्ये सम्बन्धस्वीकारस्य ? असम्बन्धौ एव तौ आस्ताम् ।

असम्बद्धावेव नौ शब्दबोधात्मकं कार्यं स्वीयसर्वविधिव्यवस्था-संचालनञ्च कुरुताम् मास्त्वपेक्षा तयोः सम्बन्धस्य ?

प्रश्नमिमं समादधानेन महर्षिणा गौतमेन इत्थं सूक्तितम् ।

"शब्दार्थव्यवस्थानादप्रतिषेधः"

न्या० भाष्य सूत्र २ अ० १ आ० ५४ सूत्र ।

वात्स्यायनेनास्य भाष्यं कुर्वता इत्थमुक्तम्—

"शब्दार्थप्रत्ययस्य व्यवस्थादर्शनाद् अनुमीयते अस्ति शब्दार्थसम्बन्धो व्यवस्थाकारणम्, असम्बन्धे हि शब्दमात्रादर्थमात्रे प्रत्ययप्रसङ्गस्तस्मादप्रतिषेधः सम्बन्धस्येति"—न्या० भा० २ अ० १ आ० सूत्र—५४ ॥

अयम्भावः—

जगति ये केचन पदार्थाः सन्ति ते सर्वेऽपि व्यवस्थिताः एव दृश्यते । अर्थात् केभ्यश्चित्पदविशेषेभ्यः केषांचित्पदार्थविशेषाणामेव प्रत्ययः प्रादुर्भवति न तु सर्वपदेभ्यः सर्वेषांपर्थानां प्रत्ययो जातु जायते । अस्या व्यवस्थायाः कारणम् एकमात्र शब्दार्थ-

सम्बन्ध एव भवितुमर्हति। यदि तत्तदसम्बद्ध एव शब्दस्तत्तदर्थं बोधयेत्तदाऽसम्बद्धत्वाविशेषात्सर्वः शब्दः सर्वानर्थान् प्रसभमावेदयेन्नतु घटशब्देन कम्बुग्रीवादिमतो घटव्यक्तिरूपस्यैवार्थस्य बोधो जायेत न तु पटादिव्यक्तिरिति व्यवस्थाऽवतिष्ठेचेयं व्यवस्था तस्मात् शब्दार्थयोः अस्या व्यवस्थाया उपपादकतया नूनं शब्दार्थयोर्मिथः कश्चन सम्बन्धो वाच्यः। तस्य निषेधोऽपलापो वा नैव कर्तुं शक्यः। यतो यदि शब्दार्थयोः कश्चन सम्बन्धो न स्यात् तदा उक्ता व्यवस्था नैव सम्पादयितुं शक्यते। अतोऽवश्यं सर्वैः शब्दैः सर्वेषां पदार्थानां बोधापत्तेः गले पतितायाः परिहाराय शब्दार्थयोः मिथः कश्चन सम्बन्धः स्वीकार्यं एव। सांख्यवृद्धैरप्ययमर्थो प्रण्यगादि—

असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः।

"असम्बद्धस्य जन्यत्वे असम्बद्धत्वाविशेषेणां सर्वं कार्यंजातं सर्वस्मात् भवेत्। न चेतदस्ति। तस्मान्नासम्बद्धमसम्बद्धेन जन्यते, अपि तु सम्बद्धं सम्बन्द्धेन जन्यते"।

—सांख्यतत्त्वकौमदीकारिका ।।

अस्य वाक्यकदम्बस्यायमाशयः—

असम्बद्धस्य जन्यत्वे असम्बद्धत्वाविशेषेणां सर्वमपि कार्यंजातं सर्वस्मात् कारणाद् भवेत्। यस्य कारणस्य यत् कार्यं न विद्यते तस्मादपि कारणात् तत् कार्यं भवेत्। एतादृशं च न दृश्यते तस्मान्नासम्बद्धमसम्बद्धेन जन्यते, अपि तु सम्बद्धमेव सम्बद्धेन जन्यत इत्यवश्यं मन्तव्यं भवति। शब्दः—शब्दज्ञानं वा अर्थोपस्थितिं जनयति, अथवा पदंपदज्ञानं वा अर्थोपस्थितिं जनयति,

सम्बन्धमन्तरा पदविशेषादर्थविशेषोपस्थितः जननंच सर्वथा संभवदुक्तिकम्। अतः शब्दार्थयोः कश्चन सम्बन्धोऽवश्यमपेक्षणीयः, येन सम्बन्धेनार्थविशेषेणसम्बद्धम् पदं अर्थविशेषसम्बन्धवत्तया पदज्ञानं वा पदार्थोपस्थितिं जनयेत्। अत एव पदजन्यपदार्थोऽपस्थितेर्व्यापारत्वं ब्रुवता विश्वनाथपञ्चाननेन।

"तत्रापि वृत्त्या पदजन्यत्वं बोध्यम्" इत्युक्तम्।

( न्या० सि० मु० शब्दखण्डः )

अत्र "वृत्त्या" इत्यस्य "वृत्तिज्ञानेन" इत्यर्थः। वृत्तिज्ञानस्य च सहकारिकारणत्वं स्वीकृतं न्यायवैशेषिकैः। यथोक्तं तत्रैव पञ्चाननेन "शक्तिधीः सहकारिणी"। "पदजन्यपदार्थोपस्थिति-घटकं पदजन्यत्वं वृत्तिज्ञानसहकारेण बोध्यम् इति प्रघट्टकाशयः।

—( न्या० सि० मु० विलासिनी टीका )

## पद-पदार्थयोः संयोगादिरूपसम्बन्धखण्डनम्

यदिदं पूर्वमाशङ्कितं यत् पद-पदार्थयोः सम्बन्धः प्राप्तिलक्षण-संयोगात्मक एवास्तु घट-कपालयोरिव समवाय एव वाऽस्तु, वह्नि-धूमयोरिव व्याप्तिलक्षण एव सम्बन्धोऽस्तु। किं वाच्य-वाचक-भावरूपताऽपन्नवृत्त्यात्मकशक्तिरूपः लक्षणारूपः व्यञ्जनारूपो वा तयोः सम्बन्धः कल्प्यते ?

तस्योत्तरं ब्रुवता वात्स्यायनेनेत्थमभ्यधायितम् यत् प्राप्तिलक्षण-स्तुशब्दार्थयोः सम्बन्धः प्रतिषिद्धः। कस्मात् ? प्रमाणतोऽनुपलब्धेः प्रत्यक्षतस्तावत्, शब्दार्थप्राप्तेर्नोपलब्धिः,—अतीन्द्रियत्वात्" वात्स्यायन भाष्यम्—अ० २ आ० १, सूत्र ५२।

अस्यायमर्थः शब्दार्थयोः—पदार्थयोर्वा सम्बन्धः संयोगः समवायादिव न भवितुमर्हति, कुतः प्रत्यक्षप्रमाणतः शब्दार्थयोस्तादृशसम्बन्धानुपलभ्यते। अयमस्ति तावन्नियमो यद् यौ द्वौ पदार्थं येनेन्द्रियेण ग्राह्यौ भवतः, तयोः पदार्थयोः सम्बन्धोऽपि तेनेन्द्रियेण गृह्यते। यथा घट-भूतलयोः वह्निपर्वतयोः, धूमपर्वतयोः संयोगसम्बन्धः। घटभूतलयोर्ग्रहणं—चक्षुरिन्द्रियेण जायतेऽतः तयोः संयोगसम्बन्धोऽपि चक्षुरिन्द्रियेणैव ग्राह्यो भवति। परन्तु प्रकृते शब्दतदर्थौ पदतदर्थौ वा नैकेन्द्रियेण ग्राह्यौ वर्तते, येन अनयोः संयोगसम्बन्धं वयं ग्राह्यं मन्येमहि। शब्दं पदं वा श्रोत्रेन्द्रियग्राह्यं सदपि अर्थस्य श्रवणेन्द्रियाग्राह्यत्वान्न शब्दार्थयोः संयोगसम्बन्ध इन्द्रियग्राह्य उपपद्यते।

अपि चात्रेदमपि प्रष्टव्यमापद्यते यत् पदयदर्थयोः प्राप्तिलक्षणसंयोगात्मकसम्बन्धे गृह्यमाणे किम् अर्थो घटपटादिः शब्दान्तिके भवति, किं वा शब्दः अर्थान्तिके भवति, किं वा उभयमुभयोरन्तिके भवति? एषु विकल्पेषु कतमश्चिन्नूनमभ्युपेयः, अन्यथा संयोगो दुर्घटः स्याद् दूरस्थयोः क्वापि तस्यादर्शनात्।

परं नैकोऽपि विकल्प एतेषु शक्य उपगन्तुम्। अतः शब्दार्थयोः संयोगसम्बन्धः सर्वथाऽनुपपन्न एव। तथा हि यदि पदार्थो घटपटादिः शब्दसमीपे स्यात्तदा शब्दस्य मुखे जायमानत्वात्, अन्नादिशब्दानामुच्चारणे मुखमन्नादिनां पूरितं स्यात्। एवम् अग्निप्रभृति शब्दानामुच्चारणे तज्ञाग्न्याद्यर्थस्यापि सत्तया मुखस्य दाहः स्यात्। खड्गादिशब्दोच्चारणे च मुखस्य छेदनं भेदनं च स्यादिति। न चेतत्सर्वं भवति, तस्मान्नैव शब्दार्थयोः संयोग-

सम्बन्धोऽभ्युपगन्तुं शक्यः। एवम् अर्थान्तिके शब्द इति द्वितीयपक्षोऽपि न युज्यते स्वीकर्तुं यतो हि यत्र भूतलादौ घटादिपदार्थो भवति तत्र शब्दोच्चारणसाधनस्य मुखस्यासत्त्वेन शब्दस्य दुर्निवारमनुच्चारणमापद्यते। अतः पदार्थदेशे शब्दस्य सत्ता नोपपद्यते। सर्वथा सुस्पष्टमेतद् यत् शब्दस्य स्थानं कण्ठादयः, करणञ्च प्रयत्नविशेषः। पदार्थदेशे च तौ न भवतात् इति पदार्थदेशे शब्दशक्त्या असम्भवादसन्निहितयोः शब्दार्थयोः संयोगो नैव संगच्छत इति द्वितीयपक्षोऽपि नोपपद्यते।

तृतीयकल्पस्तु प्रागुक्तोभयकल्पयोः समुच्चयरूपत्येव तदुभयकल्पयोरसम्भवादेव न सम्भवतीति विस्पष्टम्। तदेवं शब्दार्थयोः असन्निहिततया तयोः परस्परं संयोगसम्बन्धो नोपपद्यते। एतेनैव न्यायेन समवायादिरूपाणामप्यतिरिक्तसम्बन्धानां निराकरणं बोध्यम्।

## शब्दार्थयोर्वृत्तिरूप एव सम्बन्धः

शब्दादर्थसंप्रत्ययव्यवस्था न सामान्यः सम्बन्धकृता वर्ततेऽपि तु समयात्मकवृत्तिरूपसम्बन्धकृतैवाऽस्तीति निर्विचिकित्समभ्युपेयम्।

अस्य शब्दस्याऽयमर्थो वाच्य इति षष्ठीविभक्तिघटितस्य वाक्यस्य योऽर्थविशेषः प्रतिपाद्य स एव शब्दार्थयोः सम्बन्धः तत्कृतैव च शब्दार्थसंप्रत्ययव्यवस्थेत्यर्थः। "घटशब्दस्य घटत्वावच्छिन्नं वाच्यम्" इति अभिधानाभिधेयनियमस्य वाच्यवाचकभावनियमस्य उपदेश एव समयः। यथा घटशब्दस्य कम्बुग्रीवादिमानेव अर्थः, एवं पटशब्दस्य आतान-वितानभावापन्नपटव्यक्तिरेवाऽर्थः। गोशब्दस्य सास्नादिमानेवाऽर्थः। एवमश्वशब्दस्ये-

कारादिमानेवाऽर्थ इति नियोग उपदेशो बोद्धव्यः। योऽयमीदृशो भगवतः परमेश्वरस्य सर्गादौ नियोगः सोऽयं समयः। एतस्मिन् समये ज्ञाते सत्येव शब्दार्थव्यवस्था भवति, शब्दविशेषादर्थविशेष विषयकबोधोदयनियमः कल्पते। उक्तसमयात्मकसंकेतज्ञानाभावे शब्दश्रवणे जातेऽपि पदार्थज्ञानं न जायते, इत्यन्वयव्यतिरेकाभ्यां शब्दादर्थव्यवस्थां प्रति तत् संकेतज्ञानस्य कारणत्वं सिध्यतीति न शब्दार्थव्यवस्था संयोग-समवायादिरूपसम्बन्धान्तरकृता भवितुमर्हति। शब्दार्थयोः व्यधिकरणतया विभिन्नकालिकातया च तयोर्मिथो व्याप्यव्यापकभावलक्षणसम्बन्धानुपपत्त्याद-यितुं शक्यम्। शब्दस्य लिङ्गविधयाऽपि बोधकत्वं नैवोपपादयितुं शक्यम्।

इदमत्र विशेषेणावधेयं यत् शब्दात् तदर्थप्रतीत्युपपत्त्यर्थमेव शब्दार्थयोः सम्बन्धोऽपेक्ष्यते अर्थविषयकप्रतीत्युपपत्तिश्च वाच्य-वाचकभावसंबन्धादेवोपपद्यते, नान्यसम्बन्धाद्। इत्यतो वाच्य-वाचकभावात्मवृत्ति रूप एव सम्बन्धः शब्दार्थयोरस्तीति निर्विवाद वेदितव्यम्।

शब्दार्थप्रत्ययस्य संकेतावपेक्षत्वेऽयमपरिहार्यो दोषः। तथाहि यदि शब्दादर्थविषयिणी प्रतीतिः सम्बन्धान्तरकृता स्यात्तदा यथेच्छं शब्दप्रयोगो न स्यात् तथा च यवशब्दस्य स्वभावेन दीर्घ-शूकबोधकत्वे म्लेच्छेषु प्रियंगुबोधकत्वं न स्यात्, तेन च म्लेच्छानां यवशब्दस्य प्रियङ्गौ प्रयोगो न स्यात् एवं तस्य स्वभावतः प्रियंगुबोधकत्वे दीर्घशूकबोधकत्वं न स्यात् तेन चार्याणां दीर्घशूके यथाकामं प्रयोगो न स्यात् स्वाभाविकस्य व्यभिचारा-

सम्भवात्। स्वाभाविककार्येषु क्वचिदपि व्यभिचारो न दृश्यत इति तु दृष्टान्त-दृष्ट्या तथाहि तैजस्य प्रकाशस्य रूपप्रकाशत्वम्, रूपिद्रव्यघट-पटादीनां प्रकाशकत्वं क्वापि देशे काले वा न व्यभिचरति, किन्तु सर्वत्रैव सर्वदैव च तस्य च रूपादि प्रकाशकत्वं दृश्यते, कथमिदमितिचेत्। स्वाभाविकत्वादेवेति नूनं वक्तव्यम्। एवमेव यदि शब्दस्यापि अर्थप्रकाशकत्वं सम्बन्धान्तरकृतत्वात् स्वाभाविकं स्यात्तदा न क्वापि व्यभिचरेद् इति यवादि शब्दानां सर्वत्रैव समानरूपेण दीर्घशूकादि बोधकत्वं स्यात्, न चैवमस्तीति तत्तदर्थप्रत्यायकत्वस्य व्यभिचारात् शब्दस्यार्थविषयकबोधजनकत्वं, न सम्बन्धान्तरतमपि तु संकेतात्मकवृत्ति मूलकमेवेत्यवश्यं स्वीकार्यम्। तदुक्तं महर्षि गौतमेन—

"न, सामयिकत्वाच्छब्दार्थ संप्रत्ययस्य" न्या० द० २ अ० १ आ० ५५ सूत्रम्॥ शाब्दबोधस्थले शब्दार्थ व्यवस्था संयोग-समवायादि सम्बन्धान्तरकृता नास्ति अपि तु समयमूलिकैव अर्थात् संकेतकृतैव वर्तते इति भावः।

## शक्तिश्चेश्वरेच्छारूपा पदार्थान्तरं वा

शाब्दबुद्धित्वावच्छिन्नं प्रतिवृत्तिप्रयोज्यपदार्थोपस्थितिरेव आवापोद्वापाभ्यां कारणत्वं निश्चीयते, तत्र का नाम वृत्तिरिति जिज्ञासायां श्रीगदाधरभट्टाचार्यो वृत्तिपदार्थमित्थं निरूपयामास-यत् पदनिष्ठाया अर्थनिरूपिता वृत्तिः सा सङ्केतो लक्षणा चेति द्विधा। अर्थाद् घटादिनिरूपिता घटादिपदनिष्ठा वृत्तिः सङ्केतरूपा संकेत एव च शक्तिः एवं लक्ष्यार्थतीरादिनिरूपिता गङ्गादिपदनिष्ठा या वृत्तिः सा लक्षणा यथोक्तं श्रीगदाधरेण—

"संकेता लक्षणा चार्थे पदवृत्तिः" -शक्तिवादः-

वृत्तिप्रयोज्यपदजन्यप्रतीतिविषयोऽर्थः पदार्थं इत्यभिधीयते। प्रतीतिश्च शाब्दबोधात्मिका ग्राह्या। तथा च वृत्तिप्रयोज्या पदजन्या या शाब्दबोधात्मिका प्रतीतिः तादृशप्रतीतिविषयोऽर्थः पदार्थं इत्यर्थः।

"शक्तं" यद् भवति तत् पदमित्यभिधीयते, शक्तिनिरूपकं पदमित्यर्थः। पदनिरूपिता शक्तिरर्थे तिष्ठति, इति कृत्वा पदं शक्तेर्निरूपकं भवति, तथा—च निरूपकतासम्बन्धेन शक्ति-विशिष्टं पदं जायते।

श्री विश्वनाथपञ्चाननेनापि शब्दान्तरेण श्रीगदाधरेणोक्त-मेवायमर्थ एव समर्थितः—

"वृत्तिश्च शक्तिलक्षणान्तरः सम्बन्धः" इति ब्रुवता।

—न्या० सि० मु० शब्दखण्डः

अत्रेदं बोध्यम्—वृत्तिरूपः सम्बन्धो यदि केवलं शक्तिरूपस्तदा "गङ्गायां घोषः" इत्यत्र गङ्गापदस्य तीरे शक्त्यभावेन वृत्तिज्ञान-सहकृतगङ्गादिपदज्ञानजन्यतीरोपस्थितेरभावाद् गङ्गादिपदज्ञाना-त्तीरविषयकशाब्दबोधानुपपत्तिः स्यात् अतः शक्तिलक्षणाऽन्य-तरात्मक एव वृत्त्यात्मकः सम्बन्धो बोध्यः। एवञ्च वृत्तिशब्दस्य नानार्थकतया तीरोपस्थितेः शक्तिज्ञानसहकृतगङ्गापदज्ञान-जन्यत्वाभावेऽपि लक्षणाज्ञानसहकृतगंगापदे ज्ञानजन्यत्वान्न गङ्गापदात्तीरबोधानुपपत्तिरिति भावः। अत्रेदं तत्त्वम् वृत्तित्वं शाब्दबोधजनकोपस्थितिजनकज्ञानविषयत्वम्। अतएव" शाब्द-बोधोपयिकोपस्थितिजनकः पदपदार्थयोः सम्बन्धो वृत्तिः कल्प्यते इति शब्दमण्या लोके स्वयं मिश्रैरभिहितम्। न चोपस्थित्यात्मकाऽ

काङ्क्षाज्ञानजनकवाक्यविषयकानुभवविषये व्यवहितोत्तरत्वरूपे वृत्तित्वाऽपत्तिरिति वाच्यम्। शाब्दबोधनिरूपिता या स्मृतित्वावच्छिन्नजनकता तन्निरूपिता व्यहितोत्तरत्वसम्बन्धावच्छिन्नाऽवच्छेदकतानिरूपिताऽवच्छेदकतावत्सांसर्गिकविषयतावत्त्वस्य विवक्षितत्वात्। आकांक्षाज्ञानस्य च शाब्दबोधं प्रति निश्चयत्वेनैव कारणत्वं न तु उपस्थितित्वेन, नातः पूर्वोक्त दोषावकाशः।

अस्य च वृत्तिरूपशक्तिज्ञानस्य पदज्ञानजन्यपदार्थोपस्थितावेव उपयोगः न तु शाब्दबोधे। शाब्दबोधे वृत्तिज्ञानस्यान्यथासिद्धतया। पदजन्यपदार्थोपस्थितेरेव साक्षात् शाब्दबोधहेतुत्वात्।

प्रकारान्तरेण अस्या वृत्तेः स्वाभाविकी औपाधिकीति भेदद्वयं प्रतिपादितम्। लोकेऽपि राजादौ सामर्थ्यमुभयविधं प्रसिद्धमेव। स्वाभाविकी वृत्तिरेव शास्त्रे शक्तिरित्युच्यते, औपाधिकी च लक्षणा इति।

ननु घटोऽस्तीत्यत्र आकाशोऽपि समवायसम्बन्धेन घटपदादुपस्थिति तथा घटपदार्थः स्यात्तथा च "आकाशो घटपदार्थ" इति व्यवहारापत्तिः स्यात्। घटपदेन समवायसम्बन्धेन आकाशोपस्थितिबलाद् आकाशविषयक शाब्दबोधापत्तिश्च स्यात्। अत एनमापत्तिपरिहाराया गदाधरेण स्पष्टमुक्तम्—

वृत्त्या पदप्रतिपाद्य एवार्थः पदार्थ इत्यभिधीयते। शाब्दबोधानुकूलपदार्थोपस्थित्यनुकूलः पदपदार्थयोः सम्बन्धः शक्तिलक्षणान्यतररूपा वृत्तिः। तथा चेदानीं घटादिपदेन समवायादिनाऽऽकाशाद्युपस्थितिर्न शाब्दबोधकारणं भवितुमर्हति। एवञ्च वृत्तिप्रयोज्यपदजन्यप्रतीतिविषयत्वं पदार्थत्वम् इति फलितम्। इदमेव गदाधरेणोक्तं यद्—

"वृत्त्या पदप्रतिपाद्य एव पदार्थ इत्यभिधीयते"

( शक्तिवादः )

## वृत्तेर्भेदाः

अस्या वृत्तेर्द्वैविध्यं तु निर्विवादमेव, तत्र तु नास्ति कश्चन लेशतोऽपि संशयावसरः। केचन" संकेतो लक्षणा चार्थे पदवृत्ति-रिति वदन्ति। प्रतिपादयन्ति च अनेनैव शक्तेर्द्वैविध्यमिति। केचन स्वाभाविकी-औपाधिकीतिभेदेन वृत्तेर्द्वैविध्यं निरूपयन्ति। वैयाकरणास्तु लक्षणां नाङ्गीकुर्वते, तेषां नये शक्तिरेव द्विविधा वर्तते प्रसिद्धा अप्रसिद्धा च। प्रसिद्धां वृत्तिं ते "शक्ति" शब्देन कथयन्ति। अप्रसिद्धां वृत्तिं "लक्षणा" शब्देन। केवलं शब्दमात्र-स्यैव भेदः, नास्ति वास्तविको भेदः। केचन विद्वांसो व्यञ्जना-मादाय वृत्तेस्त्रैविध्यं वर्णयन्ति। ततोप्यधिकां तात्पर्यरूपां वृत्ति-मादायचातुर्विध्यमपि तस्या निरूपयन्ति केचन साहित्यकोविदाः। अपरे पुनर्विद्वांसोऽभिधामूलां, लक्षणामूलाञ्च वृत्तिं शास्त्रे प्रतिपादयन्ति। इत्थं चानेके सन्ति भेदाः वृत्तेः शास्त्रेषु वर्णितास्ते लेखविस्तरभयान्नात्र निरूपयितुं शक्यन्ते लघुकाये प्रबन्धे। केषांचिद् विदुषामयमपि आशयः यत्शक्ति लक्षणावद् आधुनिक-संकेतस्यापि वृत्तित्वमवश्यं स्वीकार्यम्। यतो हि आधुनिक-संकेतितनदीवृद्ध्यादि पदमपि अर्थं बोधयति। तन्न युक्तम्। आधुनिकसंकेतस्य तात्पर्यवद् व्यञ्जनावच्च स्वातन्त्र्येण वृत्तित्वमेव नास्ति। अपि तु आधुनिकसंकेतस्य परिभाषात्वं स्वीक्रियते, तथा चार्थबोधकं पदं पारिभाषिकमित्युच्यते। अर्थस्तु तत्र पारिभाषिकः पारिभाष्यो वेत्युच्यते।

## शक्तिश्चेश्वरेच्छा रूपा

द्विविधा हि शक्तिः वर्णिता न्यायशास्त्रकोविदैः। पदविशेष्यकसंकेतस्वरूपा शक्तिरेका, अर्थविशेष्यसंकेतरूपा शक्तिर्द्वितीया। तथा च "इदं पदममुमर्थं बोधयतु" इति पदविशेष्यकेश्वरेच्छारूपा शक्तिरेका, एतदर्थविषयकबोधजनकतावत्पदम्, भवत्विति च तदर्थः। एतदर्थविषयकबोधजनकतात्वावच्छिन्नप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतावत् पदमेतदर्थवाचकम् इति तु तत्त्वम्। "गोपदं गां वक्ति" "गोपदं गां ब्रूते" "गोपदं गोर्वाचकम्" इत्यादिस्थलेषु सर्वत्र गोरूपाऽर्थविषयकत्वरूपं ततः तत्कर्मत्वं गोपदोत्तर सुपाधास्वर्थैकदेशे बोधे बोध्यते। गोविषयकबोधविषयतानिरूपितजनकत्वप्रकारतानिरूपितेश्वरेच्छीयविषयताश्रयतावद् गोपदमित्याकारकः शब्दबोधः सम्पद्यते। न च गोपदात् गोविषयक-घटविषयकसमूहालम्बनबोधस्याऽपि कदाचिदुत्पत्त्या "गोपदं घटं वक्ति" इत्यादि व्यवहारापत्तिरिति वाच्यम्। "गोपदं गां वक्ति" इत्यादिनो जायमाने गोविषयकबोधविषयतानिरूपितजनकत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविषयताश्रयो गोपदमित्याकारके शाब्दबोधे गोविषयकत्वस्य बोधे भानेन बोधनिष्ठविषयतायां गोविषयकत्वस्य अवच्छिन्नत्वसम्बन्धेन भानं फलति। एवं च "गोपदं गोविषयकबोधजनकं भवतु" इत्याकारकभगवदिच्छीयविषयतान्तर्गतबोधविषयतायां गोविषयकत्वावच्छिन्नत्वस्यैवसत्त्वेन घटविषयकत्वावच्छिन्नत्वस्य च भावेन न गोपदं गां शक्ति "इतिवद् गोपद घट वक्ति" इत्यादिव्यवहारापत्तिरिति भावः।

केषांचिद् विपश्चितामिदमपि कथनं वर्तते यद् "गोपदं गां वक्ति" इत्यत्र गोविषयकत्वस्यैव अवच्छिन्नत्वसम्बन्धेन धात्वर्थैकदेशे बोधविषयत्वे भानं भवितुमर्हति न घटविषयकत्वस्य अतो न गोपदं घटं वक्ति इत्यादि वाग्व्यवहारापत्तिरिति ध्येयम्। "गोपदं गां वक्ति" इत्यादौ–"गोरूपार्थविषयकबोधजनकतावत् पदं भवतु" इत्याकारकभगवदिच्छीयविषयतारूपो य ईश्वरसंकेतस्तादृशसंकेतात्मिकया शक्त्या चार्थबोधकं पदं वाचकं भवति, अर्थस्तु वाच्यो भवति यथा-गोत्वादिविशिष्टबोधकं गवादिपदं गोरूपार्थवाचकं वर्तते, गोपदेन बोध्यश्च गवादिरूपोऽर्थो वाच्यो भवति, स एव शक्त्या बोध्यो गवादिरूपोऽर्थः मुख्यार्थं इत्युच्यते। मुखमिव प्रथमप्रतीति विषयत्वाच्छक्यस्य मुख्यार्थत्वमिति भावः।

"पदेन गोरुच्यते" इत्यत्र कर्मप्रत्ययान्तसाधुप्रयोगस्थले पदनिष्ठा या बोधजनकत्वनिष्ठप्रकारतानिरूपितभगवदिच्छीयविषयता, तादृशविषयतानिरूपिका या बोधकत्वनिष्ठाप्रकारता तादृशप्रकारत्वावच्छिन्ना या बोधजनकत्वनिष्ठा विशेष्यता तादृशविशेष्यतानिरूपिता या बोधत्वावच्छिन्ना बोधनिष्ठा प्रकारता तादृशप्रकारत्वावच्छिन्ना या बोधनिष्ठा विशेष्यता तादृशविशेष्यता निरूपिता या विषयित्वसम्बन्धावच्छिन्ना गोरूपार्थनिष्ठाप्रकारता तादृशप्रकारताश्रयो गौरिति शाब्दबोधो जायते।

अस्माच्छब्दादयमर्थो बोद्धव्यः" इत्याकारकार्थविशेष्यकेच्छायाः शक्तित्वपक्षे च "गोपदेन गोरुच्यते" इत्यत्र गोपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितेश्वरेच्छीयविशेष्यताश्रयो गौः

इत्यन्वयबोधो जायते। परन्तु अर्थविशेष्यकेच्छापक्षे—"गोपदं गां वक्ति" इत्यादितस्तु गोनिष्ठायाजन्यबोधविषयत्वनिष्ठप्रकारता-निरूपितभगवदिच्छीयविशेष्यता तादृशविशेष्यता निरूपक-विषयत्वप्रकारतानिरूपकबोधनिष्ठविषयतानिरूपक जन्यतानिष्ठ विषयतानिरूपकप्रकारताश्रयो गोपदमित्यन्वयबोधः।

नव्यास्तु ईश्वरेच्छा न शक्तिः किन्तु इच्छामात्रमेव शक्तिः।

अतः ईश्वरानङ्गीकर्त्तृमीमांसकमतेऽपि न किमप्यसामञ्ज-स्यमापद्यते। आधुनिके नाम्नि शक्तिस्वीकर्त्तृणां नयेऽपि सर्वमुपपद्यते न कोऽपि दोषः।

## अपभ्रंशशब्दानां वाचकत्वाऽवाचकत्वपरीक्षा

अत्र मीमांसाशास्त्रपर्य्यनुयानिनः—इत्थं संगिरन्ते यत् गाछ-माछ-घड़ा-कपड़ा आदि अपभ्रंशशब्देभ्योऽपि शक्ति-भ्रमेण अर्थप्रत्ययो जायते, बोध शक्तिभ्रमेण भवति भगवदिच्छा च सन्मात्रविषयिणी वर्तते, अपभ्रंशशब्दस्तन्निष्ठं बोधकत्वं तद्बोध्यो घटादिश्चेति सर्वमपि पदार्थजातं सदेवेति अपभ्रंशशब्दानामपि बोधकत्वेन रूपेण भगवत्संकेतविषयत्वमेव च न्यायमते वाचकत्वं साधुत्वं च। तथा च अपभ्रंशशब्दानामपि बोधकत्वेन भगव-त्संकेतविषयत्वाद् वाचकत्वं साधुत्वं च। तथा च अपभ्रंश-शब्दानामपि बोधकत्वेन भगवत्संकेतविषयत्वाद् वाचकत्वं साधुत्वं च सुतरामापद्यते इष्टापत्तिश्च न कर्तुं शक्यते नैयायि-कैरपभ्रंशशब्दानां वाचकत्वस्य साधुत्वस्य चाऽस्वीकारात्।

न च न बोधजनकत्वेन भगवत् संकेतविषयत्वमेव वाचकत्वं येन अपभ्रंशशब्दानामपि तदाऽपत्तिः प्रसज्येत। किन्तु "इदं

पदममुमर्थं बोधयतु" इतीच्छया भगवदुच्चरितत्वमेव वाचकत्वम्। अपभ्रंशशब्दाश्च नार्थप्रत्यायनेच्छया भगवदुच्चरिता इति न अपभ्रंशशब्दानां वाचकत्वापत्तिः। साधुत्वं च शक्तिभ्रमानधीन-शाब्दबोधजनकत्वम्, अतो न तदप्यापद्यते तेषामिति वाच्यं तथा सति नैयायिकप्रभृतिदार्शनिकानां नये पदानामनित्यत्वेन अस्मदाद्युच्चरितघटादि शब्दानां भगवदुच्चरितत्वाभावेन वाचकत्वानुपपत्तेः। यद्येवमुच्यते यद् "इदं पदममुमर्थं बोधयतु" इत्याकारेच्छया भगवदुच्चरितसजातीयत्वमेव वाचकत्वमित्युच्यते तदा न अस्मदाद्युच्चरितपदानामस्ति वाचकत्वानुपपत्तिः, अस्मदाद्युच्चरितपदानामपि भगवदुच्चरितपदसजातीयत्वात्। तदा सम्यग् भवेत्, तथा सति "आदित्यो वै यूपः" इत्यादिवेदवाक्य-घटकेषुलाक्षणिकादित्यादि शब्देषु अस्मदाद्युच्चारितेषु तादृशबोध-जनकेच्छया भगवदुच्चरितसजातीयत्वसत्त्वेन वाचकत्वापत्तिः। न च तादृशवाचकत्वाऽपत्तौ इष्टापत्तिः सम्भवति, यतस्तस्य लाक्षणिकत्वस्वीकारात्। एवम् "आयुर्वैघृत" मित्यादौ वेदवाक्य-घटकायुः पदस्य। युर्जनके लाक्षणिकतया पूर्ववदेव वाचकत्वापत्तिः स्यादिति भावः।

किञ्च सादिदेवदत्तादिपदेष्वव्याप्तिः। तथाहि—सादिदेवदत्ता-दिपदं भगवता परमेश्वरेण नहि देवदत्तादिव्यक्तिबोधनार्थं-मुक्तमिति तस्य वाचकत्वं स्वीकृतम्।

सादित्वं च देवदत्तादि शब्दानामिष्टमेव न घटादिशब्दानाम्। सादित्वञ्च तेषां स्वजन्यबोधविषयतावच्छेदकावच्छिन्नविषयक-बोधानुत्तरस्वरूपं तादृशबोधपूर्वमावित्वम्, यथा देवदत्तादिपद-

जन्यो यो देवदत्तादिविषयकोबोधस्तादृशबोधीयविषयतायां अवच्छेदकी भूतो यो देवदत्तत्वादिरूपो धर्मस्तदवच्छिन्न विषयता-शाली था देवदत्तपदजन्यशाब्द बोधात्मको बोधस्तदनुत्तरत्वरूपं तादृशभावित्वलक्षणं देवदत्तपदेऽस्तीति भवति। देवदत्तपदस्य सादित्वम्।

यद्यपि न्यायनयेघट-पटादिशब्दा अपि सादिभूता एव सन्ति। तथापि न तेषां घटत्वावच्छिन्नविषयताशालिबोधपूर्वकाल भावित्वं वर्तते, ईश्वरीयघटविषयकबोधोत्तरमेव तेषा जायमान-त्वात् इति भावः।

ननु "द्वादशेऽहनि पिता नाम कुर्यात्" इति श्रूयते, एवं च एतद् वेद वाक्यघटकं नामपदं देवदत्तादिशब्दानां साधारणतया भगवदुच्चरितत्वमेवास्ति इत्यतो न तेषां वाचकत्वानुपपत्तिरि त चेन्न। देवदत्तेत्यादिस्वरूपाणां भगवदनुच्चरितत्वाद् वाचक-त्वानुपपत्तिस्तदवस्थैवेति भावः।

न च कण्ठताल्वाद्यभिघातजन्यस्वरूपमुच्चारणं भगवता कथं कर्तुं शक्यते तस्य स्वयमशरीरित्वादिति वाच्यम्। "गृह्णाति हीश्वरोऽपि शरीरम् इतिवदद्भिरुदयनाचार्यैः न्यायकुसुमाञ्जलौ ईश्वरस्य स शरीरत्वणात्।

"पिताऽहमस्य जगतो माता धाता पितामहः" इत्यादिनाऽऽ-गमेनापि भगवच्छरीरस्य निरूप्यमाणत्वाच्च।

शाब्दबोधकारणतायामीश्वरो न निवेश्यः—

अथ विशिष्टबुद्धित्वावच्छिन्नं प्रति-विशेषणज्ञानस्य ईश्वर-संकेतस्य शक्तित्वे तादृशशक्तिज्ञानार्थंविशेषणगभंगतस्य ईश्वरस्य

ज्ञानमवश्यमपेक्षणीयम् ईश्वरसंकेतात्मकशक्तौ ईश्वरस्य विशेषण-विग्रहान्तर्गतत्वात्। तथा च—ईश्वराङ्गीकर्त्तृमीमांसकमते ईश्वर-ज्ञानस्यासम्भवेन ईश्वरसंकेतरूपशक्तेः ज्ञानं न संभवति, अतः शाब्दबोधानुपपत्तिः, शाब्दबोधं प्रति शक्तिज्ञानस्य कारणत्वात्। यथोक्तं गदाधरेण—

"एवमीश्वरसंकेतस्य शक्तित्वे ईश्वरानङ्गीकर्त्तृनये शाब्दबोधानुपपत्तिः"

—शक्तिवादः ॥

अथ शक्तिज्ञाननिष्ठशाब्दबोधकारणतावच्छेदककोटौ—ईश्वरीयत्वं न निवेशनीयम्। अथवा ईश्वरसंकेतो न शक्तिः, प्रत्युत संकेतमात्रं शक्तिः, संकेतश्चेच्छा, एवञ्च ईश्वरानङ्गीकर्त्तृमते शाब्दबोधानुपपत्तिर्नास्ति शक्तिस्वरूपे ईश्वरनिवेशाभावात्। एवं च शक्तिज्ञाननिष्ठशाब्दबोधकारणतावच्छेदकगर्भं इच्छांश ईश्वरीयत्वाप्रवेश पाणिनिप्रभृतिकृतनदीवृद्ध्यादिरूपाधुनिक-संकेतज्ञानादपि शाब्दबोधतादृशसंकेतस्य वृत्तित्वं निर्वहति। वृत्तित्वञ्च शाब्दबोधजनकपदार्थोपस्थितिरूपव्यापारवत् सम्बन्ध-त्वम् तस्य चाऽधुनिकसंकेतेऽपि अक्षुण्णत्वात्।

न चाऽधुनिकसंकेतस्य वृत्तित्वे तात्पर्यस्यापि वृत्तित्वं स्याद् "इदं पदमिममर्थं बोधयतु" इत्येवंविधस्य संकेतस्येव तथाविधऽ तात्पर्यस्यापि अर्थबोधजनकत्वेन पदविषयकतया संकेतरूपत्वात्। नचात्रेष्टापत्तिः संभवति। तथासति लक्षणास्थलेऽपि तात्पर्यस्यैव शाब्दबोधजनकपदार्थोपस्थितिरूपव्यापारवत् सम्बन्धं प्रकल्प्य तेनैव लक्षणास्थलीयशाब्दबोधनिर्वाहे लक्षणायाः वृत्तित्वोच्छेद-प्रसङ्गः स्यादिति वाच्यम् पदार्थोपस्थितिरूपव्यापारकस्य संकेतस्यैव वृत्तित्वाद्। तात्पर्यज्ञानस्य च साक्षादेव शाब्दबोधो-

पयोगितया पदार्थोपस्थितिव्यापारकत्वाभयात्। अयं भावः— वृत्त्या पदार्थोपस्थितौ जातायामेव तादृशवृत्त्युपस्थापितपदार्थे प्रकरणादिना वक्तृतात्पर्यावधारणं भवति, न तु पदार्थोपस्थितेः प्रागेव, एवं च तात्पर्यस्य ज्ञानोत्तरमुपस्थित्यन्तरं विनैव।

## लक्षणायाः वृत्तित्वोपपत्तिः

शाब्दबोधस्योत्पत्त्या न तस्य वृत्तित्वापत्तिः।

तात्यपर्यस्येव लक्षणाया वृत्तित्वानभ्युपगमो न शङ्कितुं शक्य-स्तथा सति गङ्गादिपदात् तीरादिपदार्थोपस्थित्यभावे तीरादिपदार्थ-गंगादिपदस्य तात्पर्यनिश्चयस्ततः शाब्दबोधश्च न स्यात्। न चैवमस्ति। गंगादिपदात् तीरादिविषयकशाब्दबोधस्य सर्वानु-भवसिद्धत्वात्। अतो लक्षणाया वृत्तित्वं सर्वथाऽवश्यकम् लक्षणाया वृत्तित्वे च नायं दोषो लक्षणया गंगादिपदात् तीरादि-पदार्थोपस्थितौ सत्यां तीरे गंगापदस्य वक्तृतात्पर्यं सम्भवेन ततस्तीरादिविषयकशाब्दबोधोत्पत्तौ बाधकाभावात्।

ननु यथा आधुनिकसंकेतस्थले तात्पर्याधीनोपस्थितेः कारणत्वमस्ति तथैव लक्षणास्थलेऽपि तात्पर्यात्मकसंकेतज्ञानाधीनो-पस्थितित एव शाब्दबोधनिर्वाहो भवितुमर्हति इति तात्पर्यनिश्चयार्थं लक्षणाधीनोपस्थितेरावश्यकत्वेऽपि लक्षणाधीनोपस्थितित्वेन रूपेण शाब्दबोधं प्रति कारणत्वे प्रमाणाभावात् लक्षणाया वृत्तित्वानुप-पत्तिस्तदवस्थैव। अयमाशयः— यज्ज्ञानाधीनोपस्थितेः शाब्दबोधं प्रति कारणत्वं निश्चीयते तस्यैव वृत्तित्वम् भवति, तथा च लक्षणास्थले लक्षणाज्ञानाधीनोपस्थितेस्तात्पर्यज्ञानं प्रत्येव कारणत्वं वर्तते न शाब्दबोधं प्रति तु तात्पर्यज्ञानाधीनोपस्थिते-रेव कारणत्वमित्यतस्तात्पर्यस्यैव वृत्तित्वं युक्तं न तु लक्षणायाः।

न च आधुनिकसंकेतस्थलेऽपि तात्पर्यज्ञानाधीनोपस्थितेः शाब्दबोधं प्रति कारणत्वमेव नास्ति यद् दृष्टान्तेन लक्षणास्थले तात्पर्यज्ञानाधीनोपस्थितेः शाब्दबोधं प्रति कारणत्वं मत्वा लक्षणाया वृत्तित्वाभाव उच्यतेति वाच्यम्। गंगादिपदात् मुख्यार्थबाधादिना लक्षणाधीनतीरादिपदार्थोपस्थिति सत्त्वे तीरादिपदार्थे गंगादिपदस्य तात्पर्यग्रहे जाते पुनस्तीरादिविषयकोपस्थितेरावश्यकतैव नास्ति, अत उपस्थित्यन्तरमन्तरेणैव तीरादिविषयकः शाब्दबोधः सर्वानुभवसिद्धः, लक्षणाज्ञानाधीन-पदार्थोपस्थितेः शाब्दबोधं प्रतिकारणत्वाच्च लक्षणाया वृत्तित्वं सिद्धम् तात्पर्यज्ञानाधीना तूपस्थितिरेव नास्ति तस्या शाब्दबोधं प्रति कारणत्वं स्यात् तेन च तात्पर्यस्य वृत्तित्वं स्यात् इत्यर्थः। आधुनिकसंकेतस्थलेऽपि पूर्वं संकेतकर्त्तृ पुरुषस्य "डित्थपदादर्थ-पिण्डो बोद्धव्यः इत्याकारकवाक्यतः डित्थादिरूपा अर्थविशेषे संकेतग्रहो जायते, तेन च संकेतज्ञानेन डित्थादिपदाद् डित्थादि-पदार्थस्योपस्थितिर्जायते। ततश्च तद्विषयकः शाब्दबोधः प्रादुर्भवति।

अथ शाब्दबोधोपयोगितायामीश्वरीमत्वानुपादानेनेश्वरानङ्गी-कर्तृमते शाब्दबोधसंभवेपि यदि संकेतस्य शब्दसम्बन्धत्वं स्यात् तदा संकेतस्य ज्ञायमानस्यैव पदार्थोपस्थापकत्वं स्यात् तदा च वृत्तित्वमपि स्यात्। न च संकेतस्य शब्दसम्बन्धत्वे किमपि प्रमाण-मस्ति—यतो हि "अयमस्य पिता अयमस्य पुत्रः" इत्येवं यत्र प्रतीतिर्जायते तत्रैव जन्यजनकभावादेः सम्बन्धत्वं स्वीक्रियते। अत्र तु "अर्थवत् पदमिति" प्रतीतिसत्त्वेऽपि "पदवानर्थः"

इति प्रतीत्यभावान्न संकेतस्य पदपदार्थसम्बन्धत्वं संभवति। सम्बन्धत्वाभावाच्च संकेतस्य पदार्थोपस्थापकत्वमेव नायाति, पदार्थानुपस्थापकस्य च वृत्तित्वं नेष्टमित्यर्थः। ननु यथा "पर्वतवान् वह्निः" "महानसवान् वह्निः" इत्यादि प्रतीत्यभावेऽपि "पर्वतो वह्निमान्" "महानसं वह्निमत्" इत्यादि प्रतीतिमात्रेणैव वह्निपर्वतयोः, वह्निमहानसयोर्वा संयोगस्य सम्बन्धत्वं स्वीक्रियते, तथैव "पदवानर्थः" इति प्रतीत्यभावेऽपि "अर्थवत् पदम्"इति प्रतीतिमात्रेणैव संकेतस्य पद-पदार्थसम्बन्धत्वं कथं न स्वीक्रियते, इत्येवं प्रश्ने समुपस्थिते जाते संयोगस्य सप्रतियोगिकत्वेन सम्बन्धत्वं समर्थयितुं शक्यते। संकेतस्य च निष्प्रतियोगिकतया सम्बन्धत्वं नाङ्गीक्रियते। अयमाशयः— संयोगस्तु प्रतियोग्यात्मकनिरूपकांशे नित्यसाकाङ्क्ष एव वर्तते। यतो हि संयोग इत्येवं झटिति इयं जिज्ञासा जायते यत् "कस्य" इति संकेतस्तु इच्छा इच्छीयविषयतारूपो वा, सा न प्रतियोग्यंशे नित्यसाकाङ्क्षा वर्तते। इच्छीयविषयता रूपश्चेत् संकेतस्तदा तु तत्र इयं जिज्ञासा एव नोदेति "कस्य" इति ? इच्छायास्तत्रैवोल्लिखितत्वात्। अर्थात् विषयता क्वचित् ज्ञानीया भवति। "इच्छीयविषयता" इत्युक्ते कस्येति जिज्ञासायाः अनुदीयमानत्वात्। इच्छारूपश्चेत् स्तदा इच्छा प्रतियोग्यशे नित्यसाकांक्षा न भवति इति नित्यप्रतियोगिक्तया संकेतस्य सम्बन्धत्वसंभावनापि नास्ति सम्बन्धत्वाभावे च पदार्थोपस्थापकत्वाभावस्तदवस्थ एवेति तेन वृत्तित्वाभावः सुतरांसिद्धः संकेतस्येति विभावनीयम्।

यद्यपि पदार्थोपस्थापकत्वं पदज्ञानस्यैव वर्तते, पदजन्यपदार्थोपस्थिते एव शाब्दबोधे हेतुत्वात्। तथापि "शक्तिधीः सहकारिणी"

एतादृशशास्त्रानुरोधतः संकेतज्ञानस्यापि सहकारिकारणत्वात् संकेतस्य पदार्थोपस्थापकत्वं निर्धारितमितिभावः। प्रत्युत पदमर्थवाचकमर्थश्च पदवाच्यः इत्येतादृशप्रतीतेः स्फुटं जायमानत्वाद् वाच्यवाचकभाव एव पदपदार्थयोः सम्बन्ध इति मीमांसकाभिमतम्।

अतएव संकेतस्य सम्बन्धत्वमेव नास्ति चेत् तदा शाब्दबोधोपयिक सम्बन्धत्वेन ईश्वरसंकेतज्ञानं हेतुस्तच्च मीमांसकानामपि संभवति, तादृशज्ञानविरोधिविपरीतज्ञानाभावादित्यापि सुतरां निरस्तम्। यद्यीश्वर संकेतस्य सम्बन्धत्वम् स्यात्तदा ईश्वरसंकेतस्य शाब्दबोधौपयिकसम्बन्धत्वेन ज्ञानं स्यादपि तेन च शाब्दबोधोऽपि स्याद्, न चेश्वरसंकेतस्य सम्बन्धत्वं भवितुमर्हति, निष्प्रतियोगिकत्वादिति भावः।

पूर्वं यदुक्तं स्वजन्यबोधं विषयत्वप्रकारकेच्छाविशेष्यत्वमर्थे पदसम्बन्धः, पदे चार्थस्य विपरीत एव, अस्य सम्बन्धत्वमन्यथानुपपत्त्या कल्प्यते। ननु स्वजन्येत्याद्युक्तपरम्परासम्बन्धोऽपभ्रंशादिस्थलेऽपि स्यात्, तेन च अपभ्रंशादिशब्दानामपि वाचकत्वं साधुत्वं च स्याद् इत्याशङ्क्य समाहितं यत् स्वजन्येत्याद्युक्तसम्बन्धावगाहिज्ञानं भ्रमात्मकमेवेति अपभ्रंशादिशब्दानां च वाचकत्वस्य साधुत्वस्य वा आपत्तिः संभवति इत्यर्थः इति संप्रदायः।

तदपि तुच्छम्—विनिगमनाविरहमवलम्ब्यापि दूष्यते—स्वजन्येत्यादिपूर्वोक्त सम्बन्धस्तु त्वया बलात् कल्प्यते नहि अयं सम्बन्धः स्वयं क्वचित् क्लृप्तो वर्तते, तथा च अक्लृप्तस्य स्वजन्य-

ज्ञानविषयत्वप्रकारकेच्छाविशेष्यत्वस्य सम्बन्धत्वस्वीकारे विनिगमनाविरहात् पदजन्यबोधनिरूपितार्थनिष्ठविषयत्वस्यापि सम्बन्धत्वं स्यात्, एवं तादृश भगवत्कृतिविशेष्यत्वस्यापि सम्बन्धत्वं स्यात्। तस्मात् तार्किकोक्तसम्बन्धानामुपपत्त्यभावात् पदपदार्थयोर्वाच्यवाचक एव सम्बन्धः स्वीकार्यः इति मीमांसकानुयायिनो वदन्ति। केचिन्मीमांसका इत्थं ब्रुवते—

जन्यपदार्थनिरूपिता शक्तिः जनकीभूतपदाथ स्वीक्रियते, यथा वह्निजन्यदाहपाकादिनिरूपिता शक्तिः जनकीभूते वह्नौ स्वीक्रियते, एवमेव पदज्ञानेन चार्थज्ञानं जन्यते, न तु अर्थस्तस्य प्रागेव उत्पन्नत्वात् सिद्धत्वाद्वा इति सिद्धं पदज्ञाननिरूपिता शक्तिरर्थज्ञाने एव वर्तते इति न कोऽपि दोषः। तन्मतानुसारेणैव वाचकत्वमपि तैर्निरुच्यते तथा हि—"तज्ज्ञानशक्तत्वं तद्वाचकत्वम्, तच्च तद्विषयकधीजनकतावच्छेदकधर्मत्वम्"—शक्तिवादः

नन्वेवं तद्विषयकज्ञानोत्पादकशक्तिमत्त्वमेवतद्वाचकत्वमस्तु इति चेन्न। धूमज्ञानेन वह्निज्ञानस्य जायमानत्वात् धूमस्यापि वह्निवाचकत्वापत्तिः स्यात् अतएतादृशगुरुतरवाचकत्वमादृतमिति भावः। तथा च यथा घटविषयकशाब्दबोधजनकता घटपदे वर्तते तथैव तादृशशाब्दबोधानुकूला शक्तिरपि घटपदे वर्तते इति सा शक्तिः तादृशशाब्दबोधकारणतावच्छेदिकास्ति अतः तादृशशाब्दबोधकारणतावच्छेदिका या शक्तिः तादृशशक्तिमत्त्वस्य पदे सत्त्वेन पदस्य अर्थवाचकत्वं जातमिति भावः। धूमे च वह्निविषयकाशाब्दबोधकारणतावच्छेदकी भूतायाः शक्तेरभावात् न धूमस्य वह्निवाचकत्वापत्तिः। एवञ्च तद्विषयक शाब्द-

बुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदिका या धर्मस्वरूपा शक्तिस्तादृशशक्तिमत्त्वमेव तद्वाचकत्वमिति सिद्धम् ।

मीमांसकैस्तादृशशाब्दबोधकारणतावच्छेदकीभूताया: शक्तेर्वह्न्यादिनिष्ठदाहाद्यनुकूलशक्तिवत् पदार्थान्तरत्वमेव स्वीक्रियते । नन्वेवं तीरादिविषयकशाब्दबुद्धित्वावच्छिन्नजन्यता निरूपितजनकतावच्छेदकीभूतशक्तिमत्त्वात्लाक्षणिक – गंगादिपदस्यापि तीरादिवाचकत्वं स्याद् इति चेन्न । लाक्षणिकस्य कस्यापि पदस्य लक्ष्यार्थविषयकशाब्दबोधाजनकत्वेन न गंगादिपदस्य तीरादिवाचकत्वापत्तिरित्यर्थः ।

तदुक्तम्—"लाक्षणिकं च नानुभावकमेवेति न तत्र शक्तिः"

—शक्तिवादः ॥

ननु तद्विषयकशाब्दधीजनकतावच्छेदधर्मवत्त्वमेव यदि तद्वाचकत्वं तदा तव प्राभाकरस्य मते प्रत्येकज्ञानस्य मिति मातृमेयैतत्त्रितयविषयकत्वे न भासमानत्वात् त्रयाणामेव ज्ञानेन प्रकाशो भवति । यथा नैयायिकप्रभृतिदार्शनिकानां नये ज्ञानेन विषयमात्रस्य प्रकाशो जायते तथा च यथा घटादिपदस्य घटरूपार्थविषयकशाब्दबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकधर्मवत्त्वेन घटरूपार्थवाचकत्वं वर्तते तथैव तस्य मिति मातृविषयकशाब्दबुद्धित्वावच्छिन्नजन्यता - निरूपितजनकतावच्छेदकशक्तिरूपधर्मवत्त्वावच्छिन्नतया मिति वाचकत्वं मातृवाचकत्वं च स्यात्, मिति-मातृवाचकत्वापत्तौ इष्टापत्तिर्न संभवति यतस्तद्विषयकत्वावच्छिन्नज्ञानशक्तपदस्यैव तद्वाचकत्वात्, मितिमातृ विषयकत्वेन च ज्ञानस्य न किञ्चित् पदशक्यता, ज्ञानसामान्य-

सामग्र्या एव मिति-मातृभासकतया पदान्तरस्य च मितिमातृ-भासकतया तद्विषयकत्वस्य तत् पदजन्यतावच्छेदकत्वे माना-भावात्। अयं भावः—तद्विषयकत्वावच्छिन्नेत्यत्र तद्विषयकत्वनिष्ठा-या ज्ञाननिरूपितावच्छेदकता साऽन्यूऽनानतिरिक्तवृत्तित्वरूपा ग्राह्या। तथा च मितिमातृविषयकत्वस्य सकलज्ञानसाधारणत्वेन पटविषयकेऽपि ज्ञाने सत्त्वेन तस्य अतिरिक्तवृत्तित्वादिति न तस्य घटादिपदजन्यतावच्छेदकत्वमस्ति येन घटादिपदस्य मितिमातृ-विषयकत्वस्याऽपत्तिः प्रसज्येत।

एवं घटादिपदस्य नीलादिवाचकत्वमपि नास्ति, यतो हि नीलादिविषयकत्वस्य नीलपटादि विषयकबोधेऽपि सत्त्वेन-अतिरिक्तवृत्तित्वात्, पीतघटादिविषयकबोधे चासत्त्वेन न्यून-वृत्तित्वाच्च न नीलादिविषयकत्वस्य घटादिपदजन्यबोधावच्छेद कत्वं भवितुमर्हति येन घटादिपदस्य नीलादिवाचकत्वं स्यात्। घटादिविषयकत्वमेव घटादिपदजन्यबोधा न्यूननतिरिक्त वृत्ति इति तदेवावच्छेदकं स्यादित्यतो घटादिपदस्य घटादिवाचकत्वं स्वीक्रियते नान्यार्थवाचकत्वम्। यद्विषयकत्वस्य यत् पदजन्यता-वच्छेदकत्वं तत् पदस्यैव तद्वाचकत्वं स्वीक्रियते। नन्वेवं क्रमेण यदि अतिरिक्तवृत्तिविषयताया घटादिपदजन्यतावच्छेदकत्वं नाङ्गीक्रियते तदा घटपदस्य घटरूपार्थवाचकत्वमपि न स्याद् यतो हि यत्र घटपदजन्यता नास्ति प्रत्युत कलशपदजन्यता वर्तते तत्रत्यशाब्दबोधे घटत्वावच्छिन्नविषयतायाः सत्त्वेन तस्या अतिरिक्तवृत्तित्वात् इति चेन्न। यत्र एकं कार्यं प्रति अनेकानि कारणानि भवन्ति तत्र कार्यतावच्छेदककोटौ तत्तत्कारणा-व्यवहितोत्तरत्वनिवेशः परमावश्यक एव, तथा च घटपदज्ञाना-

व्यवहितोत्तरजायमानं घटत्वावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति घटपदज्ञानं कारणम्। एवं कलशपदज्ञानाव्यवहितोत्तर-जायमानघटत्वावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति कलश-पदज्ञानं कारणम् इति रीत्या विशिष्यैव कार्यकारणभावो वाच्यः तथा च घटपदज्ञानाव्यवहितोत्तरत्वविशिष्टा घटत्वावच्छिन्नविषयता घटपदजन्यताया अतिरिक्तवृत्तिर्नास्ति। कलशपदजन्यतास्थले कलसपदज्ञानाव्यवहितोत्तरविशिष्टाया एव घटत्वावच्छिन्नविषय-ताया सत्त्वा दिति न घटपदस्य घटवाचकत्वानुपपत्तिरिति ध्येयम्।

## घटादिपदानां कार्यतावाचकत्वविचारः

ननु तद्विषयकत्वावच्छिन्नशाब्दबुद्धित्वावच्छिन्नजन्यतानिरूपि-तजनकतावच्छेदकशक्तिमत्त्वं यदि तद्वाचकत्वं मन्यते। तदा घटपदजन्यशाब्दबोधे घटविषयकत्वस्येव प्रभाकरमते कार्यान्वित-स्वार्थे पदानां शक्तेरङ्गीकारेण तत्र कार्यत्वविषयकत्वस्यापि सत्त्वेन घटपदस्य घटरूपार्थवाचकत्वमिव कार्यतावाचकत्वमपि स्यादितिचेन्न उक्तवाचकत्वगर्भे तद्विषयत्वनिष्ठावच्छेदकतायां निरूपितत्वनिष्ठावच्छेदकत्वानिरूपकत्वप्रवेशेन दोषाभावात् तथा च "कार्यान्वितस्वार्थे पदानां शक्तिः" इति वादिनां प्रभाकराणां मते साक्षात् परम्परासाधारणकार्यत्वविषयतानिरूपितत्वेन घटादिविषयताया घटादिपदजन्यतावच्छेदकत्वेपि न घटादिपदस्य कार्यतावाचकत्वमापद्यते। प्रत्युत लिङ्गादिसदस्यैव कार्यतावाचकत्वं उपपद्यते।

अयमाशयः—कार्यत्वविषयतानिरूपिता आनयनादिरूपकार्य-निष्ठा विषयता, तादृशकार्यनिष्ठविषयतानिरूपिका द्वितीयार्थकर्मत्व-

निष्ठविषयता, तादृशविषयतानिरूपिका तादृशविषयताशाली बोधो "घटमानय" इत्यादि वाक्यतो जायते। एवञ्च साक्षात् परम्परासाधारणं यत् कार्यंताविषयतानिरूपितत्वं तद्वती या घटनिष्ठा विषयता सा शाब्दबोधनिष्ठघटपदजन्यतायाः अवच्छेदिका यथा भवति तथैव कार्यंता विषयतापि भवति। कार्यंता-विषयताया निरूपितत्वांशे विशेषणतया तन्निष्ठावच्छेदकता निरूपितत्वनिष्ठावच्छेदकताया निरूपिका एव न तु तदनिरूपिका, अतो निरूपितत्वनिष्ठावच्छेदकत्वानिरूपककार्यंत्वविषयत्वनिष्ठा-वच्छेदकताकशाब्दत्वावच्छिन्नजन्यता - निरूपितजनकतावच्छेदक-शक्तिमत्त्वस्य घटादिष्वभावेन न तेषां कार्यंतावाचकत्वमापादयितुं शक्यम्।

घटविषयतायाश्च निरूपितत्वांशे विशेषणतया तद्विषयत्वनिष्ठा-वच्छेदकत्वे निरूपितत्वनिष्ठावच्छेदकत्वानिरूपकत्वीयसत्त्वेन घटपदस्य घटवाचकत्वं गच्छते। न च विशेष्यविशेषणनिष्ठा-वच्छेदकतयोर्विनिगमनाविरहात् परस्परं निरूप्यनिरूपकभावसत्त्वेन घटविषयत्वनिष्ठावच्छेदकतायामपि निरूपितत्वनिष्ठावच्छेदकता-निरूपकत्वस्य सत्त्वाद् घटपदस्य घटवाचकत्वमपि दुर्घटमिति वाच्यम्। अवच्छेदकताया निरवच्छिन्नत्वनिर्वचनानुपपत्त्या विशेषणनिष्ठावच्छेदकतायां विशेष्यनिष्ठावच्छेदकतानिरूपकत्वस्यैव विशेष्यनिष्ठावच्छेदकतायां विशेषणनिष्ठावच्छेदकतानिरूपितत्वस्यैव स्वीकरणीयकार्यताविषयतानिष्ठावच्छेदकतायां निरूपितत्व-निष्ठावच्छेदकतानिरूपकत्वस्य घटनिष्ठविषयत्वनिष्ठावच्छेदकतायां च निरूपितत्वनिष्ठावच्छेदकत्वानिरूपकत्वस्य च सत्त्वेन घटपदे-कार्यंतावाचकत्वापत्तेः घटवाचकत्वानुपपत्तेश्चासम्भवात्। न च

कार्यत्वविषयतानिरूपितघटविषयताकत्वेनेव विनिगमनाविरहेण घटविषयतानिरूपितकार्यत्वविषयताकत्वेनापि घटपदजन्यतायाः शाब्दबोधे स्वीकरणीयतया तादृशद्वितीयधर्मावच्छिन्नजन्यता-निरूपितजनकतावच्छेदकशक्तिमत्त्वमादाय घटपदे कार्यत्ववाचकत्वापत्तिरप्रतीकार्येति वाच्यम्, "घटपदं घटवाचकम्" इतिवद "घटपदं कार्यतावाचकम्" इति व्यवहारस्य प्रामाणिकत्वाभावेन घटपदे कार्यत्ववाचकत्वापत्तिभियैव तादृशद्वितीयरूपेण शाब्दस्य घटपदजन्यतया अनभ्युपगमात् ।

ननु घटविषयकशाब्दबोधस्य घटपदादिव कलसादिपदतोऽपि जायमानतया मिथो जन्यबोधेषु तत्तत्पदानां व्यभिचारितया घटविषयकशाब्दत्वावच्छिन्नं प्रति घटादिपदज्ञानस्य जनकत्वा-घटादिपदेषु घटादिशाब्दानुकूलशक्तेरसिद्धतया तत्तदर्थबोधानुकूल-शक्तिद्वारकं तत्तदर्थवाचकत्वं तत्तत्पदानां दुरुपपादमिति चेन्न । तत्तत्पदकार्यतावच्छेदकगर्भे तत्तत्पदाव्यवहितोत्तरत्वं प्रवेश्य तत्तदर्थबोधे तत्तत्पदानां कारणतायाः सम्यवदुक्तिकत्वात् ।

अयं भावः—घटपदज्ञानाव्यवहितोत्तरजायमानकार्यत्व-विषयतानिरूपित घटत्वावच्छिन्नविषयताशालिबुद्धित्वावच्छिन्नं प्रति घटपदज्ञानं कारणम् इत्यादिरूपेणैव विशिष्य कार्यकारणभावो वाच्यो अतो नोक्तदोषः ।

नन्वेवं क्रमेण घटपदज्ञानाव्यवहितोत्तरत्वविशिष्ट मितिमात्र-विषयताकशाब्देऽपि घटपदस्य हेतुत्वसम्भवेन तत्र मिति मात्रवाचकत्वमापद्येत इति चेन्न, मितिमात्रोविषयितया घटादि पदजन्यतानवच्छेदकत्वेन घटादिपदस्य मिति-मात्रवाचकत्वा-

सम्भवात् । अयमाशयः—"ज्ञानं वर्तते न वा" "अहमस्मि न वा" इत्यादिरूपेण जायमानसंशयादिनिराकरणायैव मितिमात्रो विषयतोऽङ्गीक्रियेत । तन्निराकरणं च मितिमात्रोर्विषयत्वास्वीकारेऽपि भास्यतास्वीकारेण भवितुमर्हति । विषयतासम्बन्धेन संशयं प्रति विषयतासम्बन्धेन निश्चयस्येव भास्यतासम्बन्धेनापि निश्चयस्य प्रतिबन्धकत्वस्वीकारे वाधकाभावात् । वस्तुतस्तु मितिमात्रोस्तन्मते ज्ञानमात्र एव भावेन तद्विषयकत्वस्य ज्ञानसामान्यकारणस्य जन्यतावच्छेदकगर्भ एव प्रवेशो न तु ज्ञानविशेषकारणस्य जन्यतावच्छेदकगर्भे, अतो मित्यादिविषयकत्वावच्छिन्नशाब्दनिष्ठजन्यतानिरूपितजनकतावच्छेदकशक्तिमत्त्वस्य घटादिपदेष्वसत्ताया न तत्र तद्वाचकत्वापत्तिः । अतो मितिमात्रोर्ज्ञानविषयत्वपक्षेऽपि न दोषः ।

विलासिनीकृतस्तु इत्थं वदन्ति यत् प्रयोजकवृद्धेन यदा पूर्वं "घटमानय" इत्युक्तम्, तच्छ्रुत्वा प्रयोज्य वृद्धेन घट आनीतः, तत् सर्वं कार्यकलापं विनिश्चित्य पार्श्वस्थो बालः योजकवृद्धोक्तवाक्यं श्रुत्वा प्रयोज्य वृद्धगमनञ्च दृष्ट्वा घटानयनं च दृष्ट्वा घटानयनादि रूपं सर्वमपि कार्यं घटमानयेति शब्दप्रयोज्यम् इत्यवधारयति । तदन्तरं "घटं नय" "गामनाय" इत्यादिवाक्यादन्वयव्यतिरेकाभ्यां घटादिपदानां कार्यान्वितघटादो शक्तिमनुमिनोति । अनुमानप्रकारश्च—

घटपदम् "आनयनात्मक" कार्यान्विते शक्तम् अनुपपत्तिप्रतिसन्धानं विना "तादृश" कार्यान्वितघटविषयकबोधात्पर्येण वृद्धोच्चरितत्वात् । हेतुश्च व्यतिरेको बोध्यः ।

अयमाशयः—"घटमानय"-"घटं नय" इत्यादिवृद्धव्यवहार प्रयोजकवाक्यानि सर्वाणि "प्रवर्त्तकत्वेन लिङ्गादिपदघटितानि, ततश्च तद्व्यवहारदर्शिनः शिशवोऽपि कार्यंविषयकघटाद्यर्थंबोधं प्रत्येव घटादिपदानां सामर्थ्यमवधारयन्तः तदुत्तरकालमपि कार्यान्वितघटादौ शक्तिज्ञानेनैव तादृशघटादिविषयताशालिबोधं स्वीकुर्वन्ति। तथा च एतन्मते शाब्दबुद्धित्वावच्छिन्नं प्रत्येव कार्यतावाचिपदसाकांक्षपदानां कारणत्वम्। कार्यतावच्छेदककोटौ कार्यताविषयकत्वनिवेश-प्रयोजनाभावः। अतो घटादिपदेषु कार्यत्ववाचकतायाः प्रसङ्ग एव नास्ति। तन्न समीचनम्—अत्र गामानयेत्यादिप्रयोजकवृद्धव्यवहारात् पूर्वोपदर्शितक्रमेण कार्यान्वितपदानां प्रथमतः शक्तिग्रहेऽपि कार्यान्वितघटत्वापेक्षया घटत्वस्य शक्यतावच्छेदकत्वे लाघवम् इति लाघवज्ञानेन "अनन्यलभ्यो हि शब्दार्थः" इति न्यायाच्च घटादिपदानां घटमात्रे शक्ति निश्चिनोति। कार्यान्वितघटादौ शक्तिनिश्चये जातेऽपि कार्यान्वितघटत्वस्य शक्यतावच्छेदकापेक्षया विशुद्धघटत्वस्य शक्यतावच्छेदकत्वे लाघवम् इति लाघवज्ञानसहकृतेन मनसा, अनन्यलभ्यस्यैव शब्दार्थत्वेन कार्यत्वं लिङ्गादिलभ्यं तदाश्रयश्च धातुलभ्यति ज्ञानसहकृतेन मनसा च पश्चात् कार्यान्वितत्वे शक्यतावच्छेदकत्वस्य कार्यान्वितघटत्वे वा शक्यतावच्छेदकत्वस्य परित्यागौचित्यादित्यस्वे व समीचीनत्वादिति भावः। अत एव "चैत्र! पुत्रस्ते जातः, कन्या ते गर्भिणी जाता" इत्यादौ मुखप्रसाद-मुखमालिन्याभ्यां "चैत्रः सुखी प्रसादविशिष्टमुखवत्त्वात्" इत्याकारकानुमित्या सुख-दुःखे विषयीकृत्य तादृशसुख-दुखःकारणत्वेन परिशेषाच्छाब्द-

बोधं निर्णीय सुख-दुःखहेतुधीहेतुतया तं शब्दमवधारयति तथा च व्यभिचारान्न कार्यान्विते शक्तिः। न च तत्र तं "पश्य" इत्यध्याहार्यम् मानाभवात्। चैत्र! पुत्रस्ते जातो मृतश्चेत्यादौ तदभावाच्च।

## ज्ञापमानायाः शक्तेः कारणत्वविचारः

मीमांसकानां नये कारणीभूतानां सर्वेषां पदार्थानां शक्तिमत्त्वेनैव कारणता स्वीकृता वर्तते। वह्नेरपि दाहं प्रति शक्तिमद्वह्नित्वेन, वह्निनिष्ठशक्तिमत्त्वेन वा कारणत्वं वर्तते, विनिगमनाविरहेण विषयस्यैव कारणत्वं व्याहर्तुं शक्यते नैकस्य। अत्रेदं जिज्ञास्यते यत् सा दाहानुकूला शक्तिः दाहात्मकार्यं प्रति स्वरूपसती कारणमस्ति ज्ञायमाना वेति विचारे दाहात्मककार्यंप्रति कारणीभूतायाः वह्निनिष्ठायाः शक्तेः स्वरूपसत्या एव कारणत्वं व्यवस्थापितमनुरोधात्। यथा—वह्नौ दाहानुकूला शक्तिरस्तीतिज्ञानाभावेऽपि वह्निसंयोगेन दाहो जायते, परन्तु पदपदार्थयोः शक्तिरूपसम्बन्धस्य विषये नास्ति अयं कश्चिदनुभवः यद् यादृशानुभवानुरोधेन पदपदार्थयोः सम्बन्धात्मकवृत्तिरूपायाः शक्तेः स्वरूपसत्या एव कारणत्वं स्वीक्रियत। एवं च यत्र "इदं पदममुमर्थं बोधयतु" इत्याकारिकायाः पदनिष्ठायाः शक्तेर्ज्ञानं नास्ति तत्र तादृशशक्तिकार्यभूता पदार्थोपस्थितिरपि न भवति अतो ज्ञाता सत्येव शक्तिः पदार्थोपस्थितौ उपयोगिनी स्वीकार्या। अनयोः शक्त्योः कारणत्वविषये इदमेवास्ति वैषम्यं यत् एकत्र सा शक्तिः स्वरूपसती कारणत्वमन्यत्र तु ज्ञाता दाहादिकार्यं जनयति, अन्या च पदपदार्थयोः शक्तिः ज्ञाता सती पदार्थोपस्थितिं जनयति इति

भावः अतएव विश्वनाथपञ्चाननेनापि शक्तेः सहकारिकारणरूपेण यत्रोल्लेखो व्यधायि तत्रापि शक्तिज्ञानस्यैव कारणत्वं व्यवस्थापितं शक्तेः। तदुक्तम्—

"शक्तिधीः सहकारिणी" ( न्या० सि० मु० )

एवं पदानामपि ज्ञातोपयोगित्वेनैव कारणता, अर्थात् अर्थोपस्थितौ पदज्ञानमेव कारणं न तु ज्ञायमानं पदमिति। यतो हि अतीतानागतपदानामपि ज्ञानादेवाऽर्थोपस्थिति - द्वारा शाब्दबोधो भवति न तु पदमात्रादिति। अतीता नामतस्थल तादृशपदानां सत्त्वेमेव नास्ति, सत्त्वाभावादेव च तेषु हेतुतावच्छेदकीभूतशक्तेरपि सत्त्वं तत्र नास्ति। पदानां सत्त्वे एव तेषु शक्तेः सत्वं भवितुमर्हतीति। एवं पदजन्यपदार्थोपस्थितेरेव शाब्दबोधे कारणत्वं वर्तते न तु अर्थमात्रस्य। एवञ्च उपस्थितौ यथा पदस्य, शाब्दबोधे च यथा पदार्थस्य ज्ञातोपयोगित्वेन कारणता स्वीक्रियते दार्शनिकैस्तदितरैश्च, तथैव शाब्दबोधोऽपि शक्तिविषयकज्ञानादेव संपन्नो भवति न तु स्वरूपसत्याः - शक्तेरिति स्वीक्रियते।

अपि च सा शक्तिः अतएव पदार्थज्ञाननिरूपिता कथ्यते विद्वद्भिः मीमांसकैः न तु पदार्थनिरूपिता इति। एवं पदार्थोपस्थितिकारणीभूता शक्तिः पदज्ञाननिष्ठा न तु पदनिष्ठा। निरूपकतासम्बन्धेन शक्तिः पदज्ञाने तिष्ठति। नैयायिकास्तु निरूपकतासम्बन्धेन शक्ति पदनिष्ठां कथयन्ति। तथा च यथा पदार्थज्ञाननिरूपितशक्तिस्वीकारेपि पदार्थस्यैव वाच्यत्वं स्वीक्रियते तथैव पदज्ञाने शक्तिस्वीकारेऽपि पदस्यैव वाचकत्वं न तु

पदज्ञानस्य । अतएव अतीतानागतपदज्ञानादपि शाब्दबोधोत्पत्त्या तस्यैव कारणत्वं स्वीकार्यम्, न तु पदानाम् । पदानां ज्ञानन्तु अतीतानागतावस्थायामपि वर्तते हेतुतावच्छेदकशक्तेरनुपपत्तिर्नास्ति ।

परन्तु असौ मीमांसकमतविशेषो न विचारसह प्रतीयते, यतो हि मीमांसकमते लाक्षणिकस्य शाब्दबोधाजनकत्वं पूर्वमुक्तं तद् दुर्घटं स्यात् । पदार्थोपस्थितिद्वारा शक्यार्थानुभवे शक्तस्यैव लक्ष्यार्थविषयकबोधे लाक्षणिकपदस्यापि हेतुताया दुर्वारत्वात्, तत्रापि शक्तेरावश्यकतया तस्यापि वाचकतापत्तेः, पदार्थोपस्थित्या लाक्षणिकपदस्याऽन्यथासिद्धत्वे तु शक्तपदस्यापि तथात्वापातादिति भावः ।

## स्वरूपसत्या शक्तेः कारणत्वविचारः

पदनिष्ठा पदज्ञाननिष्ठा, पदनिरूपिता = पदज्ञाननिरूपिता वा शक्तिः ज्ञातोपयोगिनी सती एवकारणमित्युक्तं प्रागेव । परन्तु तृणारणिमणिजन्यवह्निनिष्ठा दाहानुकूला शक्तिः स्वरूपसती एव दाहात्मकं कार्यं जनयति इति तत्र तस्याः शक्तेः नास्ति ज्ञानस्यावश्यकता, पद–पदार्थयोः शक्तिवत् ।

पद-पदार्थस्थले अर्थात् पदजन्यपदार्थोपस्थितौ यथा शक्तिज्ञानस्य कारणत्वं वर्तते तथा दाहस्थले वह्निनिष्ठायाः शक्तेः ज्ञानस्य कारणत्वं नास्ति इति भावः ।

वह्निष्ठायां दाहानुकूलायां शक्तौ विप्रतिपत्तिस्तावदित्थम्– "वह्निः दाहानुकूला द्विष्ठातीन्द्रियधर्मसमवायीन वेत्याकारिका । अत्र विधिकोटिः मीमांसकानाम्, निषेधकोटिर्नैयायिकानाम् ।

एवञ्च—"वह्निर्दाहानुकूलाऽद्विष्टाऽतीन्द्रियधर्मसमवायी दाहजनकत्वाद् अदृष्टवदात्मवत्" इति प्राचामनुमानं शक्तिसिद्धौ प्रमाणम्।

अत्रास्मिन् विषये मीमांसका इत्थं कथयन्ति यत् सर्वेषां कारणीभूतपदार्थानां शक्तिमत्त्वेनैव कारणता, शक्तिमतत्तत् पदार्थत्वेन वा कारणता अस्ति। प्रकृते दाहात्मकार्यं प्रति वह्नेः विलक्षणशक्तिमत्त्वेन शक्तिमद्वह्नित्वेन वा कारणता वर्तते। अत्र शक्तिमान् पदार्थः कारणम्, कारणतावच्छेदिका च शक्तिरिति दाहकारतावच्छेदकविधयाऽपि शक्तिः सिद्ध्यति।

अत्र शक्तेः पदार्थान्तरत्ववादिनां मीमांसकानामयमभिप्रायः यद् वह्नित्वावच्छिन्नवह्नेरेव यदि दाहं प्रति कारणत्वं वर्तते तदा चन्द्रकान्तमणिसमवधानकाले वह्नित्वावच्छिन्नवह्निः कथं न दाहं जनयति, अतः शक्त्यवच्छिन्नवह्नेरेव कारणत्वं वाच्यम्, न तु वह्नित्वावच्छिन्नवह्नेः। चन्द्रकान्तमणिः दाहकारणतावच्छेदिकां शक्तिं नाशयति, अतो मणिसमवधानकाले दाहो न जायते, शक्त्यवच्छिन्नवह्निरूपकारणाभावात्। मणिशून्यकाले तु जायते एव, शक्त्यवह्निरूपकारणस्य विद्यमानत्वात्। तथा च सिद्धं यन्मणिसत्त्वे दाहानुकूला शक्तिर्नश्यति, मण्यभावे तु शक्तिर्न नश्यति अपि तु पूर्ववदेव तिष्ठति। एवं चन्द्रकान्तमणि—सूर्यकान्तमण्योः सत्त्वेपि शक्तिं नश्यति, अतो वह्निसत्त्वे उभयमणिसत्त्वे चावश्यं दाहो जायते।

परन्तु न्यायशास्त्रानुरोधिनोऽत्र विषये इत्थं समुद्गिरन्ति यत् प्रतिबन्धकाभावातिरिक्तेतरसकलकारण सत्त्वेऽपि कार्योत्पत्तिर्न

जायते एवं दृश्यतेऽनुभूयते च, इत्यनेन सिद्ध्यति यदवश्यमेता-दृशसकलकारणातिरिक्तः कश्चन अपरोऽपि कारणमस्ति, यत् कारणाभावप्रयुक्ता कार्योत्पत्तिर्न दृश्यते तादृशं तत् कारणं प्रतिबन्धकाभावरूपमेवाऽस्तीति प्रकृते तत् कारणं मण्यभावरूपमेव अतो दाहं प्रति मण्यभावस्य प्रतिबन्धकाभावविधयैव कारणत्वं वाच्यम् ।

प्रतिबन्धकत्वञ्च—त्रिविधम्— कारणीभूताभावप्रतियोगित्व-मेकम्, प्रयोजकीभूताभावप्रतियोगित्वं द्वितीयम्, कार्यानुकूल-धर्मविघटकत्वं तृतीयम् । अत्र च मणौ प्रतिबन्धकत्वं न कारणीभूताभावप्रतियोगित्वम्, नापि प्रयोजकीभूताभावप्रति-योगित्वरूपम् अपि तु कार्यानुकूलधर्मविघटकत्वरूपमेव—तथाहि—तृतीय प्रतिबन्धकत्वस्वीकारेऽपि मणेः प्रतिबन्धकत्वानुपपत्तिः दाहात्मककार्यानुकूलस्य दृष्टवह्न्यादेर्विघटकत्वाभावात् । अतो वह्नौ कश्चिदतीन्द्रियधर्मः शक्तिरूपः स्वीकार्यः, सोऽपि दाहानुकूली-भूतः, अनुकूलञ्च प्रकृते जनक-जनकतावच्छेदकसाधारणम्, तेनादृष्टस्य कार्यमात्रं प्रतिसाक्षाज्जनकत्वेऽपि न दृष्टान्तासिद्धिः । एवं च दाहं प्रति शक्तिमद्वह्नित्वेन कारणतया मणेश्च दाहात्मक-कार्यानुकलशक्त्याख्यधर्मविघटकतया प्रतिबन्धत्वं साधुउपपद्यते एवेत्यवश्यं शक्तिः स्वीकार्या ।

सिद्धान्तिनस्तु कार्य-कार्यानुकूलधर्मान्यतरविघटकत्वमेव प्रति-बन्धं स्वीकुर्वन्ति । न तु कार्यानुकूलधर्मविघटत्वं तत् । बाधनिश्चये व्याप्तेः बाधनिश्चयस्य साक्षादेवाऽनुमितिपदमजहल्लक्षणयाऽनुमिति तत् कारणान्यतरपरमिति" । एवं मणेः साक्षाद् दाहविघटकतया प्रतिबन्धकत्वोपपत्तौ शक्तिस्वीकारो व्यर्थ एव स्यादिति वदन्ति ।

परन्तु प्रभाकरमतानुयायिनामेतत् कथनम् वर्तते यत् कार्यानुकूलधर्मविघटकत्वमेव प्रतिबन्धकत्वम्। बाधनिश्चये व्याप्तिवारणाय कारणीभूताभावप्रतियोगित्वरूपं प्रतिबन्धकत्वं वाच्यम्। तथा च बाधनिश्चयाभावरूपकारणीभूताभावस्य प्रतियोगित्वाद् बाधनिश्चयस्य न तत्राव्याप्तिरिति भावः।

अथवा कार्य-कार्यानुकूलधर्मान्यतरविघटकत्वमेव प्रतिबन्धकत्वमस्तु। एतादृशप्रतिबन्धकत्वानुसरणेन बाध-निश्चये नाव्याप्तिरिति। मणेः प्रतिबन्धकत्वानुरोधेन च कार्यानुकूलधर्मविघटकत्वमेव प्रतिबन्धकत्वं वाच्यम्। एवं च मणिः शक्तिनाशद्वारा दाहं प्रतिबध्नाति। अर्थात् दाहात्मककार्यस्य जनकतावच्छेदकीभूत "शक्ति" रूपधर्मस्य विघटकत्वात् मणेः प्रतिबन्धकत्वं संगच्छते। अतः शक्तिपदार्थः सिद्धयति। पूर्वमपि शक्तेः पदार्थत्वं सिद्धं साधितं च अनुमानादिप्रयोगद्वारा इदानीन्तमप्यनुमानमाह—दाहत्वावच्छिन्नकार्यतानिरूपितकारणता अतीन्द्रियधर्मावच्छिन्ना अयोग्यवृत्तिकारणतात्वादित्यनुमानेनापि शक्तेः सिद्धिर्बोद्धव्येति भावः।

ननु अनया पद्धत्या न शक्तिः सिद्धयति, वन्ध्या स्त्रीसंप्रयोगादौ दृष्टसाद्गुण्येऽपि अदृष्टाविलम्बात् फलविलम्बात् इतिवत् अत्रापि तद्विलम्बात् विलम्ब इति यद्युच्येत तदा न तत्सम्यक् यतो हि न दृष्टसामग्रीसंपत्तौ अदृष्टविलम्बा क्वापि कार्यविलम्बो दृष्टः। वन्ध्यास्त्रीसंप्रयोगादिस्थले विजातीय-संयोगरूपकारणाभावेन फलाभावो दृश्यते। अन्यथा दृष्टविलम्बादेव कार्यं विलम्बे दृष्टकार्यकारणभावो हि सर्वथा विलीनतां यायात्, तस्मात् संभवति दृष्टसाद्गुण्ये तथा कल्पनाया एव न्याय्यत्वात् शक्तेः पदार्थत्वसिद्धौ न किमपि बाधकं भवतीति भावः।

नन्वेवं शक्तिसिद्धावपि तस्याः शक्तेः पदार्थान्तरत्वं कथं स्वीक्रियत इति चेन्न। निश्चितेषु पदार्थेषु तस्या अन्तर्भावेन सुतरामतिरिक्तत्वसिद्धेः। तथाहि—शक्तिर्न द्रव्यात्मिका, तस्या गुणादिवृत्तित्वात्। अतएव न गुणात्मिका, नापि कर्मात्मिका वा गुणादिवृत्तित्वात्। न च सामान्याद्यन्यतमरूपा उत्पत्तिमत्वे सति विनाशित्वात्। यद्यपि मणिसमवधानकाले दाहजनकीभूतवन्हेरेव नाशाभ्युपगमात् न दाहोत्पादः, अतिरिक्तशक्तेः कल्पनापेक्षया मणिसमवधानकाले क्लृप्तायाः वह्निनाशकल्पनाया एव न्याय्यत्वादिति न्यायेन इदमेव सुकरं समाधानम्। तथापि वस्तुनो नाशकल्पनायां गौरवेण एतदपहाय निष्कृष्टं समाधानमाह गोवर्धनसुधीर्यन्मणेः प्रतिबन्धकत्वेन प्रतिबन्धकाभावस्य कारणत्वमिति न्यायेन मण्यभावस्य कारणत्वस्वीकारेणैव निर्वाहे मणिसमवधाना समवधानाभ्यामनन्तशक्ति तत् प्रागभावतद्ध्वंसकल्पनाया अनौचित्येन वक्तुमशक्यादन्याय्यत्वाच्च शक्तेर्न पदार्थान्तरत्वमिति भावः।

## लाक्षणिकापभ्रंशादिशब्दानां वाचकत्वखण्डनम्

गङ्गादिपदानां लक्ष्यार्थतीरादिबोधकत्वं स्वीकृतं न्यायनये ईश्वरेच्छायाः सन्मात्रविषयकत्वेन "गङ्गापदं तीरं बोधयतु" इत्याकारकेश्वरेच्छायाः स्वीकार्यत्वाद्, ईश्वरेच्छैव न्यायमते शक्तिरिति गङ्गादिपदानां तीरादिबोध्यार्थवाचकत्वापत्तिः स्यात्। एवं गाछ गगरी इत्यादि अपभ्रंशशब्दानामपि वृक्ष-मत्स्य-घटादिरूपार्थ वाचकत्वापत्तिः स्यात्, अत्रापि "गाछपदं वृक्षं बोधयतु" "माछपदं मत्स्यं बोधयतु" तथा "गगरीपदं घटं बोधयतु" इत्या-

कारिकाया ईश्वरेच्छायाः स्वीकार्यत्वादित्याशङ्कायाः समाधान-माह ईश्वरेच्छा द्विविधा वर्तते एका विशिष्टवैशिष्ट्यावगाहिनी, अपरा च शुद्धबोधविषया विशकलिता इत्यर्थः। आद्या यथा— "घटपदं घटत्वावच्छिन्नं बोधयतु" इत्याकारिकायैव इच्छया वाच्यवाचकव्यवहारो जायते, एतस्माद् व्यवहाराद् घटस्य वाच्यत्वं घटशब्दस्य च वाचकत्वमायाति। द्वितीया यथा— "गङ्गापदं बोधयतु" "तीरो बोधविषयो भवतु" इत्याकारिकैव विशकलिता इच्छा स्वीकृता वर्तते, तथा च "गङ्गा" "पदं तीरं बोधयतु" किं वा "तीरं गङ्गापदजन्यबोधविषयो भवतु" एवं "गगरीपदं घटं बोधयतु" "घटो वा गगरीपदजन्यबोधविषयो भवतु" इत्याकारिकाया ईश्वरेच्छाया अभावान्न गङ्गादिपदस्य लक्ष्यार्थतीरादवाचकत्वापत्तिः, न वा गाछ-माछ-गगरीत्यादि अपभ्रंशशब्दानां वाचकत्वापत्तिः।

यद्यपि "गङ्गायां घोषः" तीरे गङ्गापादजन्यबोधविषयत्वमस्ति तथापि तीरांशे शुद्धबोधविषयतात्वेनैव रूपेण गङ्गापदजन्य-विषयत्वरूपम्, यतो हि तीरगङ्गापदजन्यबोधविषयो भवतु" इत्याकारिकाया अखण्ड भगवदिच्छाया अस्वीकारात्। अत्र गङ्गा पदजन्यबोधविषयतात्वेन रूपेण बोधविषयत्वप्रकारकत्वमीश्वरे-च्छायां न स्वीक्रियते, अतो न गङ्गापदस्य तीरवाचकत्वापत्तिर-स्तीति विभावनीयम्। यत्र अखण्डतत्पदजन्यबोधविषयतात्वा-च्छिन्नप्रकारतानिरूपितविशेष्यता यस्मिन्नर्थे भासते तत्रैव तादृशार्थवाचकत्वं तत् पदस्य स्वीक्रियते। अत्र च "बोधो गंङ्गापदजन्यो भवतु" "तीरं च बोधविषयो भवतु" इत्याकारिकाया

एवं विशकलिताया भगवदिच्छायाः स्वीकारान्न तीरवाचकत्वापत्तिर्गङ्गापदस्य, न वा गगरीत्याद्यपभ्रंशशब्दानां घटरूपार्थवाचकत्वापत्तिरप्यस्तीत्यपि बोध्यम्। "तीरं गङ्गापदजन्यबोधविषयो भवतु" इत्याकारिकाखण्डभगवदिच्छाया अस्वीकारेऽपि भगवदिच्छायाः सर्वं सर्वविषयकत्वस्य व्याघातो नैव भवितुमर्हति, यतो हि पूर्वोक्तायाः खण्डश ईश्वरेच्छायाः स्वीकार पक्षेऽपि तीरे बोधविषयत्वं, बोधे च गङ्गापदजन्यत्वमवगाहितमेव वर्तते तर्हि किमनुरोधेन भगवदिच्छायाः सर्वविषयकत्वव्याघातः स्यात्।

तदुक्तं गदाधरेण—

"इदं तु तत्त्वम्—तीरादौ गङ्गापदजन्यबोधविषयत्वसत्त्वेऽपि तदंशे शुद्धबोधविषयतात्वादिनैव तादृशविषयत्वादिप्रकारत्वमीश्वरेच्छाया उपगम्यते न तु गङ्गापदजन्यबोधविषयतात्वादिनापि तत्प्रकारकत्वं मानाभावात्। तदनभ्युपगमेऽपि तस्याः सर्वविषयकत्वाव्याघातात्"—(शक्तिवादः).

ननु यदि "तीरं बोधविषयो भवतु" इत्याकारिकैवेश्वरेच्छा उपगम्यते तदा गङ्गापदस्य तीरवाचकत्वापत्तिस्तु नास्ति, तावतापि भगवदिच्छायास्तीरादेः गङ्गापदजन्यबोधविषयकत्वाभावेन बोधांशे गङ्गापदजन्यत्वाऽवगाहित्वाभावेन च सर्वविषयकत्वव्याघातस्तु स्यादेव। यदि च बोधांशे गङ्गापदजन्यत्वमवगाहितुं भवता "तीरं गङ्गापदजन्यबोधविषयो भवतु" इत्याकाकारिका ईश्वरेच्छा स्वीक्रियते, तामीश्वरेच्छामादायैव च तीरांशे गङ्गापदजन्यत्वमुपपाद्यते तावता च गंगापदस्य तीरवाचकत्वापत्तिः स्यादिति उभयतः पाशारज्जुरित्याशङ्कां समाधत्ते—न च तथा

सति बोधांशे गङ्गापदजन्यत्वानवगाहितया सर्वविषयाकत्वानुपपत्तिः स्यादिति वाच्यम्। प्रागुक्तप्रकारेण द्विविध्यविशकलितेच्छास्वीकारेण "गङ्गापदजन्योबोधो भवतु" इत्यकारकेच्छाया अङ्गीकृतत्वात् बोधांशे गङ्गा पदजन्यत्वावगहनमपि जातमेवेति भगवदिच्छयाः सर्वविषयकत्वव्याघातोऽपि नास्ति, तीरादिवाचकत्वाचकत्वपत्तिरपि नास्ति, एव मपभ्रंशादि शब्दानां वाचकत्वापत्तिस्तु प्रागेव दूरापास्तेऽति भावः। तथा च तीरादिनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकताघटकतया गङ्गापदजन्यत्वानवगाहित्वेऽपि बोधांशे स्वातन्त्र्येण गङ्गापदजन्यत्वावगाहित्वोपगमात् बोधदोष इत्यर्थः। एवञ्च तत्पदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन ईश्वरेच्छावत्वस्य तत्पदशक्यतारूपतया, एवं भगवदिच्छानिरूपिता या तत्पदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यता तादृशविशेष्यतावत्त्वमेव तत् पदशक्यत्वमिति घटादिनामेव शक्तपदानां घटादिवाचकत्वं, घटाद्यर्थानाञ्चघटादिपदवाच्यत्वं सिद्धयति, न लाक्षणिकपदानां, नापि अपभ्रंशादिशब्दानां वाचकत्वमायाति, अतश्च न तेषां वाचकत्वापत्तिरित्यर्थः।

यद्यपि घटपदजन्यबोधविषयत्व "घटमानय" इत्यत्र यथा घटस्य वर्तते तथा घटान्वितकर्मत्वस्य एवं तदन्वितानयनस्य कर्मता घटयोः संसर्गस्य आधेयत्वादेश्चाऽप्यस्ति, तेषामप्येतादृशवाक्यजन्यशाब्दबोधे भासमानत्वात्, अतः घटपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यतावत्त्वस्य कर्मत्वादीनामपि सत्त्वेन घटादिपदवाच्यत्वं स्यादेव। तथापि "कर्मत्वादयो घटपदजन्यबोध-

विषयतावन्तो भवन्तु, "बोधश्च घटपदजन्यो भवतु" इत्याकारकं विशकलितमिच्छाद्वयमेव स्वीक्रियते। एवञ्च "घटमानय" इत्यत्र घटपदजन्यत्वस्य प्रागुक्तदिशा कर्मत्वादिनिष्ठविशेष्यतानिरूपित-प्रकारतावच्छेदकतयाऽनवगाहनाद्, अखण्डघटपदजन्यबोधविषय-तात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतायाः कर्मत्वादौ अभावाच्च न कर्मत्वादीनां कर्मत्वादिवाचकत्वापत्तिश्चेति विभावनीयम्।

तदुक्तं श्रीगदाधरेण—

उक्तरीत्यैव च घटादिपदजन्यबोधविषयस्य घटान्वितकर्मत्वा-ऽनयनादेर्घटादिसंसर्गस्य च तादृशबोधविषयत्वप्रकारकेश्वरेच्छा-विषयत्वेऽपि तादृशघटादिपदावाच्यत्वमुपपादनीयम्" शक्तिवादः।

———

# शक्तिग्रहश्चकीदृशैः कतिभिश्चकारणै-र्भवति ?

अयं च शक्तिग्रहात्मा विषयः श्रीविश्वनाथपञ्चाननेनाष्टभिः कारणैर्विनिरूपितः । तदुक्तं—

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्यशेषाद् विभृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ।

—भाषापरिच्छेदे

शक्तिग्राहकाणि—शक्तिनिश्चायकानि प्रमाणानि प्रदर्शयन्तः खलु तानि विशदं विवेचयामः । कस्य पदस्य कस्मिन्नर्थे शक्तिरित्येतस्य विषयस्य निश्चयार्थमेव समस्तैर्दार्शनिकैः शास्त्रकारैश्च अष्टविधप्रमाणानि स्वीकृतानि । एभिरेव प्रमाणै अर्थेषु शब्दस्य शक्तिनिश्चयो जायते । स च निश्चयः कथं जायत उपदर्शितप्रमाणैस्तदाह—

व्याकरणेन शक्तिग्रहः—धातु-प्रकृति-प्रत्ययादीनां शक्तिग्रहो व्याकरणशास्त्रतो जायते। यद्यपि प्रकृतिपदेनैव धातोरपि ग्रहणं भवितुमर्हति पृथग्धातुग्रहणं व्यर्थमेव प्रतिभाति तथापि स्पष्टार्थमेव तदुक्तम्। जगदीशेनाप्युक्तम्—

निरुक्ता प्रकृतिर्द्वेधा नाम-धातुप्रभेदतः।
यत्प्रातिपदिकं प्रोक्तं तन्नाम्नो नातिरिच्यते॥

जगदीशेनैव धातोर्लक्षणमपि प्रोक्तम्—तथाहि—

यो यत्स्वार्थस्योत्तरस्थत्वजर्थे बोधनक्षमः।
स तादृशार्थकः शब्दो धातुस्त्रिविध ईरितः॥
अथवा यः सुबर्थे निजार्थस्य स्वान्ते कृच्चिन्तनं विना।
यादृशस्यान्वयाहेतुः स वा धातुस्तदर्थकः॥

तत्रैव प्रातिपदिकलक्षणमप्युक्तम्—

येन स्वीययदर्थस्य मुख्यतः प्रतिपादने।
स्वोत्तरप्रथमाऽपेक्ष्या तन्नाम स्यात्तदर्थकम्॥

प्रत्ययलक्षणमपि तत्रैवोक्तम्—

यादृशार्थे प्रकृत्यन्यो निपातान्यश्च वृत्तिमान्।
स तादृशार्थे शब्दः स्यात् प्रत्ययोऽसौ चतुर्विधः॥

भू सत्तायामित्यादिव्याकरणाद् धातूनां तत्तदर्थे शक्तिग्रहः। धातुस्त्रिविधः, तदुक्तम्—

मूलधातुगंणोक्तोऽसौ सौत्रः सूत्रैकदर्शितः।
योगलभ्यार्थकों धातुः प्रत्ययान्तः प्रकीर्त्तितः ॥

मुक्तावली—विलासिनी

पाचक-पाठकादिप्रातिपदिकानां शक्तिग्रहो व्याकरणशास्त्रतो भवति। "पच्" धातोः पाकार्थकत्वस्य, तदुत्तरकृत्प्रत्ययस्य कर्तृत्वार्थकत्वस्य च तत्र प्रतिपादनात्। 'वर्तमाने लट्" इत्यादिव्याकरणात् प्रत्ययानां शक्तिग्रहो भवति तत्तदर्थेषु। प्रत्ययश्चतुर्विधः प्रत्ययस्य चातुर्विध्यमपि तत्रैवोक्तम्—

विभक्तिश्चैव धात्वंशस्तद्धितः कृदिति क्रमात्।
चतुर्धा प्रत्ययः प्रोक्तः कादिभिः पञ्चधाऽथवा ॥

मु०—विलासिनी

विभक्तिश्च सुप्तिङ्भेदेन द्विविधा—

संख्यात्वव्याप्यसामान्यैः शक्तिमान् प्रत्ययस्तु यः।
सा विभक्तिर्द्विधा प्रोक्ता सुप्तिङौ चेति भेदतः ॥

मु०—विलासिनी

सोऽयमित्थंप्रकारेण धातु-प्रकृति-प्रत्ययादीनां शक्तिनिश्चयस्तत्तदर्थेषु व्याकरणाज्जायते। प्रत्ययादीनामित्यादिना निपातग्रहणं क्रियते।

परन्तु स च शक्तिग्रहः क्वचित् सति बाधके त्यज्यते। यथा—चैत्रः पचतीत्यादौ वैयाकरणैराख्यातस्य कर्तरि शक्तिरुच्यते। चैत्रः

पचतीत्यादौ कर्त्रा सह चैत्रस्याभेदान्वयः। पाककर्त्ता चैत्र इत्यन्वयबोधः प्रतीयते वैयाकरणानां मते।

इदं च वैयाकरणानां मतं गौरवदोषभयेन अस्माभिर्नैयायिकैस्त्यज्यते। यतो हि वैयाकरणैराख्यातस्य कर्त्तरि शक्तिरुच्यते। कर्त्तुः शक्यत्ते कर्तृत्वं शक्यतावच्छेदकं स्यात्, कर्तृत्वं च कृतिरेव, प्राणिनामानन्त्यात् तेषां कृतयोऽपि अनन्ता एव, अनित्याश्चापि वर्तन्ते, अनित्यस्य आनन्त्ययुक्तस्य च शक्यतावच्छेदकत्वमपेक्ष्य नैयायिकैराख्यातस्य कृतौ शक्तिः स्वीक्रियते लाघवात्। कृतेः शक्यत्वे कृतित्वं शक्यतावच्छेदकं स्यात्। कृतित्वस्य जातित्वेन नित्यत्वमेकत्वं च वर्तते। अतः नित्यस्य एकस्य च शक्यतावच्छेदकत्वमपेक्ष्य अनित्यस्य अनन्तस्य च शक्यतावच्छेदकत्वे सर्वथा गौरवमेव वर्त्तत इति विभावनीयम्।

अन्यच्च, अस्ति अयं नियमः सार्वत्रिकः, यद् अनुल्लिख्यमानजातेरेव स्वरूपतो मानं स्वीक्रियते, अतः कृतेः स्वरूपतो शक्यतावच्छेदकत्वासंभवेन कृतित्वविशिष्टायाः कृतेरेव शक्यतावच्छेदकत्वं वाच्यम्। अपि च "द्रव्य-गुण-कर्मणां निरवच्छिन्नप्रकारत्वानभ्युपगमात्" इति नियमानुसारतोऽपि कृतिनिष्ठा प्रकारता कृतित्वावच्छिन्ना वाच्या, एतेन कृतित्वविशिष्टानामनन्तकृतीनां शक्यतावच्छेदकत्वे गौरवं सुतरां सुस्पष्टमेवेति भावः। एवं च नैयायिकानां मते "चैत्रः पचति" इत्यत्र "पच्" धात्वर्थपाकस्य-अनुकूलत्वसम्बन्धेन आख्यातार्थकृतेश्च समवायसम्बन्धेन कर्त्तरि ( चैत्र ) अन्वयः तथा च "पाकानुकूलकृतिमांश्चैत्रः" इत्यन्वयबोधो जायते। अत्र च कृतित्वस्य शक्यतावच्छेदकत्वे लाघवम्।

लाघवमूलक एव चास्ति अयं नियमः—संभवति लघौ धर्मे गुरौ तदभावादिति"।

अपि च नैयायिकानां मते चैत्रादौ आख्यातार्थकृति-समवायसम्बन्धेन प्रकारीभूय भासते। वैयाकरणानां मते तु आख्यातस्य कर्त्तुरभेदसम्बन्धेन प्रथमान्तार्थे चैत्रेऽन्वयः। तत्र वैयाकरणा एवं पृच्छ्यन्तेऽस्माभिः यद् अभेदस्य संसर्गतैव नास्ति यावद् भवतां मते, तावद् अभेदसम्बन्धेन कथं तत्रान्वयः स्यात्। इत्येतस्मात् कारणादपि नास्ति वैयाकरणानां सिद्धान्तः सर्वथा समादरणीयः। अपि तु नैयायिकानां मतमेव साधीयः। एतन्मते च धात्वर्थविशेष्यकबोधस्य सर्वत्रानभ्युपगमेन प्रथमान्तार्थ-विशेष्यकबोधस्यैव स्वीकरणीयतया कृतिप्रकारकचैत्रादिविशेष्यक-बोधो नानुपपन्नः।

एवं ग्रामं गच्छति चैत्र इत्यादौ "कर्त्तुरीप्सिततमं इति सूत्रेण ग्रामस्य कर्मत्वं विधीयते। क्रियाजन्यफलाश्रयत्वप्रकारता-निरूपितकर्तृसमवेतेच्छीयविशेष्यतावान् कर्मसंज्ञ इति सूत्रार्थः। एवं च क्रियाजन्यफलाश्रयो ग्रामो भवतु इतीच्छीयकर्त्तृवृत्ति-क्रियाजन्यफलाश्रयत्वप्रकारतानिरूपितविशेष्यताया ग्रामे सत्त्वाद् ग्रामस्य कर्मसंज्ञा भवति। ततश्च कर्मणि द्वितीयेत्यनुशासनेन कर्मत्वरूपेऽर्थे द्वितीया भवति। कर्मत्वं च उत्तरदेशसंयोगादिरूप-फलस्वरूपमेव। तत्र च कर्मत्वार्थे प्रकृत्यर्थस्य ग्रामस्य आधेयता-सम्बन्धेनान्वयः। तस्य च अनुकूलत्वसम्बन्धेन गम्धात्वर्थे व्यापारेऽन्वयः। तस्य चानुकूलत्वसम्बन्धेन कृतावन्वयः। कृतिश्चाख्यातार्थः, तस्याश्चैत्रेऽन्वयः। एवं च "ग्रामं गच्छति

चैत्रः" इत्यत्र ग्रामवृत्तिसंयोगानुकूलव्यापारानुकुलकृतिमांश्चैत्र इत्यन्वयबोधो निष्पन्नो भवतीति भावः।

"चैत्रेण गम्यते ग्रामः" इत्यत्र तृतीयार्थः कृतिः, तत्र च कृतौ आधेयताया चैत्रस्यान्वयः। तस्याश्च जन्यतासम्बन्धेन धात्वर्थ व्यापारेऽन्वयः, धात्वर्थव्यापारस्य च जन्यतासम्धन्धेन आख्यातार्थे फलेऽन्वयः। तस्य च आश्रयतासम्बन्धेन ग्रामेऽन्वयः। एवं च चैत्रवृत्तिकृतिजन्यव्यापारजन्यसंयोगाश्रयो ग्राम इत्यन्वयबोधो जायत इति न किञ्चिदपि अनुपपन्नमिति भावः।

अत्रेदं विचारणीयम्—यत् प्राचां मते धातोर्व्यापारवाचित्वम्। फलविशेषश्च द्वितीयार्थः। नवीनानां नये च फलावच्छिन्न-व्यापारवाचित्वं धातोर्वर्तते। आधेयत्वंकर्मप्रत्ययार्थः। शाब्द-बोधस्तु पूर्वमुक्त एव।

## अत्र प्रसङ्गसंगतिवशाद् विशेषविचारः

"कर्त्तुरीप्सिततमं कर्मेति" सूत्रस्य कर्त्तुः स्वव्यापारजन्य-फलाश्रयतया यदीप्सितम् "यदन्त्याभिलाषविषयः" तत् कारकं कर्मसंज्ञं स्यादित्यर्थः। "वृक्षात् पर्णं पततीत्यादौ च वृक्षस्य पतनक्रियाजन्यविभागारूपफलाश्रयत्वेन कर्मत्वप्रसक्त्या कर्मणि द्वितीयेत्यस्य प्राप्तेः। यदि च—

कर्त्तुरीप्सितं कर्मेत्येवास्तु सूत्रम्' किं "तमब्ग्रहणेन, वृक्षादेरीप्सितत्वाभावेनैव कर्मसंज्ञानिराकरणात् इति चेन्न। विप्राय गां ददातीत्यत्र स्वस्वत्वध्वंसविशिष्टपरस्वत्वानुकूलेच्छा

"दा" धात्वर्थः, एवं चोक्तेच्छारूपधात्वर्थजन्यस्वत्वस्य निरूपकतासम्बन्धेन विप्रे सत्त्वाद् विप्रे गां ददातीति प्रयोगापत्तिः, तमब्ग्रहणे तु विप्रस्येप्सितत्वेऽपि ईप्सिततमत्वं नास्ति इति कर्मत्वप्रसक्तिर्नास्ति इति न द्वितीयापत्तिः।

न च "ग्रामं गच्छन् तृणं स्पृशति" इत्यादौ तृणपदोत्तरं द्वितीयानुपपत्तिः स्यात्, तस्येप्सिततमत्वाभावादिति वाच्यम्। तथा युक्तं चानीप्सितमिति सूत्रेण तृणस्य कर्मसंज्ञाविधानात्। ईप्सिततमवत्, अनीप्सितमपि क्रियाजन्यफलाश्रयः कारकं कर्मसंज्ञं स्यादिति सूत्रान्वयः। अतएव ईप्सिततमानीप्सितसाधारणक्रियाजन्यफलशालित्वमिति तु नैयायिकाः।

'चैत्रो ब्राह्मणाय गां ददातीत्यत्र द्वितीयाया आधेयत्वमर्थः, तस्य च स्वस्वत्वेऽन्वयः। स्वस्वत्वध्वंसविशिष्टपरस्वत्वानुकूला इच्छा धात्वर्थः निरूपितत्वं चतुर्थ्यर्थः, तस्य द्वितीयस्वत्वेऽन्वयः, तथा च गोवृत्तिस्वस्वत्वध्वंसविशिष्टब्राह्मणनिरूपतस्वत्वानुकूलेच्छाश्रयश्चैत्र इति बोधः। स्वस्वत्वध्वंसानुकूलपरस्वत्व प्रकारिका इच्छा "दा" धात्वर्थ इति मते तु स्वस्वत्वध्वंसरूपफलाश्रयत्वाद् गोः कर्मता। बोधश्च पूर्ववदेव बोध्य इति भावः।

तण्डुलं पचतीत्यादौ च रूपपरावृत्तिजनकतेजः संयोगो धात्वर्थः। रूपपरावृत्तिफले च तण्डुलवृत्तित्वस्यान्वयः। तथा च तण्डुलवृत्तिरूपपरावृत्तिजनकतेजः संयोगानुकूलकृतिमानिति बोधो जायते। अवयविनि पाकानभ्युपगन्तृवैशेषिकमते तण्डुलपदस्य तदीयपरमाणुषु लक्षणां विधाय पूर्ववद् बोध उपपादनीयः।

ओदनं भुङ्क्ते इत्यादौ च गलबिलाधःसंयोगावच्छिन्नक्रियानुकूलव्यापारो धात्वर्थः। तादृशक्रियायामोदनवृत्तित्वस्यान्वयः। तथा च ओदनवृत्तिगलबिलाधःसंयोगावच्छिन्नक्रियानुकूलव्यापारानुकूलकृतिमान् इति बोधः संपन्नः।

'चैत्रेण तण्डुला ओदनं पच्यन्ते इत्यादिस्थले च' चैत्रसमवेतकृतिजन्योदनवृत्तिसंयोगजन्यरूपपरावृत्तिमन्तस्तण्डुला इत्याकारको बोधः। 'चैत्रस्तण्डुलानोदनं पचती'त्यत्र च प्रधानकर्मोदनपदोत्तरद्वितीयार्थाधेयत्वस्य तादृशसंयोगेऽन्वयः। एवं च तण्डुलवृत्तिरूपपरावृत्तिजनकौदनवृत्तितेजःसंयोगानुकूलकृतिमानिति बोधः।

गुरुं धर्मं पृच्छतीत्यत्र च जिज्ञासाविषयकज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दः पृच्छतेः धातोरर्थः। गुरुपदोत्तरद्वितीयार्थाधेयत्वस्य जिज्ञासाविषयकज्ञानेऽन्वयः, धर्मपदोत्तरद्वितीयार्थविषयत्वस्य च शब्देऽन्वयः, तथा च गुरुवृत्तिस्वीयजिज्ञासाविषयकज्ञानोद्देश्यकप्रवृत्त्यधीनधर्मविषयशब्दानुकूलकृतिमानिति बोधः जायते।

"गुरुर्धर्मं पृच्छ्यते" इत्यत्र च शिष्यसमवेतकृतिजन्यधर्मविषयकप्रवृत्त्युद्देश्यस्वीयजिज्ञासाविषयकज्ञानवान् गुरुरिति बोधः।

शिष्यं धर्मं ब्रूते इत्यत्र च ज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दो धात्वर्थः। ज्ञाने शिष्यवृत्तित्वस्य धर्मविषयकत्वस्य च शब्देऽन्वयः। शिष्यवृत्तिज्ञानोद्देश्यकधर्मविषयकशब्दप्रयोगानुकूल - कृतिमानिति शाब्दबोधो जायते।

"शिष्यं वेदं पाठयति" इत्यत्र कण्ठतालुसंयोगानुकूलव्यापारो धात्वर्थः। शिष्यपदोत्तरद्वितीयार्थंकृतेः—वेदपदोत्तरद्वितीयार्थजनकत्वस्य संयोगेऽन्वयः। तथा च शिष्यवृत्तिकृतिजन्यवेदजनककण्ठताल्वभिघातानुकूलव्यापारनिर्वाहकव्यापाराश्रयो गुरुरित्याकारकः शाब्दबोधः।

एवमेव 'चैत्रो ब्राह्मणमन्नं भोजयति' इत्यत्रापि ब्राह्मणपदोत्तरद्वितीयार्थंकृतेर्जन्यतासम्बन्धेन संयोगेऽन्वयः। अन्नपदोत्तरद्वितीयार्थाधेयत्वस्यापि तत्रैव संयोगेऽन्वयः। गलबिलाधःसंयोगानुकूलो व्यापारो धात्वर्थः। तथा च ब्राह्मणवृत्तिकृतिजन्यान्नवृत्तिगलबिलाधःसंयोगानुकूलव्यापारनिर्वाहकव्यापाराश्रयश्चैत्र' इति बोधः। "दण्डं विना न घट उत्पद्यते" इत्यत्र द्वितीयार्थंप्रतियोगित्वस्य विना शब्दार्थेऽभावेऽन्वयः। तस्य च प्रयोज्यतया नञर्थाभावेऽन्वयः, तस्य प्रतियोगितया उत्पत्तावन्वयः। एवं च दण्डनिष्ठप्रतियोगितानिरूपकाभावप्रयोज्याभावप्रतियोग्युत्पत्त्याश्रयो घट इति शाब्दबोधः।

"रासभं विना घट उत्पद्यते" इत्यादौ च विनापदार्थाभावस्योत्पत्तौ समानकालीनत्वसम्बन्धेनान्वयः। एवं चात्र रासभाभावसमानकालीनोत्पत्त्याश्रयो घट इति बोधो भवतीति न किञ्चिदप्यनुपपन्नम्।

"कृष्णनवम्यामारभ्य यावच्छुक्लदशमीं पूजयति" इत्यत्र च "यावत्" पदार्थः प्रागभावः, द्वितीयार्थः प्रतियोगित्वम्, तत्र

प्रकृत्यर्थदशम्या आधेयतयाऽन्वयः। प्रतियोगित्वस्य च प्रागभावेऽन्वयः। तावता दशमीप्रतियोगिकप्रागभावलाभः। तस्य कृष्णनवमी-प्रागभावाधिकरणभेदविशिष्टकालिकसम्बन्धावच्छिन्न-स्वाधिकरणतावत्तिथिनिष्ठभेद - प्रतियोगितावच्छेदकतानवच्छेदक-पूजाविशेषत्वत्वसंबन्धेन पूजायामन्वयः। कृष्णनवम्यामित्यस्य कृष्णनवमीवृत्तित्वमर्थः। "आरभ्य" इत्यत्र धात्वर्थः पूजाङ्गभूतः संकल्पः। ल्यबर्थः पूर्वकालः। तथा च कृष्णनवमीवृत्तिसंकल्प-पूर्विका शुक्लदशमीप्रागभावनिरूपित-कृष्णनवमीप्रागभावाधि-करणभेदविशिष्टकालिकसम्बन्धा - वच्छिन्नस्वाधिकरणतावतिथि-निष्ठभेदप्रतियोगितानवच्छेदकपूजानुकूलकृतिमानिति शाब्दबोधः संपद्यते।

"कार्तिकमारभ्य यावच्चैत्रं शीतं भवति" इत्यत्र कार्तिकावधित्वं द्वितीयान्तार्थः, "आरभ्य" इत्यस्य ल्यबन्तस्य पूर्वोत्तरकालत्वमर्थः, "चैत्रम्" इति द्वितीयान्तस्य चैत्रावधित्वमर्थः, यावच्छब्दस्योत्तर-कालपूर्वकालमर्थः। कार्तिकवृत्त्यवधितानिरूपको यः पूर्वकालः "आश्विनपूर्णिमा" तदुत्तरकालत्वं कार्तिकशुक्लप्रतिपदारभ्य चैत्रपूर्णिमापर्यन्तं तद्विशिष्टं यच्चैत्रवृत्त्यवधितानिरूपकोत्तरकाल वैशाखकृष्णप्रतिपत्पूर्वकालत्वं तद्व्यापकभवनाश्रयः शीतम् इति बोधो जायते।

एवंविधप्रदर्शितरीत्या धातु-प्रकृति-प्रत्ययादीनां शक्तिग्रहो व्याकरणादेव जायत इति सर्वं सुस्थिरं संपन्नं च वर्तते।

परन्तु अत्रेदमाशङ्क्यते वैयाकरणैर्यत् "पचति" इत्यत्र "तिप्" इति आख्यातेन कर्तुरनभिधानात् कृतेरेव आख्यातवाच्यत्वे

चैत्रः पचतीत्यादिवाक्यघटक "चैत्र" पदोत्तरम् "अनभिहिते" इत्यधिकारसूत्रानन्तरपठितेन "कर्त्तृकरणयोस्तृतीया" इति सूत्रेण तृतीया स्यात्, आख्यातेन कर्त्रनभिधानस्थले कर्त्तृबोधनार्थं तृतीयाविधानस्य नियमात्। प्रकृते आख्यातेन कृतेरेवाभिधीयमानतया कर्त्तृरनभिधानात् तृतीयापत्त्या "चैत्रेण" इत्येव प्रयोगः स्यात् न तु चैत्रः पचति इति प्रयोगः कदापि भवितुमर्हदिति चेन्न। आख्यातपदप्रयोज्याख्यातार्थसंख्याप्रकारककर्त्तृविशेष्यकबोधाभावरूपस्य कर्त्तृसंख्यानभिधानस्य तृतीयायां प्रयोजकत्वात्। तथा च 'लः कर्मणि च" इत्यादिसूत्रस्य लकाराः "सकर्मकधातुसमभिव्याहृताः" कर्त्तृगतसंख्यावाचकाः कर्मगतसंख्यावाचकाश्च स्युरित्यर्थः। एवं च "कर्त्तृकरणयोस्तृतीया" इति सूत्रस्य आख्यातेन कर्त्तृगतसंख्यानभिधाने कर्त्तृवाचकपदोत्तरं तृतीया भवतीत्येव तात्पर्यमस्तीति भावः।

प्रकृते च आख्यातेन कर्त्तृगत "संख्याऽभिधानात्" संख्याबोधार्थम् अनभिहिताधिकारीयकर्त्तृकरणयोस्तृतीया इति सूत्रस्याप्रवृत्त्या न चैत्रेण पचतीति प्रयोगापत्तिरिति भावः। "चैत्रस्तण्डुलं पचति" इत्यत्र चैत्रगतसंख्यैवाख्यातेन अभिधीयते न तु तण्डुलादिगता संख्या। अन्यथा चैत्रेण पच्यते तण्डुल इत्यत्रापि तृतीया न स्यात्, तत्रापि चैत्रे आख्यातार्थसंख्याभिधानसम्भवादित्यतः कर्त्तृगतसंख्याभिधाने प्रमाणमाह—संख्याभिधानयोग्यश्च कर्मत्वाद्यनवरुद्धः प्रथमान्तपदोपस्थाप्यः। कर्मत्वाद्यनवरुद्धत्वञ्च इतरविशेषणत्वेन तात्पर्याविषयत्वम्, न तु कर्मत्वाद्यनन्वितत्वम् तथा सति चैत्रस्तण्डुलः पचति, चैत्रः काष्ठः पचति इत्यादौ तादृशसंख्याऽन्वयः स्यात्।

## उपमानाच्छक्तिग्रहो निरूप्यते

अरण्यं प्रविष्टस्य कस्यचिद् ग्रामीणस्य चक्षुः सन्निकर्षादिना अयं गोसदृशः इति प्रत्यक्षसम्भवेऽपि "गोसदृशो गवयपदवाच्यः" इति स्मरणस्यासम्भवात् अनुभूतस्यैव स्मरणात् इति शाब्दबोधात्मकमनुभवं दर्शयति यत्र केनचिदारण्यकेन "गवयः कीदृशो भवति" ग्रामीणस्य इत्याकारके प्रश्ने जाते सति ग्रामीणायोक्तं यत् "गो सदृशो गवयपदवाच्यः" इति। पश्चाद् अर्थाद् आरण्यकोक्तवाक्यश्रवणजन्यवाक्यार्थबोधात्मकानुभवोत्तरं ग्रामीणेन क्वचिदरण्यादौ गवयो दृष्टस्तत्र ग्रामीणस्य गोसादृश्यदर्शनं यज्जातं तदेवोपमितिकरणम्। तदनन्तरं गोसदृशो गवयपदवाच्य इति अतिदेशवाक्यार्थस्मरणं यज्जायते तदेव तत्र व्यापारः। तादृशस्मरणानन्तरं पिण्डे चक्षुः संयोगानन्तरं योग्यव्यक्तिवृत्तितया गवत्वजातेरपि निश्चयात् तत्र गवयत्वावच्छिन्नधर्मिक गोपदवाच्यत्वप्रकारकगवयो गवयपदवाच्य इत्याकारकं यज्ज्ञानं जायते तदेवोपमितिः। एवकारेण गोसदृशो गवयपदवाच्य इति ज्ञानस्योपमितित्वव्यवच्छेदः। अन्यथा तादृशज्ञानस्य गोसदृशो गवयपदवाच्य इति अतिदेशवाक्यज्ञानाधीनत्वेन शाब्दबोधरूपतया उपमितेः प्रमित्यन्तरत्वानुपपत्तेः गवयो-गवयपदवाच्य इति ज्ञानस्य च गवयपदजन्यत्वविशिष्टोपस्थितिं विना शाब्दबोधरूपत्वासंभवात्। प्रकृतवाक्ये सदृशपदस्यैव सत्वात्। न च प्रत्यक्षेण गोसादृश्यस्य गवयत्वस्य वा उपस्थितौ गवयत्वावच्छेदेनैव कथं गवयपदवाच्यत्वोपमितिः, न तु सादृश्यावच्छेदेनेति वाच्यम्। उभयोपस्थितेस्तुल्यत्वेऽपि गवयत्वजात्यपेक्षया

गोसादृश्ये गौरवज्ञानेन गोसादृश्यावच्छेदेन गवयपदवाच्यत्वोपमितेरनुदयात्, अतो गवयो गवयपदवाच्यः इति ज्ञानमेवोपमितिः, न तु अयं गवयपदवाच्यः इत्याकारकस्य ज्ञानस्योपमितित्वं स्वीक्रियते, तथा सति इदन्त्वावच्छिन्ने शक्तिग्रहेऽपि गवयान्तरे शक्तिग्रहाभावप्रसंगाद् इति तु तत्त्वम् ।

एवं वैधर्म्यज्ञानादपि उपमितिः स्वीक्रियते । यथा "धिक्करभमतिदीर्घग्रीवं कठोरकण्टकाशिनमपसदं पशूनाम्" इति वाक्याद् अतिदीर्घग्रीवत्वादिपश्वन्तरवैधर्म्यज्ञानादुष्ट्रे करभपदवाच्यताग्रहः । एवं कार्यकारणभावनिश्चयरूपापि उपमितिः स्वीक्रियते । यथा— "मुद्गपर्णीसदृशौषधिर्ज्वरहरा" इति वैद्यवाक्यं श्रुत्वा तदर्थबोधानन्तरम् इयमोषधिर्मुद्गपर्णीसदृशी इति प्रत्यक्षम्, अतिदेशवाक्यार्थस्मरणोन्तरम् "इयं ज्वरहरा" इत्याकारककार्यकारणभावज्ञानमपि उपमितिः ।

तथा च गवयो गवयपदवाच्य इत्याकारकवाच्यतारूपशक्तेर्ज्ञानमुपमानाज्जायते इति भावः ।

## कोशादपि शक्तिग्रहः

कोशादपि पदनिरूपितायाः अर्थनिष्ठायाः शक्तेर्निश्चयो जायते । यथा "अप्येकदन्तहेरम्बलम्बोदरगजाननाः" इति अयं कोशः— एकदन्त-हेरम्ब-लम्बोदर-गजानन शब्दानां "गणेश जी" रूपेऽर्थे शक्तिं निर्धारयति । तत्रापि पूर्ववत् सति गौरवज्ञानादिरूपबाधके त्यज्यते । यथा नीलादिपदानां नीलरूपादौ नीलादिविशिष्टे च शक्तिः कोशेन 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इत्यादि-

कोशेन व्युत्पादिता। तथा च गुणत्वस्योद्देश्यतावच्छेदकत्वस्थले एव तेषां पुंस्त्वं भवतीति ज्ञायते। तेन रक्तो गुणो रूपमिति प्रत्यक्षचिन्तामणिः। अतएव च रक्तं रूपं नास्तीति दीधितिकृदुक्तमपि संगच्छते, तत्र गुणत्वस्योद्देश्यतावच्छेदकत्वेन नपुंसकत्वाभिधानात्। गुणवाचकशुक्लादिपदानां पुंल्लिङ्गत्वस्य च प्रतिपादनेन गुणवाचकत्व-गुणिवाचकत्वशुक्लादिपदानां पुंल्लिङ्गत्वस्य प्रतिपादनेन, गुणवाचकत्व-गुणिवाचकत्वयोरपि प्रतिपादनादिति भावः। तथापि नीलादिपदानां लाघवात् नीलादिरूपेऽर्थे एव शक्तिः स्वीक्रियते नीलादिविशिष्टे चार्थे तु लक्षणैवेति मन्तव्यम्। यद्यपि कोशेन उभयत्रैव शक्तिर्व्युत्पादिता। तथापि नीलत्वादिजातेः शक्यतावच्छेदकत्वे लाघवमस्तीति भावः।

अन्यच्च नीलादिपदानां नीलादिविशिष्टेऽर्थे शक्तेः स्वीकारे नीलादि- विशिष्टस्यैव शक्यत्वेन नीलादिव्यक्तयः शक्यतावच्छेदिकाः स्युः तासामनन्ताना नीलादिव्यक्तीनां शक्यतावच्छेदकत्वकल्पनमपेक्ष्य नीलत्वादिजातेरेव तथात्वमुचितम्। नीलादिविशिष्टे तु लक्षणैवोचिता इति भावः।

## आप्तवाक्यात् शक्तिग्रहः—

केनचिद् ग्रामीणेन पृष्टं यत् कस्तावत् "पिक" शब्दस्य वाच्यो भवति ? उत्तरपक्षमवलम्ब्य केनचिदाप्तपुरुषेण कथितम् यत् 'कोकिलः पिकपदवच्यो भवति।' तथा चात्र आप्तपुरुषकथनानुसारतः पिकादिशब्दानां कोकिले शक्तिग्रहो जायते। आप्तस्तु

यथार्थज्ञानवान् यथार्थवक्तृत्ववांश्च। पूर्वं रामचन्द्र-हरिश्चन्द्र-युधिष्ठिरप्रभृतयो हि सर्वथा आप्तपुरुषा आसन्। तेषां वचोनिरूपिता एव शक्तिरर्थे गृह्यते इति भावः।

## व्यवहाराच्छक्तिग्रहः

एवं व्यवहारादपि शक्तिग्रहो जायते सर्वेषामिति। यथा केनचिद् प्रयोजकवृद्धेन (गुरुणा) प्रयोज्यवृद्धं (स्वपुत्रं) प्रति "घटमानय" इत्युक्तम्, ततश्च प्रयोज्यवृद्धेन घट आनीतः, तदवधार्य पार्श्वस्थो बालः (पौत्रः) घटानयनरूपं कार्यं "घटमानय" इति शब्दप्रयोज्यमित्यवधारयति। अयमाशयः—यद् आदौ प्रयोजकवृद्धेन घटमानयेत्युक्तम्—ततश्च प्रयोज्यवृद्धस्य शाब्दबोधः, ततो घटानयनं मदिष्टसाधनम् इति ज्ञानम्, ततश्च घटानयने प्रवृत्तिः। ततो घटानयनरूपा चेष्टा भवति इति रीत्या घटानयनस्य घटमानयेतिशब्दप्रयोज्यत्वबोध्यम्।

अयमत्रानुमानसंग्रहोऽपि बोध्यः—इदं घटानयनं घटानयन-विषयकप्रवृत्तिजन्यं चेष्टात्वात् मदीयचेष्टावत्। ततश्च सा प्रवृत्तिः घटानयनधर्मिककृतिसाध्यताज्ञानजन्या प्रवृत्तित्वात् निजप्रवृत्तिवत्। तादृशप्रवृत्तिजनक "तादृशकृतिसाध्यता" ज्ञानम् असाधारणहेतुकं कार्यत्वात् घटवत् इति। असाधारणकारणं च वृद्धवाक्यमेव नान्यदिति ध्येयम्।

तदनन्तरं 'घटं नय', 'गामानय' इति वाक्यात् आवापोद्वा-पाभ्यां घटादिपदानां कार्यान्वितघटादौ बालः शक्तिं निश्चिनोति (अनुमिनोतीत्यर्थः)। अनुमानप्रकारश्चेत्थं वर्तते—घटपदम्

"आनयन-नयनात्मक" कार्यान्वितघटे शक्तम् अनुपपत्तिप्रतिसंधानं विना "तादृश" कार्यान्वितघटविषयकबोधतात्पर्येण वृद्धोच्चरितत्वात्। हेतुश्च व्यतिरेकी बोध्यः। अयं भावः—घटमानय, घटं नय इत्यादिवृद्धव्यवहारप्रयोजकवाक्यानि सर्वाणि प्रवर्तकत्वेन लिङादिपदघटितानि, ततश्च तद्व्यवहारदर्शिनः शिशवोऽपि कार्यताविषयकघटाद्यर्थबोधं प्रत्येव घटादिपदानां सामर्थ्यमवधारयन्तः तदुत्तरकालमपि कार्यान्वितघटादौ शक्तिज्ञानेनैव तादृशघटादिबोधं स्वीकुर्वन्ति। इत्थं प्रयोजकवृद्धप्रयोज्यवृद्धयोः पारस्परिकव्यवहारतः बालस्य शक्तिग्रहो जायत इति भावः।

## वाक्यशेषादपि शक्तिग्रहः

एवं वाक्यशेषादपि शक्तिनिर्णयो जायते। तद् यथा यवमयश्चरुर्भवतीत्यत्र यवपदस्य दीर्घशूकविशेषे शक्तिरस्ति इति तु आर्याणां (याजकानाम्) कथनं वर्तते। म्लेच्छानामिदं कथनं वर्तते यत् यवपदस्य कङ्गौ (कँगनी इत्याख्ये) शक्तिर्वर्तते। तत्र हि 'अथ अन्या ओषधयो म्लायन्ते, अथ एते (यवाः) मोदमानाः (सर्पिणा आर्द्रा इति यावत्) तिष्ठन्ति। वाक्यशेषान्तरमप्याह—बसन्ते सर्वसस्यानां जायते पत्रशातनम्। मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः' इति वाक्यशेषाद्दीर्घशूकविशेषे शक्तिर्निर्णीयते, कङ्गौ तु शक्तिभ्रमात् प्रयोगः। उभयत्र शक्तिस्वीकारे नानाशक्तिकल्पने गौरवं स्यात्। न च पुष्पवन्तपदवत् हर्यादिपदवच्च नानाशक्तिकल्पनम् अत्रापि क्रियतामिति वाच्यम्। हर्यादिपदेषु विनिगमकाभावाद् अगत्या नानाशक्तिकल्पनं जायते ततस्तत्र

नानाशक्तिकल्पनाप्रयुक्तगौरवस्य प्रामाणिकतया न दोषायेति भावः।

## विवरणाच्छक्तिग्रहः

विवरणादपि शक्तिग्रहो जायते। विवरणन्तु तत्समानार्थक-पदान्तरेण तदर्थकथनम्। यथा 'घटोऽस्ति' इत्यस्य विवरणं 'कलशोऽस्ति' इत्येव क्रियते, तथा च पूर्वोक्तविवरणात् घटपदस्य कलशे शक्तिर्निर्णीयते। एवमेव 'पचति' इत्यस्य 'पाकं करोति' इत्यनेन विवरणात् आख्यातस्य यत्नार्थकत्वं कल्प्यते। अत्र कल्प्यते इत्यस्य अनुमीयते इत्यर्थः। अनुमानप्रयोगश्चेत्थम्—तथाहि आख्यातं यत्नत्वविशिष्टे शक्तं यत्नत्वविशिष्टयद्यद्धर्मावच्छिन्न-शक्तपदप्रतिपादितार्थप्रतिपादकं भवति तत्तद्धर्मावच्छिन्ने शक्तं पाकपदेन विवृतपच्धातुवत् इति हि सामान्यव्याप्तिः। यत्नत्वं प्रवृत्ति-निवृत्ति-जीवनयोनियत्नसाधारणो जातिविशेषः। न चैवं निवृत्त्यादौ प्रयोगापत्तिः। धात्वर्थ—आख्यातार्थयोः, अनुकूलत्व-विषयित्वयोः, संसर्गतया मानेन पाकादिनिवृत्त्यादेस्तदभावादिति प्रांचः। पचतीत्यादौ प्रवृत्तित्वप्रकारेण बोधस्यानुभवसिद्धतया प्रवृत्तित्वावच्छिन्ने एव शक्तिः। प्रवृत्तित्वजातिर्यत्नत्वव्याप्या। रागजन्यतावच्छेदकतया चेष्टाजनकतावच्छेदकतया सिद्ध्यतीति नव्याः।

प्रसिद्धपदस्य सान्निध्यात् शक्तिग्रहः—एवं प्रसिद्धपदस्य सान्निध्यादपि शक्तिग्रहो जायते। यथा—"इह सहकारतरौ मधुरं पिको रौति" इत्यत्र "सहकारतरुः" इत्येतस्य प्रसिद्धपदस्य सान्निध्यात् "पिक" शब्दस्य कोकिले शक्तिग्रहो जायते।

इदमत्रावधेयम्—प्रसिद्धपदसमभिव्याहारोऽपि अनुमानद्वारैव शक्तिग्राहकः। तथाहि—उक्तवाक्यादिहाम्रवृक्षे मधुरशब्दकर्त्ता पिकपदवाच्यः इति बोधो जायते। "पिक" शब्दस्य पूर्वं शक्तिग्रहाभावात् कोकिलदर्शनान्तरं कोकिलः पिकपदवाच्यः सहकारतरौ मधुरशब्दकर्त्तृत्वाद् इत्यनुमानादेवं शक्तिग्रह इति ध्येयम्।

—

# कीदृशं शक्तिज्ञानं शाब्दबोधोपयोगि ?

इदमत्र वयमनुभवामः—यन्नहि सर्वेषां जनानां सर्वैः शब्दैः सर्वार्थविषयकः शाब्दबोधो जन्यते किन्तु कैश्चिदेव शब्दैः केषांचिदेवार्थानां शाब्दबोधो जन्यते, अतः शाब्दबोधं प्रति वृत्तिज्ञानजन्यपदार्थोपस्थितेः अन्वयव्यतिरेकाभ्यां कारणत्वं निश्चीयते। अतएव अपरिचितानाम् इंग्लिश, फारसी, अरबी-प्रभृतिभाषाणां शब्दाः श्रावणप्रत्यक्षविषयीभूताः सन्तोऽपि नहि शाब्दबोधं जनयितुं प्रभवन्ति; तेषु तत्तदर्थनिरूपितशक्तिज्ञानाभावेन तैस्तत्तदर्थानां तत्तद्भाषानभिज्ञजनानामुपस्थित्यभावात्। प्रत्यक्षादिना प्रकारान्तरेण वा जायमानाया उपस्थितेः सत्त्वेऽपि शाब्दबोधो नोद्भवत्यतः पदजन्याया एव, शब्दार्थयोः सम्बन्धान्तरज्ञानजन्योपस्थितितोऽपि शाब्दानुदयेन पदनिष्ठवृत्तिज्ञानजन्याया एवोपस्थितेः शाब्दहेतुत्वं युज्यते। अतएवोक्तं भाषापरिच्छेदे विश्वनाथेन 'शक्तिधीः सहकारिणी' इति। अर्थात् शक्तिज्ञानं वृत्तिज्ञानं वा शाब्दबोधे सहकारिकारणम्। अयमर्थो न्यायसिद्धान्तमुक्तावल्याम् "अत्रैव शक्तिज्ञानस्योपयोगः" इत्यादिशब्दैः स्पष्टीकृतः। न्या० सि० मुक्ता०।

एवं च शाब्दबोधे पदज्ञानं कारणं, पदार्थोपस्थितिर्व्यापारः, शक्तिज्ञानं सहकारिकारणम्, शाब्दबोधस्तु स्वयं फलमेव। तदुक्तं विश्वनाथपञ्चाननेन—

पदज्ञानन्तु करणं द्वारं तत्र पदार्थधीः।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी॥

—भषापरिच्छेदः।

"पदार्थधीः" इत्यत्र धीशब्देन स्मृतिरूपं ज्ञानं गृह्यते। तेन पूर्वोक्तप्रत्यक्षादिना जायमानस्य ज्ञानस्य तादृशस्मृतिभिन्नतया न तदापत्तिः। एवं पदार्थप्रत्यक्षादेः पदज्ञानाजन्यतया तस्य व्यापारत्वसंभवः।

अन्यच्च "द्वारं तत्र पदार्थधीः" इति मूलेन पदार्थज्ञानस्य व्यापारमुद्रयैव कारणत्वप्रतिपादनेन कथं प्रत्यक्षादिना जायमानं पदार्थज्ञानमादाय शाब्दबोधापत्तिः संघटते तस्य व्यापारत्वस्यैव विरहात्।

अपि च उपस्थितौ (पदार्थोपस्थितौ) पदनिष्ठवृत्तिज्ञान-जन्यत्वनिवेशस्यापि अयमेवाशयो यत् शब्दमात्रस्य समवाय-सम्बन्धेन गगने वर्तमानतया समवायेन घटपदवदाकाशमित्या-कारकशब्दार्थसम्बन्धज्ञानजन्यगगनस्मृतेरपि तादृशतया घटपदज्ञानव्यापारत्वसम्भवेन घटपदाद् गगनस्य शाब्दबोधापत्तिः स्यादिति पदनिष्ठवृत्तिज्ञानजन्यत्वनिवेश उपस्थितौ न स्यात्।

न च पदज्ञानजन्यत्वनिवेशोऽपि उक्तपदानुभवजन्यस्मृतेरपि तादृशव्यापारतया तदव्यवहितोत्तरकाले शाब्दबोधापत्तिस्तद-वस्थैवेति वाच्यम्। पदज्ञानजन्यत्वस्योद्बोधकमुद्रयैव पदज्ञाननिष्ठ-

कारणतानिरूपितकार्यत्वरूपस्य प्रवेशात्, उक्तपदार्थोपस्थितो तु पदानुभवस्योद्बोधकमुद्रया हेतुत्वाभावेन तस्यास्तादृशपदार्थोपस्थितिरूपत्वाभावेन नोक्तापत्त्यवकाशः इति ध्येयम्। पदज्ञानजन्यपदार्थोपस्थितौ पदज्ञानजन्यत्वमपि वृत्तिज्ञानसहकारेण बोध्यम्। तथा च वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितिः शाब्दबोधे कारणम् इति—भावः। ननु वृत्तिज्ञानं पदज्ञानजन्यपदार्थोपस्थितौ सहकारि इति तु साधूक्तम्, परन्तु वृत्तिरूपसम्बन्धज्ञानस्य कथं पदार्थोपस्थितिसहकारित्वम् इति चेदित्थम्। एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम् इति न्यायेन पदपदार्थयोर्वृत्तिरूपसम्बन्धज्ञाने जाते एव पदज्ञानात् पदार्थस्मरणं जायते न तु पदज्ञानमात्रात्। हस्तिहस्तिपकयोः सम्बन्धज्ञानाभावे हस्तिदर्शनेऽपि हस्तिपकस्य स्मरणं न जायते इत्यतः सम्बन्धज्ञानस्य सम्बन्धिज्ञानसहकारित्वं बोध्यम्।

यदि च उपस्थितौ वृत्तिज्ञानसहकृतत्वं न निवेश्यते तदा समवायसम्बन्धज्ञानसहकृत "घट" पदज्ञाननिष्ठसम्बन्धिज्ञानत्वावच्छिन्न कारणतानिरूपितकार्यताश्रयीभूतादाकाशस्मरणादाकाशस्य शाब्दबोधापत्तेः। वृत्तिज्ञानसहकारित्वप्रवेशे च वृत्तिज्ञानसहकृतघटपदज्ञानस्याकाशोपस्थितौ अकारणत्वेन न आकाशविषयक शाब्दबोधापत्तिः इयि ध्येयम्।

## वृत्तिज्ञानस्य भेदविवेचनम्

वृत्तिज्ञानमपि द्विविधम्। शक्तिज्ञानम् लक्षणाज्ञानञ्च। व्यञ्जनाज्ञानमपि तृतीयं वृत्तिज्ञानं साहित्यिकप्रभृतयो विद्वांसः स्वीकुर्वन्ति।

परन्तु व्यञ्जनाया विषये इदमस्माभिः पृच्छ्यते यत् सा व्यञ्जना स्वरूपसतीकारणम्, ज्ञायमाना वा कारणम्। तत्र आद्यः पक्षो न समीचीनः, तथा सति विकसितादिपदेन सर्वदा सर्वस्यैव व्युत्पन्नस्य तादृशबोधापत्तेः, न तु सहृदयमात्रस्य व्यञ्जनाया अविशेषात्। इष्टापत्तौ चानुभवविरोधः, सहृजा-ज्ञायमानस्वरूपगूढत्वस्य तादृशव्यंग्येऽनुपपत्तिश्च स्यात्।

द्वितीयपक्षोऽपि न साधीयान्—शक्तिग्रहकारणीभूतव्यवहार-कोषादिवत्—लक्षणाग्राहकप्रत्यक्षादिवच्च तद्ग्राहकस्य वक्तव्यत्वा-पाताद् ज्ञानसामान्यस्य ग्राहिका चक्षुः संयोग-मनः संयोगप्रभृति-सामग्री एव तद्ग्राहिका इति, यदि ब्रूषे तदापि पूर्वोक्तदोषस्य जागरूकत्वतादवस्थ्याच्चेत्यादिकं दूषणमपि द्रष्टव्यम्। एवमादि-दूषणगणग्रासाद् व्यञ्जनाया न तु स्वरूपसत्या एव कारणत्वम्, नापि ज्ञायमानायास्तस्यास्तथात्वं भवितुमर्हति। इत्यतो नैयायिकानामिदं कथनं सर्वथा समीचीनं प्रतिभाति यद् व्यञ्जनाया वृत्तित्वमेव नास्ति। व्यञ्जनाया वृत्तित्वं यादृशकार्यसंपादकत्वेन स्वीक्रियते साहित्यिकप्रभृतिभिर्विद्वद्भिः, तादृशं तत्कार्यं लक्षणाज्ञानं क्वचिच्च तात्पर्यज्ञानमेव संपादयति इत्यत्र नास्ति कापि विप्रतिपत्तिरिति नैयायिकानामाशयः।

व्यञ्जनावृत्तिविषये आलंकारिकाणामयमप्यस्त्येको महान् आशयः। यत् "तीरे घोषः" इत्यनुक्त्वा "गङ्गातीरे घोषः" इत्यनुक्त्वा च "गंगायां घोषः" इति कथनस्य केनचिद् विशिष्टाशयेन नूनं भवितव्यम्।

स चाशयोऽयमेव यत्तादृशोक्त्या गंगातीरे शैत्य-पावनत्व-योर्बोधः स्यात्। स च बोधः गङ्गापदस्य लक्षणावृत्त्या भवितुं सर्वथाऽशक्यः, यतो हि वक्तुस्तात्पर्यानुपपत्तेर्वा सत्त्वे एव लक्षणा भवितुमर्हति नान्यथा। अत्र च नास्ति काचित्तथाविधा-नुपपत्तिरतः शैत्यपावनत्वादिविशिष्टे गङ्गातीरे लक्षणायां न किमपि प्रमाणम्। अतस्तादृशशैत्यपावनत्वादिविशिष्टार्थबोधने गङ्गापदस्य व्यञ्जनावृत्तिरावश्यकी। व्यञ्जनावृत्तेरंगीकारमन्तरा शैत्यपावनत्वादिविशिष्टतीररूपार्थस्य प्रतीतिर्भवितुम् सर्वथा अशक्यैवास्तीति भावः।

तन्न समीचीनम्—यतो हि यथा निरूढलक्षणायाः, लक्षित-लक्षणायाः, गौणीलक्षणायाः वा लक्षणायामेवास्ति अन्तर्भावः, लक्षणातो नान्याः सन्तीमाः पदार्थान्तरभूताः। तथैव इयं व्यञ्जनावृत्तिरपि लक्षणायामेवान्तर्भूता भवति। यत्रापि वक्तृपुरुषेण शैत्यपावनत्वादिविशिष्टतीररूपमर्थं बोधयितुं गंगायां घोषः "इत्युच्यते तत्र सर्वथैव वक्तृपुरुषस्य तात्पर्यानुपपत्ति-मवगत्यैव श्रोतारः पुरुषा गंगापदस्य शैत्यपावनत्वादिविशिष्टतीरे लक्षणां कुर्वन्ति। लक्षणया वृत्त्यैव तत्र श्रोतुः शैत्यपावनत्वादि-विशिष्टतीररूपार्थस्य शाब्दात्मिका प्रतीतिर्भवति, न व्यञ्जनया नापि प्रकारान्तरेण। अथवा तत्रस्थले श्रोतुर्लक्षणया तीरमात्रस्यैव शाब्दबोधो जायते, तदनन्तरं—"गङ्गातीरं शीतपावनत्वादिमत् गङ्गापदबोध्यत्वात् गङ्गावत्" इत्यनुमानेनैव शैत्यपावनत्वादीनां बोधो जायतेऽतो व्यञ्जनावृत्तिर्लक्षणायामेवान्तर्भूता भवति, न तस्या वृत्त्यन्तरत्वमस्ति इति भावः। अतः शक्तिर्लक्षणाचेति

द्विविधैव वृत्तिरस्ति न न्यूना नाप्यधिका। इत्थं च शक्तिज्ञानं लक्षणाज्ञानञ्चेति द्विविधमेव वृत्तिज्ञानं शाब्दबोधजनकमिति सिद्धम्।

## वृत्तिज्ञानस्य केन रूपेण कारणत्वम् ?

अत्रेदमाशङ्क्यते शक्तिरपि वृत्तिर्लक्षणापि वृत्तिरिति शक्तिलक्षणयोरुभयोरेकरूपेण कथं कारणत्वं शाब्दबोधं प्रति स्यात्। उभयानुगतैककारणतावच्छेदकरूपमन्तरा परस्परजन्य-शाब्दबोधे व्यभिचारः स्यात्। यतो हि शक्यार्थविषयकशाब्द-बोधस्थले लक्षणाज्ञानाधीनलक्ष्यार्थोपस्थितिर्नास्ति, एवं लक्ष्यार्थ-विषयकशाब्दबोधस्थले च शक्तिज्ञानाधीनशक्यार्थोपस्थितिर्नास्ति, इत्येवंरूपेण परस्परं व्यभिचारो दुर्निवारः। यद्येवमुच्येत यदेता-दृशव्यभिचारस्य वारणाय शक्तिज्ञानलक्षणाज्ञानजन्यशक्यार्थ-विषयकोपस्थितिलक्ष्यार्थविषयकोपस्थितिनिष्ठकारणता - निरूपित-शाब्दबोधनिष्ठकार्यतावच्छेदककोटौ अव्यवहितोत्तरत्वं प्रवेश्य शक्तिज्ञानजन्य - शक्यार्थोपस्थित्यव्यवहितोत्तरजायमानशाब्द-बुद्धित्वावच्छिन्नं प्रति शक्तिज्ञानजन्यशक्यार्थोपस्थितिः कारणम्, एवं लक्षणाज्ञानजन्यलक्ष्यार्थविषयकोपस्थित्यव्यवहितोत्तरजाय-मानशाब्दबुद्धित्वावच्छिन्नं प्रति लक्षणाज्ञानजन्यलक्ष्यार्थविषयको-पस्थितिः कारणम्, इत्येवंरूपेण कार्यकारणभावकल्पने दोषस्तदा नैतद् युक्तं भवेत्, तादृशकल्पने महतो गौरवस्यापरिहार्यत्वादतः कश्चिद् उभयसाधारणोऽनुगतरूपो नूनं वाच्यः।

न च शक्तिरपि वृत्तिर्लक्षणापि वृत्तिरिति द्वयोः शक्तिलक्षणयो-र्वृत्तित्वेनानुगमः संभवति, वृत्तित्वस्योभयत्रानुगतत्वाद् इति

वृत्तिज्ञानजन्योपस्थितित्वेन शक्तिविषयकज्ञानजन्यलक्षणाविषयक-ज्ञानजन्योपस्थित्योः हेतुतया न पूर्वोक्तव्यभिचारप्रसक्तिरिति वाच्यम् । शक्तिलक्षणोभयसाधारणस्यानुगतस्य वृत्तित्वस्य दुर्वचत्वात्, यतोहि वृत्तित्वं न जात्यादिरूपं भवितुमर्हति येन घटत्वपटत्वादिजात्यादिवद् अनुगतं भवेत्, वृत्तेर्हि द्रव्य-गुण-कर्मान्यतमरूपत्वाभावात् । अन्यादृशं चानुगतं वृत्तित्वं दुर्निर्वचम्, अत उभयसाधारणानुगतवृत्तित्वया वक्तुमशक्यतया उभय-विधोपस्थित्योस्तथा कारणत्वकल्पना न सम्भवत्येव ।

यदि शक्तिविषयकज्ञानजन्योपस्थितित्वेनैव शक्ति लक्षणा-ज्ञानाधीनपदार्थोपस्थित्योरेकरूपेण अनुगमः संभवति । घटशक्तं घटपदमित्येतादृशशक्तिज्ञानजन्योपस्थितेरिव घटसम्बन्धशक्तं पटपदमित्यादिलक्षणाज्ञानजन्योपस्थितेरपि घटादिसम्बन्धिपटादि-निरूपितशक्तिविषयकज्ञानजन्यत्वादिति नोक्तव्याभिचार-प्रसक्तिर्भवितुमर्हति ।

ननु घट-पदाद्यर्थनिरूपिता या शक्तिस्तादृशशक्तिविशिष्टपद-विषयकज्ञानजन्यघट-पटाद्यर्थोपस्थितेरेव शक्यार्थनिष्ठविषयता-निरूपकशाब्दबोधकारणता वाच्या, नो चेद् यदा "घटशक्तं घटपदम्" इत्याकारकतापन्नशक्तिविषयकज्ञानजन्यघटोपस्थितौ यस्य कस्यचिद् साहचर्यानिरूपोद्बोधकान्तरस्य वशात् पटादिमानं जातम् तत्र स्थले तथाविधपटादिविषयकोपस्थितेरपि पटादि-विषयकशाब्दबोधापत्तिः स्यात् तादृशपटादिविषयकोपस्थितेरपि शक्तिविषयकज्ञानजन्यत्वात् ।

तथा च "घटसम्बन्धिशक्तं पटपदम्" इत्याकारकलक्षणाज्ञानजन्यलक्ष्यार्थविषयकोपस्थितौ लक्ष्यार्थनिरूपितशक्तिविशिष्टपदविषयकज्ञानजन्यत्वस्याभावाद्, जनकीभूत उक्तज्ञाने भासमानायाः शक्तेर्लक्ष्यार्थनिरूपितत्वेनाभानात्। तदर्थंविशेषितशक्तिविशिष्टपदविषयकज्ञानजन्यपदार्थोपस्थितित्वेन रूपेण उभयविधोपस्थित्योरनुगमासंभवात् परस्परजन्यशाब्दबोधे पूर्वोक्तव्यभिचारो दुर्वार एवेति चेन्न वक्ष्यमाणरीत्या तद्दोषवारणसम्भवात्।

तथाहि शक्तिविषयत्वावच्छिन्नकारणतानिरूपिततद्विषयकत्वावच्छिन्नकार्यताशालित्वेनोपस्थितेः तच्छाब्दबोधे कारणता वाच्या। पूर्वोक्त उद्बोधकान्तरप्रयोज्यपटादिविषयताकोपस्थितेस्तादृशकारणतानिरूपिततद्विषयकत्वावच्छिन्न - कार्यताशालित्वाभावेन पटादिविषयकशाब्दबोधजनकत्वापत्तेरभावात्। तदर्थंविशेषितशक्तिविशिष्टपदविषयकत्वस्य उपस्थितिनिष्ठकारणतावच्छेदककुक्षावप्रवेशेनैव शक्तिलक्षणाज्ञानजन्योपस्थित्योरनुगमसम्भवाच्च।

अयमाशयः—शक्तिविषयकज्ञानत्वावच्छिन्नकारणतानिरूपिततद्विषयकत्वावच्छिन्नकार्यताशाल्युपस्थितेस्तद्विषयकशाब्दबोधं प्रति कारणत्वोपगमे कारणतावच्छेदकं रूपं सर्वथा भवत्यनुगतम् यतो हि तादृशविषयताशालित्वं यथा—"घटशक्तं घटपदम्" इत्यादिशक्तिविषयकज्ञानजन्योपस्थितौ वर्तते तथैव "घटसम्बन्धिशक्तं पटपदम्" इत्यादिलक्षणाज्ञानजन्योपस्थितावप्यस्ति। लक्षणायाः शक्यसम्बन्धरूपत्वेन लक्षणाज्ञानस्यापि शक्तिविषयकत्वावश्यंभावात्।

अनुगतरूपावच्छिन्नाया वृत्तिज्ञानीयकारणतायाः खण्डनम् शक्तिविषयकज्ञानत्वावच्छिन्नकारणता - निरूपिततद्विषयकत्वावच्छिन्नकार्यताशाल्युपस्थितित्वं यदनुगतं कारणतावच्छेदकं रूपमुक्तम् तन्न समीचीनम्। यतो हि तेन रूपेण पदार्थोपस्थितेः शाब्दबोधकारणत्वे "घटकालीना या पटनिरूपिता शक्तिस्तद्वत्पटपदम्" इत्याकारकशक्तिज्ञानजन्यघटाद्युपस्थितितोऽपि घटादिविषयकशाब्दबोधापत्तिः स्यात्, सा च नेष्टा। घटकालीनपटशक्तिरूपपरम्परासम्बन्धविषयतान्तःपातिन्याः शक्तिविषयताया अपि घटकालीनपटशक्तिमत्त्वसम्बन्धप्रयोज्योपस्थितीयघटादिविषयताप्रयोजकत्वात्। अयं भावः—"घटकालीना या पटशक्तिस्तद्वत् पटपदम्" इत्यस्य वृत्तिज्ञानात्मकशक्तिज्ञानस्य घटकालिकपटशक्तिमत्त्वसम्बन्धेन" घटविशिष्टं पटपदम्" इति 'घटकालिकपटशक्तिमत् पटपदम्" इति वा स्वरूपं पर्यवस्यति। तथा चैत्रतादृशवृत्तिज्ञानात् पटवद्घटस्याप्युपस्थितेरावश्यकत्वाद् इत्येतादृशघटोपस्थितेरपि पूर्वोक्ततादृशशक्तिविषयकज्ञानत्वावच्छिन्नकारणतानिरूपितघटविषयकत्वावच्छिन्नकार्यताशालित्वेन घटविषयकशाब्दबोधप्रकारणत्वस्य दुष्परिहरत्वात् "घटकालीनपटशक्तिमत् पटपदम्" इत्येतादृशशक्तिज्ञानजन्यघटोपस्थितितोऽपि घटविषयकशाब्दबोधस्यापत्तिरस्त्येव, एतच्च नेष्टं सर्वथा। "घटकालीनपटशक्तिविशिष्टं पटपदम्" इत्याकारकशक्तिविषयकज्ञानस्य च घटादिनिरूपितत्वेन तत्सम्बन्धिनिरूपितत्वेन वा पदे शक्त्यवगाहित्वं नास्ति, अतस्तस्याः शाब्दबोधप्रयोजकतच्छक्ततल्लाक्षणिकज्ञानजन्यार्थोपस्थित्यनात्मकतया तस्याः शाब्दबोधजनकत्वाभ्युपगमासम्भवात्।

यदि च किञ्चिन्निरूपितत्वविषयतानिरूपितत्वेन शक्तिविषयता यादृशकारणतावच्छेदिका तादृशकारणतानिरूपितप्रकृतार्थविषयतावच्छिन्नकार्यताशालित्वेन पदार्थोपस्थितेर्हेतुत्वोपगमान्नायमतिप्रसङ्गः, यतो हि—"घटकालीनपटनिरूपितशक्तिमत् पटपदम्" इत्येतादृशज्ञाने शक्तौ पटनिरूपितत्वादेरुदासीनतया मानेऽपि "घटकालीनशक्तिसम्बन्धेन घटविशिष्टं पटपदम्" इत्यादिज्ञानतोऽपि घटोवस्थितेरुत्पत्त्या तत्साधारण्यानुरोधेन शक्त्यंशे निरूपितत्वमनिवेश्यैव कार्यकारणभावकल्पनाया उचितत्वात् तज्ज्ञानाधीनोपस्थितौ निरूपितत्वविषयत्वावच्छिन्नशक्तिविषयत्वानिष्ठावच्छेदकताककारणतानिरूपितकार्यत्वाभावादित्युच्यते। तदैतदपि कथनं न युक्तियुक्तं प्रतिभाति, यतो हि यस्मिन् शक्तिज्ञाने घटादेः शक्तत्वसम्बन्धेन प्रकारता तादृशशक्तिज्ञानजन्योपस्थितितोऽपि घटादेः शाब्दबोधोत्पत्तिर्जायते यथा—"शक्तत्वसम्बन्धेन घटविशिष्टं घटपदम्" इत्येतादृशशक्तिज्ञानाद् घटोपस्थितिर्भवति, अनया घटोपस्थित्याऽपि घटविषयकः शाब्दबोध इष्यते परन्तु पूर्वोक्तकार्यकारणभावस्वीकारेऽयं शाब्दबोधो न स्यात्। शक्तत्वसम्बन्धेन घटविशिष्टं घटपदम्" इत्याकारकशक्तिज्ञाने शक्त्यंशे घटरूपस्यार्थस्य निरूपितत्वसम्बन्धेन अभानात्। अतो वृत्तिज्ञानस्यानुगतरूपेण पदार्थोपस्थितौ कारणत्वासम्भवेन अननुगतरूपेणैव शक्तिलक्षणाज्ञानयोः कारणतायाः कल्पनीयतया कार्यतावच्छेदकगर्भे तत्तत्कारणाव्यवहितोत्तरत्वानिवेशे पूर्वोक्तः व्यभिचारस्तदवस्थ एवेत्यतः कार्यतावच्छेदककोटौ तत्तत्कारणाव्यवहितोत्तरत्वनिवेशः सर्वथाऽऽवश्यकः। एवं द्रव्यपदं द्रव्यसामान्यस्य वाचकतया घटत्वोप-

लक्षितस्य घटस्यैव वाचकं न तु घटत्वविशिष्टस्य तस्य, तत्पदस्य द्रव्यत्वविशिष्टस्यैव वाचकत्वात् द्रव्यपदशक्तिज्ञाने च तादृशज्ञान-विषयतावच्छेदकत्वस्य द्रव्यत्व एव स्वीकारात्, घटत्वे तु द्रव्यपद-शक्तिज्ञानीयविषयतासामानाधिकरण्यस्यैव स्वीकारात्। अतएव शक्त्या द्रव्यपदात् घटत्वप्रकारकशाब्दबोधो भ्रान्तपुरुषस्य न स्वीक्रियते। अस्या वस्तुस्थितेरनुरोधेन शक्त्या तत्पदाधीनतद्धर्म-प्रकारकशाब्दबोधं प्रति तद्धर्मविशिष्टनिरूपितत्वेन शक्त्यवगाहिन एव ज्ञानस्य कारणत्वमभ्युपेयम्। एवमेव लक्षणाज्ञानस्य लक्ष्यतीरादिसम्बन्धिप्रवाहादिनिरूपितत्वेन शक्त्यवगाहिज्ञानमेव लक्ष्यतीरादिविषयकशाब्दबोधं प्रति जनकं वाच्यम्।

एवं च शक्तिज्ञान-लक्षणाज्ञानात्मकयोः द्विविधवृत्तिज्ञानयोः विस्पष्टं भेदात्, तयोरुभयज्ञानयोरननुगमः सुस्पष्ट एव। अतः लक्षणाज्ञानजन्यलक्ष्यार्थविषयकशाब्दबोधे शक्तिज्ञानस्य, एवं शक्तिज्ञानजन्यशक्यार्थविषयकशाब्दबोधे च लक्षणाज्ञानस्य व्यभिचारेण, तन्निराकरणायापि पूर्वोक्तरीत्या कार्यतावच्छेदक-कोटौ तत्तत्कारणाव्यवहितोत्तरत्वनिवेशः सर्वथा आवश्यक एव।

## शक्तिज्ञानमपि नानुगतं शाब्दबोधकारणम्

न केवलमिदानीं शक्तिज्ञानलक्षणाज्ञानयोरेवाननुगमः, अपि तु शक्तिज्ञानस्यापि पदपदार्थयोः विशेष्यताभेदेन भेदाद् अननुगमः सुस्पष्टमेव प्रत्येतव्यः। यथोक्तं शक्तिवादे गदाधरेण—

"एवं शक्तिज्ञानमुभयविधं विनिगमकाभावाच्छाब्दबोध-प्रयोजकम्—पदेऽर्थवाचकत्वावगाहि, अर्थं पदवाच्यत्वावगाहि च। तयोरपि नानुगमसम्भवः।"

अयमभिप्रायः—शक्तिज्ञानं (शक्तिवादसामान्यकाण्डम्) द्विविधं वर्तते, विनिगमनाविरहाद् उभयविधमेव तत् शाब्दबोध-प्रयोजकम् अङ्गीकार्यम्। द्वैविध्यञ्च पदेऽर्थवाचकत्वावगाहित्वादर्थे पदवाच्यत्वावगाहित्वाच्च बोध्यम्। पदेऽर्थवाचकत्वावगाहिज्ञानं "घटपदं घटत्वविशिष्टवाचकम्" इत्येतादृशार्थवाचकत्वप्रकारकपद-विशेष्यकम्। अर्थपदवाच्यत्वावगाहिज्ञानञ्च "घटो घटपदवाच्यः" इत्येवभूतं पदवाच्यत्वप्रकारकार्थविशेष्यकम्। द्विविधयोरप्यनयो-र्वृत्तिज्ञानयोर्वाच्यत्ववाचकत्वावगाहिनोर्नानुगमसम्भवः। यतो हि वाच्यत्वं शक्तिप्रतियोगित्वरूपम्, तच्च शक्तिनिरूपकत्वम्, वाच्यपदार्थस्यैव पदनिष्ठशक्तिनिरूपकत्वात्। वाचकत्वञ्च शक्त्याश्रयत्वरूपम्, शक्तेः पदनिष्ठत्वात्। तयोश्च शक्तिनिरूपकत्व-शक्त्याश्रयत्वरूपयोर्वाच्यत्ववाचकत्वयोः परस्परं विलक्षणसम्बन्ध-रूपत्वेनानुगतानतिप्रसक्तरूपाभावान्नानुगमः सम्भवतीति ध्येयम्। यदि च शक्तिप्रतियोगित्वशक्तयाश्रयत्वरूपयोः वाच्यत्व-वाचकत्वयोः सम्बन्धत्वेनानुगमः कर्तुं शक्यत इत्युच्यते तदा उक्तसम्बन्धयोः सम्बन्धत्वेन अनुगमे तदीयकालिकादिसम्बन्ध-स्यापि सम्बन्धत्वेन तादृशनानाविधसम्बन्धज्ञानादपि शाब्दबोधः स्यात्, तच्च कदापि नेष्टम्। यतोहि यथा "घटकालिकशक्तिविशिष्टं पटपदम्" इत्येतादृशशक्तिज्ञानात् पटपदात् घटविषयकशाब्दबोधो नेष्यते तथैव घटीयकालिकादिसम्बन्धज्ञानादपि नेष्यते। सम्बन्ध-त्वेन तयोरनुगमे अर्थधर्मिकपदवाचकतायाः पदधर्मिकार्थवाच्य-तायाश्च ज्ञानादपि शाब्दबोधापत्तिर्दुर्निवारा। एवञ्च द्विविध-शक्तिज्ञानजन्योपस्थित्योरपि परस्परजन्यशाब्दबोधे व्यभिचारः स्यात्। अतस्तदीयकार्यतावच्छेदककोटावपि तत्तत्कारणा-

व्यवहितोत्तरत्वनिवेश आवश्यकः। गुरुतराव्यवहितोत्तरत्वस्य कार्यतावच्छेदककुक्षौ निवेशप्रयुक्तस्य गौरवस्य च फलमुखगौरवतया दोषता न स्वीक्रियते।

"फलमुखगौरवस्यादोषत्वात्" इति सर्वैरभ्युपगमात्॥—

( न्या० सि० मु० )

शक्तिज्ञानवल्लक्षणाज्ञानस्यापि पद-पदार्थयोर्विशेष्यताभेदेन भेदादननुगम एव स्यात्। यतो हि यथा शक्तिज्ञानमुभयविधं शाब्दबोधप्रयोजकमुपेयते तथैव लक्षणाज्ञानमपि पदेऽर्थसम्बन्धि-वाचकताऽवगाहितया, अर्थे पदवाच्यसम्बन्धितावगाहितया च द्विविधं शब्दबोधप्रयोजकम्, अर्थात् "गङ्गापदं तीरसम्बन्धि-प्रवाहवाचकम्" इत्याकारकमर्थसम्बन्धिवाचकत्वप्रकारकपद-विशेष्यकम् लक्षणाज्ञानं यथा शाब्दबुद्धित्वावच्छिन्नजन्यता-निरूपितजनकतावद् भवति तथैव "तीरं गङ्गापदवाच्यप्रवाहसंबंधि" इत्येवं पदवाच्यसंबंधिताप्रकारकलक्ष्यार्थविशेष्यकं लक्षणाज्ञानमपि शाब्दबुद्धित्वावच्छिन्नकार्यतानिरूपितकारणतावज्जायते। इत्थञ्च उभयविधमेव लक्षणाज्ञानमपि शाब्दबोधप्रयोजकं भवति। परन्तु उभयविधलक्षणाज्ञानयोरपि शक्तिज्ञानवत् नहि किमपि अनुगतं रूपं दृष्टिगोचरतां याति। एवं तादृशलक्षणाज्ञानजन्यो-पस्थित्योरपि मिथो विलक्षणरूपतया अनुगमासम्भवात्। अत्रापि परस्परजन्यशाब्दबोधे प्राप्तव्यभिचारवारणाय कार्यतावच्छेद-ककोटौ तत्तत्कारणाव्यवहितोत्तरत्वनिवेशः सर्वथाऽऽवश्यक एवेति भावः।

———

# आसत्ति-विवेचनम्

एतावता प्रबन्धेन शाब्दबोधं प्रति वृत्तिज्ञानसहकृतपदज्ञान-जन्यपदार्थोपस्थितिद्वारा पदज्ञानस्य कारणत्वं सर्वथा निराबाधमेवेति सिद्धम्। तथा च सति "गिरिर्भुक्तमग्निमान् देवदत्तेन" इत्यत्र शाब्दबोधानुत्पादेन, एवं "वह्निना सिञ्चति" इत्यत्रापि तथैव शाब्दबोधानुत्पत्त्या "घटः कर्मत्वं आनयनं कृतिः" इत्यादौ च शाब्दबोधो न इत्यत्र किं कारणम् इति जिज्ञासायां जायमानायां श्री विश्वनाथपञ्चाननेन स्पष्टमुद्घोषितं यद्—

आसत्तियोग्यताऽऽकाङ्क्षा तात्पर्यज्ञानमिष्यते।
कारणं सन्निधानं तु पदस्यासत्तिरुच्यते॥

—भाषापरिच्छेदः

आसत्तिश्च योग्यता च आकाङ्क्षा च तात्पर्यं चेति द्वन्द्वः समासस्तेषां ज्ञानमिति तत्पुरुषः। द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते इत्येवंरूपेण आसत्तिज्ञानम्, योग्यताज्ञानम्, आकाङ्क्षाज्ञानम्, तात्पर्यज्ञानञ्चेति कारणमित्येव फलितम्।

एवञ्च आसत्तिज्ञान – योग्यताज्ञान – आकांक्षाज्ञान-तात्पर्यज्ञानानां शाब्दबोधे सहकारिकारणत्वान्नोक्ताऽन्वयव्यभिचार इत्यर्थः पदस्य सन्निधानमित्यासत्तिलक्षणेन पदाव्यवहितधानरूपाऽसत्तिरित्यर्थो लभ्यते। एवञ्च 'गिरिर्भुक्तमग्निमान्देवदत्तेन" इत्यासत्तिविरहवति वाक्ये इति व्याप्तिः, यतो हि अत्रापि "घटं नय" "गामानय" इत्यादिवत् गिरिपदभुक्तपदयोरव्यवधानेनोपस्थितिसत्त्वादतः एतादृशातिव्याप्तिवारणाय श्रीविश्वनाथपञ्चाननेन स्वयमेवोक्तम्—

"यत् पदार्थेन यत् पदार्थस्याऽन्वयोऽपेक्षित—स्तयोरव्यवधानेनोपस्थितिः शाब्दबोधे कारणम्"—न्या० सि० मु० ॥

तथा च तादृशपदाव्यवधानमेवाऽऽसत्तिः तदुपस्थितिश्च शाब्दबोधे कारणम्। अतएव यत्र तत्र गद्य-पद्यादौ व्यवधानेन पदानामुपस्थितिर्दृश्यते तत्रापि तादृशपदानां योजनयैवाव्यवहितोपास्थतिः शाब्दबोधे कारणत्वेन सर्वसम्मता वर्तते तथा च पूर्वोक्तस्थले "गिरिर्भुक्तमग्निमान् देवदत्तेन" इत्यादौ गिरिपदार्थाग्निमत् पदार्थयोरेव तात्पर्यविषयता इति तत्र तयोरव्यवधानाभावान्नातिव्याप्तिः। "नीलो घटो द्रव्यं पटः" इत्यादौ तु नीलपदार्थ-पटपदार्थयो रन्वयबोधतात्पर्येणोच्चरित "नीलो घटो द्रव्यं पटः" इत्यादिवाक्ये चासत्तिभ्रमादेव शाब्दबोधो जायते नान्यथेति भावः। नीलपद-पटपदयोस्तात्पर्यघटिताऽऽसत्तेरभावादित्यर्थः। तत्रापि तद्धीहेतुत्वमावश्यकमिति भावः। सा च धीर्यदि भ्रमात्मिका स्यात्तदा तत्र स्थले शाब्दबोधोऽपि भ्रमात्मक एव स्यादित्यत्र नास्ति कश्चन नियमः, अत आसक्तिभ्रमस्य न

शाब्दबोधभ्रमकारणत्वमस्ति किन्तु योग्यताभ्रमस्यैवेति विभावनीयमित्यर्थः। तदुक्तं विश्वनाथपञ्चाननेनापि—

"आसत्तिभ्रमेण शाब्दभ्रमाभावेऽपि न क्षतिः"। न्या० सि० मु० ॥

ननु योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिगुणनाश्यत्वादिति नियमेन "छत्री कुण्डली वासस्वी देवदत्तः" इत्यादिवाक्यं यत्रोक्तं तत्र स्थले उत्तरपदस्मरणेन पूर्वंपूर्वंपदस्मरणस्य विनाशादव्यवधानेन तेषां तेषां पदानां स्मरणं कथं संभवति। तथा च अनेकविशेषण-वाचकपदघटितवाक्यार्थविषयकबोधानुपपत्तिश्च स्यात् विशिष्टाऽ-नुभवस्य विशेषणज्ञानसाध्यत्वनियमात्। अतएव अनेकवर्णक-पदस्मरणासंभवोऽपि बोध्य इति चेन्न। प्रत्येकपदानुभवजन्य-संस्कारैः चरमं तावत् पदविषयकस्मरणस्यापि अव्यवहित-रूपेणोत्पत्तिदर्शनादिति बोध्यम्। यथा संयोगसम्बन्धेनापि "अयं घटः" इत्याकारकं घटप्रत्यक्षं जायते, संयुक्तसमवायेनापि सम्बन्धेन घटप्रत्यक्षं भवति, क्वचिद् घटप्रत्यक्षं संयुक्तसमवेतसमवाय-सन्निकर्षेणापि तत् प्रत्यक्षं जायते। अतो नानासन्निकर्षैरेक-प्रत्यक्षस्येव नानासंस्कारैरपि एकस्मरणसंभवे का नो हानिः को वा तत्र दोषः इति वक्तव्यम्। तावत् पदविषयकसंस्कारसहित-चरमवर्णस्यैव तत्रोदबोधकत्वात्, कथमन्यथा नानावर्णैरेकपद-स्मरणमिति। वर्णानामाशुविनाशितया क्रमोत्पन्नवर्णाना मेकप्रत्यक्षाप्रत्यक्षासंभवेन एकसंस्काराभावादिति तु निष्कर्षः।

वस्तुतः अव्यवहितपदार्थोपस्थितिरासक्तिः स्वरूपसतीकारणम्, श्लोकादौ योजनापि तदर्थमेव भवतीति भावः।

ननु आशुतरविनाशिनीनां क्रमिकाणां पदजन्यपदार्थोपस्थितीनामपि एकत्रासंभवेन सर्वत्र शाब्दबोधे पदजन्यपदार्थोपस्थितिः समूहालम्बनात्मिकैव कारणम्। एवञ्च सर्वत्रैव एककालावच्छेदेन समस्तपदार्थानां विशेष्ये विशेषणम्, तत्रापि विशेषणमिति रीत्यैव अर्थात् विश्रृङ्खलभावेनैव शाब्दबोधो जायते न तु विशिष्टस्य वैशिष्ट्यमित्येवं रूपेण तत्र स्थले शाब्दबोधोऽभिमतो वर्तते, यतस्तज्जनकविशेषणतावच्छेदकप्रकारक निश्चयस्यैव पूर्वमभावादिति अयमेवविषयो मणिकारसम्मतो वर्तते। मणिकारस्याऽयमेवाऽऽशयो वर्तते यत् तावत्पदार्थानां क्रियाकर्मभावेन च अन्वय बोधरूपः शाब्दबोधो भवतीति केचन मणिकारमतानुयायिन इत्थं समुद्गिरन्ति। तथाहि—

वृद्धा युवानः शिशवः कपोताः
खले यथाऽमी युगपत् पतन्ति।
तथैव सर्वे युगपत् पदार्थाः
परस्परेणान्वयिनो भवन्ति॥

—न्या० सि० मु०॥

अपरे दार्शनिकाः पुनरित्थं वदन्ति—

यद्यदाकांक्षितं योग्यं सन्निधानं प्रपद्यते।
तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते॥

—द्रष्टव्यं तत्रैव

एतेन खण्डवाक्यार्थबोधः सूचितः। तथा चाऽवान्तरवाक्यार्थबोधात्मकखण्डवाक्यार्थविषयकबोधजन्यस्मृत्युत्तरं तथैव पदार्थस्मृत्या महावाक्यार्थबोधोऽपि जायते इत्यर्थः।

वस्तुतस्तु पूर्वपदार्थस्य पदान्तरस्य च स्मृतिरेका, ततः खण्डवाक्यार्थबोधः, तदनन्तरं पदार्थान्तरस्मृतिः, ततो महा-वाक्यार्थबोधः। अतएव वृत्तिधीप्रयोज्यत्वस्य एकस्य दुर्वचत्वेऽपि न क्षतिः।

खण्डवाक्यार्थबोधस्यैव विशेष्यविशेषणतावच्छेदकप्रकारक-बोधरूपतया तद्धेतुतयैवविशिष्टे वैशिष्ट्यम् इति, विशिष्टस्य वैशिष्ट्यमिति च रीत्या शब्दबोधोपपत्तिः। एवञ्च अवान्तर-शाब्दबोधात्मकपदज्ञानजन्यपदार्थज्ञानेन—अवान्तरशाब्दबोधात्मक-खण्डवाक्यार्थविषयकबोधात्मकानुभवजन्य तत् समानाकारक-स्मरणेन वा महावाक्यार्थबोधो जायते इति तु परमार्थः। इत्थं च सर्वत्रावान्तरशाब्दज्ञानान्तरमेव महावाक्यार्थविषयको बोधो जायते। तादृशशाब्दबोधस्य च विशिष्टवैशिष्ट्यावगाहिबोध-रूपत्वमेव तत् सामग्रीसत्त्वात्। अवान्तरशाब्दबोधस्यापि विशिष्टवैशिष्ट्यावगाहिबोधरूपता एव स्वीक्रियते। घटत्वादि-प्रकारकस्मरणात्मक — विशेषणतावच्छेदकप्रकारकनिर्णयस्य विद्यमानत्वेन न कोपि दोषः समापततीति भावः।

पटपदस्य प्रकारोत्तर—अकारोत्तर—टकोरात्तर - अत्वरूपा-नुपूर्वीरूपतया क्रमिकाशुविनाशिनानावर्णात्मकतया क्षणिकत्वेन शक्तिज्ञानस्य कथमप्यसंभवेनार्थोपस्थापकत्वासंभवात् "स्फोट" नामकः कश्चित् पदार्थः स्वीक्रियते। स्फोटस्य च स्फुटति—अभिव्यक्तीभवति, अर्थो यस्मादिति व्युत्पत्त्या अर्थं प्रकाशकत्वं वर्तते। प्रकाशश्च ज्ञानरूपमेव विद्यते इत्येवास्ति शाब्दबोधविषये वैयाकरणानां मतम्।

तन्न समीचीनं प्रतिभाति—

पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहितचरम - वर्णानुभवरूपाद् बोधकोद्बोधितचरमवर्णविषयकसंस्कारेणैव क्रमिकतत्तद्वर्ण-विषयकपदस्मरणस्योपपादितत्वेन तावद् वैयाकरणैः स्वीकृतो वर्णाभिव्यङ्ग्यः पदस्फोटोऽपि निरस्तः इति भावः। एवमेव स्फोटान्तराणामपि विषये बोद्धव्यम् । तथाहि—वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटः, अखण्डपदस्फोटः, वर्णजातिस्फोटः, पदजातिस्फोटः, वाक्यजातिस्फोटश्च इत्यष्टविधाः स्फोटाः सन्तीति विभावनीयम्। तत्र "सुप्तिङन्तं पदम्" इति पदलक्षणलक्ष्य-घटकीभूतावयवविशेषस्फोटः प्रकृतिस्फोटः, प्रत्ययस्फोटः, इत्यादिनाम्ना वर्णस्फोटो-भिधीयते इति केचिद् वदन्ति। अन्ये तु पूर्वपूर्ववर्णविषयकसंस्कारसहितचरमवर्णज्ञानस्यैव तत्र शाब्दबोधहेतुतया तादृशचरमवर्णस्फोट एव वर्णस्फोटशब्देन व्यवह्रियते इत्यपि वदन्ति।

स्फोटत्वं च अर्थनिष्ठशाब्दबोधविषयतावच्छेदकशक्तिमत्त्वम्। तच्च सुप्तिङन्तात्मकपदेऽप्यस्तीति पदस्फोटः पृथगेव स्वीक्रियते। समभिव्याहृतवर्णानामर्थबोधजनकत्वान्न केवलं चरमवर्णस्फोट एव स्वीकृतो वर्ततेऽपि तु यावद्वर्णस्फोटोऽङ्गीक्रियते इत्यर्थः।

पदस्फोटश्च तादृशवर्णकूटरूपः, तादृशकूटश्च प्रकृतिप्रत्यय-रूपेण पृथगेव स्वीक्रियते इत्यतः पदस्फोटः प्रकृतिस्फोटः— प्रत्ययस्फोटश्चेति नाम्ना व्यवह्रियते। "घटेन" इत्यादौ "घटे" इति प्रकृतिः, "न" इति प्रत्ययः इत्यादिकं सर्वं विभज्य दर्शयितुमशक्यत्वात्। युष्मदस्मदोः षष्ठ्यादिस्थले वस्-नस् ते-मे-

वाम्-नौ इत्यादौ प्रकृतिप्रत्ययविभागासंभवाच्च। पदेष्विव वाक्येऽपि शाब्दबोधजनकत्वसत्त्वात् वाक्यस्फोटः पदस्फोटादतिरिक्त एव सिद्धयति नत्वनतिरिक्त इति भावः।

हरे व, विष्णो व, इत्यादौ पदविभागासंभवेऽपि शाब्दबोधो दृश्यते इत्यत्र नास्ति लेशतोऽपि संशयावसरः।

केषाञ्चिद् विदुषामियमपि उक्तिर्वर्तते पदे वाक्ये च वर्णाः एव न सन्ति, तत्राऽनन्तवर्णकल्पनायां स्पष्टं गौरवमस्ति इति। तत्र वर्णाभिव्यञ्जकवायुसंयोगनिष्ठवैजात्येनैव ककारः गकार इत्यादि प्रतीतिर्वैलक्षण्यसंभवात्। न चैवं तादृशवायुसंयोगस्यैव वाचकत्वमस्त्विति वाच्यम्। तस्याप्रत्यक्षत्वात्। इत्थं चाखण्डौ पदस्फोटवाक्यस्फोटौ इति अन्यमतसंगृहीतस्फोटाभ्यां सह पञ्चव्यक्तिस्फोटाः संजायन्ते।

तत्र च जातौ एव शक्तिर्न तु व्यक्तौ लाघवादिति मीमांसकमतसिद्धा शक्तिर्यथा जातौ स्वीक्रियते, तथैव शक्तताऽपि वर्णपदादिजातावेवेति। आनुपूर्वीविशेषाच्च स्फोटाभिव्यक्तिरिति वर्णजातिस्फोटादिभेदे न त्रयः स्फोटाः स्वीक्रियन्ते मतान्तरानुसारिभिः। स्फुटयते—प्रकाश्यतेऽर्थोऽनेनेति वर्णादिषु तदुपलब्धेः। तत्र स्फोटशब्दस्य गौरवापादकपृथक् प्रयोगमात्रमिति नातोऽतिरक्तं तत्र किमपि तत्त्वमिति भावः।

## स्फोटस्वरूपविचारः

इदानीं कीदृशस्वरूपतामापन्नोऽस्ति अयं स्फोट इति विचार्यते। शब्दब्रह्मएव स्फोट इति। तच्च विचिकीर्षावशाद घनीभूताया-

श्चतेर्विन्दुभावमापन्नायाः स्वरूपेणाभिद्यमानावस्था। यथोक्तं भगवच्छङ्करपादैः—

विन्दोस्तस्माद् विद्यमानात्—
अव्यक्तात्मा खोऽभवत्।
स खः श्रुतिसंपन्नः
शब्दब्रह्मेति कथ्यते ॥ प्रपञ्चसारे

इयमेव परा "वाक्" इत्युच्यते। सोऽयं रवः कारणबिन्दु-तादात्म्यापन्नो व्यञ्जकयत्नसंस्कृतपवनवशात् प्राणिनां मूलाधारे एवाऽभिव्यज्यते। तदेव च शब्दब्रह्म हृदयपर्यन्तमागतं मध्यमेत्युच्यते। वदनपर्यन्तमागतं च तदेव शब्दब्रह्म परश्रोत्रप्रत्यक्ष-विषयतायोग्यतासम्पन्नं वैखरीत्युच्यते। तदुक्तं भगवच्छंकराचार्यचरणैः—

मूलाधारात् प्रथममुदितो यश्च भावः पराख्यः—
पश्चात् पश्यन्त्यथ हृदयगो बुद्धियुङ्मध्यमाख्यः।
व्यक्तेवैंखर्यथ रुरुदिषोरस्य जन्तोः सुषुम्णा—
बद्धस्तस्माद् भवति पवनप्रेरिता वर्णसंज्ञा ॥

श्रुतौ अपि चोक्तम्—

चत्वारि वाक् परिमितापदानि—
तानि विदुर्ब्रह्मणा ये मनीषिणः।
ग्रहा त्रीणि निहिता नेङ्गयन्ति—
तुरीयं वाचो मनुष्या वदन्ति ॥

नव्यवैयाकरणैश्च वर्णोत्पत्तिक्रममुपपाद्य वर्णात्मकमेव आचार्यादिभिः प्रतिपादितं शब्दब्रह्मैव स्फोट इत्यभिगीयते। प्राचीनैस्तु तत् "शब्दब्रह्म पृथगेवास्ति" तत्त्वमिति निरूप्यते कथ्यते च, यतो हि वर्णानामुत्पत्ति-विनाशशालित्वात् भट्टोजि-दीक्षितैस्तु वर्णातिरिक्त एव स्फोट इति कथ्यते—पदमिति प्रतीतेः। अयञ्च स्फोट अर्थप्रत्यायकत्वेन वैयाकरणैः स्वीक्रियते। वर्णात्मकशब्दानां तदसंभवात्। न हि एकैकेषां वर्णानामर्थ-विषयकबोधजनकत्वं वर्तते। घकारादिशब्दानां घटाद्यर्थविषयक-बोधाजनकत्वात्।

## शाब्दबोधे पदार्थज्ञानकारणत्ववादिनां मतम्

केषांचिद् विदुषामिदपि कथनं वर्तते यत् शाब्दबोधे न पदज्ञानं कारणम्, नापि प्राचीननैयायिकाभिमतं ज्ञायमानं पदं वा कारणम्। अपि तु पदार्थ एव कारणम्। अत एव रचना-योग्यस्य काव्यस्य अर्थंप्रबुध्यैव पदम्, पदानि, श्लोकं वा कविः कल्पनाभावरूपेण रचयति। कविर्हि काव्यरचनार्थंतद्गुणानर्थान् चिन्तयति। ततश्चिन्तावशोपस्थितपदार्थानांन्वयं बुद्ध्या काव्यं रचयति। एतच्च चिन्तावशोपस्थितपदार्थानामन्वयबोधात् कविः काव्यादिः" इति चिन्तामणौ स्पष्टीकृतम्।

तच्च पदार्थज्ञानं न प्रत्यक्षरूपं असन्निकृष्टविषकत्वात्। नाप्यनुमितिरूपम्—व्याप्तिज्ञानस्य पूर्वमभावात्, नापि शाब्दबोध-रूपं शब्दाभावात्, किन्तु अन्वयबोधरूप एव। तादृशबोधे च चिन्तावशोपस्थिता एव पदार्थाः कारणानि भवन्ति न तु पदानि

पदज्ञानानि वेति ध्येयम् । क्वचित् पदार्थोपस्थित्यर्थंपदस्यापेक्षणेऽपि पदार्थोपस्थित्या पदमन्यथासिद्धमेवेति भावः । कथमन्यथा—श्वेतरूपदर्शनात् हेषाशब्दस्य वा श्रवणात्—खुरविक्षेपशब्द श्रवणाच्छब्दं विनापि श्वेतोऽश्वो धावतीति धीः जायते । तदुक्तमपि—

पश्यतः श्वेतमारूपं हेषाशब्दञ्च शृण्वतः ।
खुरविक्षेपशब्दञ्च श्वेतोऽश्वो धावतीति धीः ॥

एवञ्चाऽवश्यकस्वीकार्यंपदार्थोपस्थितौ पदमन्यथासिद्धमेव सिद्धम् । अत एव द्वारमित्युक्तं न "पिधेहि" इति शब्दस्याऽध्याहारः क्रियते, किन्तु पिधानादि रूपार्थाध्याहार एव स्वीक्रियते ।

## तन्मतखण्डनञ्च

तन्न समीचीनम् । यतो हि अत्र विषये श्रीविश्वनाथपञ्चाननेन स्पष्टमुद्घोषितं यद् यत्र द्वारमित्युक्तं तत्र—"पिधेहि" इति शब्दस्यैव ज्ञानाच्छाब्दबोधो जायते न तु पिधानादिरूपार्थज्ञानादिति । पदजन्यायास्तत्तत्पदार्थोपस्थितेरेव तत्तच्छाब्दबोधकारणत्वात् । एवं पदार्थज्ञानस्य शाब्दबोधकारणत्वे प्रत्यक्षादिना उपस्थितस्यापि अर्थस्य शाब्दबोधापत्तेः । एवं पदार्थप्रत्यक्षादेः पदज्ञानाजन्यतया तस्य व्यापारत्वमपि नैव भवितुमर्हतीति भावः । किञ्च क्रियाकारकपदानां तेन तेन पदेन सह साकांक्षत्वात् यथा—"घटमानय" इत्यत्र आनयनपदेन द्वितीयान्तः घटपदस्य, द्वितीयान्तघटपदेन आनयनपदस्य साकांक्षत्वात् क्रियापदं विना कथं तर्हि तत्र शाब्दबोधः स्यात् ?

तथा च पूर्वोक्तस्थले शाब्दबोधासंभवात् पदस्यैवाऽध्याहारः सर्वथा समुचितः प्रतिभातीति भावः। एवं "पुष्पेभ्यः" इत्यादौ "स्पृहयति" इत्यादिपदाध्याहारं विना चतुर्थ्यनुपपत्तेः, इत्येतादृशानुपपत्तिरूपो दोषोऽपि अर्थाध्याहारपक्षे एव स्यात्। अत एतस्मात् कारणात् पदाध्याहारः (शब्दाध्याहारः) एव आवश्यकः।

एवं "स्पृहेरीप्सितः" इति सूत्रेण स्पृहार्थकधातुयोगे ईप्सितः संप्रदानसंज्ञः स्यात् इत्यर्थकेन "पुष्पेभ्यः" इत्यादौ चतुर्थी वाच्या। अर्थाध्याहारपक्षे तिङन्तस्पृहार्थकधातुयोगाभावाच्चतुर्थी न स्यात्। एवं शत्रवे—वज्रकाय इत्यादावपि "क्रुध्-द्रुहेर्ष्या सूयार्थानां यं प्रति कोपः" इति सूत्रेण क्रोधाद्यर्थकधातूनां च योगे यं प्रति कोपः स संप्रदानसंज्ञः स्यादित्यर्थकेन चतुर्थी वाच्या। अर्थाध्याहारपक्षे तु क्रुध्यति इत्यादितिङन्तयोगाभावेन चतुर्थी न स्यादिति बोध्यम्। तस्मात् चतुर्थ्यनुपपत्तिरूपदोषभयात् पदाध्याहार एव सर्वथा आवश्यको न तु अर्थाध्याहार इति भावः।

इदन्तु बोध्यम्—पदार्थकारणत्ववादिनये पदार्थस्यैव कारणत्वात् पदार्थनिष्ठैवाकांक्षा शाब्दबोधे कारणम्, न तु पदनिष्ठापीति पदस्याऽकारणत्वात्। पदोऽपस्थितपदार्थनिष्ठा—चाकांक्षा पदोपस्थितेनैव पदार्थान्तरेण सह भवति न तु पदानुपस्थितेन, तथा न द्वारमित्यत्र पिधेहीति पदाध्याहाराभावान्न शाब्दबोधः। इति न तेन तदनुरोधात् पदस्य करणत्वं स्यात्, किन्तु पदोपस्थापितद्वारपदार्थस्य पदानुपस्थापितपिधानपदार्थेन सममाकांक्षाविरहेण शाब्दबोधाभावो बोद्धव्यः। तथा चोक्तम्-

"शाब्दी ह्याकांक्षा शब्देनैव प्रपूर्यते" इति। तथा च यत्रैकपदार्थस्य शब्दादुपस्थितिरपरपदार्थस्य च शब्दमन्तरैवोपस्थितिः, तत्र न तयोराकांक्षा। यत्र च सकलपदार्थानां पदं विनैवोपस्थितिस्तत्र तु अस्त्येवाकांक्षा इति न कविकाव्यादिस्थलीयशाब्दबोधानुपपत्तिरिति तु तत्त्वम्।

## योग्यतानिरूपणम्

शाब्दबोधीयप्रकारतावच्छेदकसम्बन्धेनाऽपरपदार्थवत्त्वं योग्यता। तदुक्तम्—"पदार्थे तत्र तद्वत्ता योग्यता परिकीर्तिता"।

—भा॰ परि॰

तादृशप्रकारतावच्छेदकसम्बन्धकथनेन सेकादौ वह्निजन्यत्वादेः कालिकसम्बन्धेन सत्त्वेऽपि वह्निना सिञ्चतीत्यत्र न योग्यताया आपत्तिः। केषाञ्चिद् विदुषा मेकपदार्थे अपरपदार्थसम्बन्धो योग्यता इत्यपि मतं वर्तते एतद् योग्यताज्ञानाभावादपि वह्निना सिञ्चतीत्यत्र न शाब्दबोधो जायते। ननु एतस्या योग्यताया ज्ञानं शाब्दबोधात् प्राक् सर्वत्र न संभवति, वाक्यार्थस्या पूर्वत्वात् इति चेन्न। तेषां तेषां पदार्थानां स्मरणे जायमाने सति स्वर्गकामो यजेत इत्यादौ क्वचित् संशयरूपस्य, अस्य करतले आमलकमस्ति इत्यादौ च क्वचिन्निश्चयरूपस्य योग्यताज्ञानस्यावश्यकल्पेण संभवात् न कश्चिद् दोषः। संशयनिश्चयसाधारणयोग्यताज्ञानं शाब्दबोधे कारणमस्तीति प्राचीनैः स्वीकृतमिति भावः।

योग्यताज्ञानस्याऽभावकाले शाब्दबोधस्याऽभावोऽपि अनुभवसिद्ध एवेति तत्र तद्धी हेतुतया योग्यताज्ञानेनान्यथासिद्धया बाधाभावोऽपि न शाब्दबोधहेतुरित्याशयः।

नव्यनैयायिकानामयमाशयो यद् योग्यताज्ञानस्याभावकालेऽपि शाब्दबोधोऽनुभवसिद्ध एवेति स्वीकृतमिति न प्राचीननैयायिकैः स्वीकृतं योग्यताज्ञानं शाब्दबोधे कारणम्। न वा तादृशयोग्यता ज्ञानेन पूर्वोक्तान्यथासिद्धिरिति योग्यताज्ञानाभावनिश्चये जाते। अथवा योग्यताज्ञानशून्यकाले शाब्दबोधापत्तिः संभवति, अतो बाधाभाव एव योग्यता—सा च स्वरूपसती एव शाब्दबोधे कारणम् इत्याशयं मन्वानैरेव नव्यनैयायिकैः पूर्वोक्तस्य प्राचीन-नैयायिकाभिमतस्य योग्यताज्ञानस्य शाब्दबोधं प्रति कारणत्वमेव नास्ति। वह्निना सिञ्चतीत्यत्र कथं तर्हि शाब्दबोधो न जायते इत्येवं प्रश्ने समुपस्थिते सेचनात्मके कर्मणि वह्निकरणकत्वा-भावरूपा योग्यता निश्चयेन प्रतिबन्धान्न शाब्दबोधः। एतेषां नये वह्निना सिञ्चतीत्यादि अयोग्यतास्थलीयशाब्दबोधे बाधाभाव-रूपाया योग्यताया अभावेन अयोग्यतानिश्चयस्तत्र प्रतिबन्धकः तादृशायोग्यतानिश्चयाभावस्तत्र कारणम्। विश्वनाथपञ्चाननेनापि स्पष्टमुद्घोषितं यत्—

"वह्निना सिञ्चतीत्यादौ सेके वह्निकरणत्वाभावरूपा योग्यता-निश्चयेन प्रतिबन्धान्न शाब्दबोधः" —न्या० सि० मु०।

अर्थात् वह्निना सिञ्चतीत्यत्र "सेकः वह्निकरणकत्वाभाववान्" इत्याकारकस्य अयोग्यतानिश्चयस्य बाधनिश्चयात्मकस्य प्रतिबन्ध-कस्य सत्त्वे शाब्दबोधो न जायतेऽतो योग्यतानिश्चयाभावस्य लौकिकसन्निकर्षाजन्यदोषविशेषजन्यतज्ज्ञानमात्रे प्रतिबन्ध-कत्वात्, ज्ञानमात्रान्तर्गतशाब्दबोधं प्रत्यपि प्रतिबन्धकत्वं तावत् सिद्धम्। तदुक्तम्—

"तदभावनिश्चयस्य लौकिकसन्निकर्षाजन्यदोषविशेषाजन्य-तज्ज्ञानमात्रे प्रतिबन्धकत्वाच्छाब्दबोधं प्रत्यपि प्रतिबन्धकत्वं सिद्धम् ।" —न्या० सि० मु० ॥

तथा च योग्यतानिश्चयाभावस्य तद्धर्मावच्छिन्नविशेष्यता-निरूपितयद्भावप्रकारकनिश्चयत्वेन तद्धर्मावच्छिन्नविशेष्यता-निरूपित तत्प्रकारता शालिज्ञानत्वावच्छिन्नमात्रेप्रतिबन्धकत्वम् ।

ननु पूर्वमतकथितयोग्यताज्ञानस्य कारणत्वे तादृशयोग्यता-ज्ञानशून्यकाले तादृशस्थले शाब्दबोधाऽभावोऽपि किं आनुभाविक एवेति शङ्का स्वयमेव निराकृता नवीननैयायिकैः यत्—

योग्यताज्ञानविलम्बेन शाब्दबोधो न जायते इति नास्ति प्रमाणिकी कथा । तदुक्तम्—

"योग्यताज्ञानविलम्बाच्च शाब्दबोधविलम्बो असिद्धः—तत्रैव द्रष्टव्यम्—अर्थात् योग्यताज्ञानविलम्बेन तत्र शाब्दबोधो न जायते इति च तेषां कथनं सर्वथा प्रामाणिकम् । इति तादृशानुभवे प्रमाणाभावेन न तदनुरोधेन योग्यताज्ञानस्य कारणत्वं सिद्धयतीति भावः ।

## आकांक्षाविचारः

यत् पदनिष्ठवत् पदव्यतिरेकप्रयुक्तो यादृशान्वयबोधाभावस्तत् पदे तत्पदवत्त्वमाकांक्षा कथिता । यदुक्तम्—

"यत्पदेन बिना यस्याननुभावकता भवेत् । अकांक्षा"—भाषापरिच्छेद । यथा—प्रकृतिं बिना प्रत्ययस्य, प्रत्ययेन बिना प्रकृतेः शाब्दबोधाजनकत्वमनुभवसिद्धमित्यनयोराकांक्षावगम्यते ।

अर्थात् प्रकृत्या प्रत्ययस्य, प्रत्ययेन च प्रकृतेराकांक्षा वर्तते इत्येव तावत् सिद्धम्। एवमन्यत्रापि वेदितव्यम्। तथा च स्वाव्यवहितपूर्वत्व-स्वाव्यवहितोत्तरत्वान्यतरसम्बधेन यत्पदनिष्ठ यत्पदव्यतिरेकप्रयुक्तो यादृशान्वयबोधाभावस्तत्पदे तत्पद-वत्त्वमाकांक्षा इति तु निष्कर्षः।

भवति च अव्यवहितपूर्वत्वसम्बन्धेन घटपदनिष्ठस्या-नुस्वारपदस्य व्यतिरेकप्रयुक्ताधेयतासम्बन्धेन घटवत्कर्मत्वमिति भेदान्वयबोधाभाव इति स्वाव्यवहितपूर्वत्वसम्बन्धेन घटपदेऽ-नुस्वारपदवत्त्वमाकांक्षा वर्तते। अयमाशयः—येन पदेन बिना यत्पदस्यान्वयाननुभाववत्त्वं भवेत् तेन पदेन सहैव तस्य पदस्य आकांक्षा जायते। यथा—क्रियापदं विना कारकपदं नान्वयबोधं जनयति इति भवति क्रियापदेन सह कारकपदस्या-कांक्षा। इदं च सर्वमपि विवेचनं ज्ञायमानपदस्य कारणतामते एव साधु संगच्छते। अतएव "शाब्दह्याकांक्षा शब्देनैव प्रपूर्यते" इति न्यायोऽपि संगच्छते। अन्यच्च—

प्रथम्यादभिधातृत्वात् तात्पर्योपगमादपि।
पदानामेव सा शक्तिर्वरमभ्युपगम्यताम्॥—न्या०बु०

इतिप्राचीनोक्तिरपि साधुसंगता भवति।

एतेषामयमाशयः—यत् पदज्ञानात्-पदार्थेभ्यश्च प्रथमो-पस्थितत्वात् पदस्य, पदार्थाभिधायकत्वाच्च पदस्य, वाक्यार्थ-ज्ञानहेतुभूततात्पर्यज्ञानजनकत्वाच्च पदस्य, पदार्थान् विहाय

पदेष्वेव शाब्दबोधजनकतावच्छेदिका शक्तिः स्वीक्रियते। शाब्दबोधं प्रति ज्ञायमानपदस्य कारणतावादिनामपि अयमेवाशयः।

पदज्ञानस्य कारणतावादिमते तु स्वाव्यवहितपूर्वत्व—स्वाव्यवहितोत्तरत्व-अन्यतरसम्बन्धेन यत्पदविशेष्यक यत्पदप्रकारकोपस्थिति-व्यतिरेकप्रयुक्तो यादृशान्वयबुद्ध्यभावस्तादृशपूर्वोक्तान्यतरसम्बन्धेन तत्पदे तत्पदवत्त्वमाकांक्षेत्येव वक्तव्यम्। अन्यथा असंभवदोषापत्तिः स्यादित्यपि विभावनीयम्।

पदज्ञानस्यैव हेतुत्वेन घटवत्कर्मत्वम् इति भेदान्वयबुद्ध्यभावादौ घटपदनिष्ठस्यानुस्वारपदादेर्व्यतिरेकप्रयोजकत्वाभावात् कारणाभावस्यैव कार्याभावप्रयोजकत्वात्। तथा च आधेयत्वसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकाशानिरूपितकर्मत्वत्वा - वच्छिन्नविशेष्यताशालिशाब्दबुद्धित्वावच्छिन्नं प्रति स्वाव्यवहितोत्तरत्वसम्बन्धेन घटपदविशिष्टांभूपदत्वरूपाऽऽकांक्षाज्ञानं कारणमिति तु निष्कृष्टार्थः फलित इति भावः।

समभिव्याहाररूपाकांक्षेति प्राचीनानां मतं निराकुर्वतां नव्यानां नयं स्पष्टयति—वस्तुतस्तु क्रियाकारकपदानां सन्निधानमासत्त्यैव स्पष्टीकृतं भवति, किन्तु घटकर्मताविषयकबोधं प्रति घटपदोत्तरद्वितीयविभक्तिरूपाकांक्षाज्ञानं कारणम् इति "घटः कर्मत्वम्"—"आनयनं कृतिः" इत्यादौ न शाब्दबोधः। एवञ्च तादृशबोधं प्रति "अम्" पदाव्यवहितपूर्ववर्तिघटपदत्वरूपाऽऽकांक्षाज्ञानं कारणमित्यपि बोध्यम्। तथा च कर्मताविशेष्यक घटप्रकारकशाब्दबोधं प्रति "घटम्" इत्याकारणानुपूर्वी यद्

ज्ञानं कारणम्। एवम् आनयनानुकूलकृतिमानित्याकारकशाब्द-बोधं प्रति च "आनय" इत्येतादृशानुपूर्वीकपद ज्ञानस्य कारणत्वं वर्तते इति नास्ति कोऽपि दोषः।

"अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम्" इत्यादिस्थलीय-शाब्दबोधाभावोपपत्तये समभिव्याहाररूपाकांक्षा ज्ञानस्य हेतुताया आवश्यकतैव नास्ति, किन्तु तत्र स्थले पुत्रेण सह राजपदस्य तात्पर्यग्रहसत्त्वे तेनैव सहान्वयबोधो जायते। पुरुषेण सह तात्पर्यग्रहसत्त्वे तु तेनैव सह राजपदस्य शाब्दबोधो जायते इत्येवास्ति तत्र सिद्धान्तः। एतादृशस्थले वक्तुस्तात्पर्य-ज्ञानमादायैव निर्वाहनो जायते इत्यपि बोध्यम्।

## तात्पर्यज्ञानविवेचनम्

"वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम्"—भाषापरिच्छेदः— अस्माच्छब्दात् श्रोतुः पुरुषस्य एतदर्थविषयकबोधो जायताम् इत्याकारिकाया वक्तृपुरुषस्येच्छा सैव तात्पर्यम्। तादृश-तात्पर्यज्ञानञ्च शाब्दबोधे कारणम्। यथा—"घटम्" इति पदम् आधेयतासंसर्गकघटप्रकारककर्मताविशेष्यकबोधं जनयतु इत्याकारिका इच्छैव तात्पर्यम्, तादृशेच्छाया ज्ञानं श्रोतृपुरुषस्य जायते। तच्च ज्ञानम्—अनेन घटमिति पदमाधेयतासंसर्गेण घटप्रकारककर्मताविशेष्यकबोधविषयकेच्छया उच्चरितम् इत्या-कारकम् अस्ति, तच्च शाब्दबोधे कारणमपि योग्यताज्ञानादिवत् शुकप्रभृतिपक्षिणां वाक्येभ्योऽपि यत्र येषाञ्च शाब्दबोधो जायते तत्रापि ईश्वरेच्छयैवोपपत्तिः, अर्थात् तत्रेश्वरेच्छारूपम् ईश्वरीयता

तात्पर्यंकारणम् । अपभ्रंशादिपदघटितकुशादिवाक्येषु तान् शुकादीन् तादृशरूपेण शिशियिक्षतुः पुरुषस्यैव तादृशं तात्पर्यं बोध्यम् । तादृशतात्पर्यंज्ञानेनैव तत्र श्रोतृपुरुषस्य शाब्दबोधो जायते इति तु परमार्थः ।

अत्र विषये केषाञ्चिद् विदुषामयमभिप्रायो यत् सकलं शाब्दबोधं प्रति तात्पर्यंज्ञानस्य कारणतैव नास्ति; अर्थात् शाब्दबोधत्वावच्छेदेन तात्पर्यंज्ञानस्य कारणत्वमेव न वर्तते अपितु तादृशबोधत्वसामानाधिकरण्येनैव तात्पर्यंज्ञानकारणतास्तीति । एवञ्च नानार्थंकपदघटितेभ्य एव वाक्येभ्यः शाब्दबोधोपपत्तये तात्पर्यंज्ञानस्य शाब्दबोधं प्रति कारणत्वमस्तु—अनन्यगतिकत्वात्, न सर्वत्र । यथा—"घटमानय" इत्यादिवाक्यजन्य शाब्दबोधे तात्पर्यंज्ञानस्य किमर्थं कारणत्वं स्वीक्रियताम्, तात्पर्यंज्ञानमन्तरैव अत्र शाब्दबोधो जायते, इतोऽतिरिक्तकारणेभ्यः । एवं शुकादिवाक्यजन्यशाब्दबोधेऽपि तात्पर्यज्ञानस्य कारणत्वं नास्ति, किन्तु नानार्थंकपदघटितवाक्यस्थले एव तस्य कारणतास्वीकार्या तत्र नास्ति किमपि गत्यन्तरम् ।

यदि तात्पर्यंज्ञानं कारणं न स्यात् तदा "सैन्धवमानय" इत्यादो क्वचिदश्वस्य क्वचिल्लवणस्य च बोधो न स्यात् । न च तात्पर्यंग्राहकाणां प्रकरणादीनां शाब्दबोधो कारणत्वमस्तु, तथा च सैन्धवमानयेत्यादौ सैन्धवपदजन्यलवणादिविषयकान्वयबुद्धौ तात्पर्यज्ञानजनकतयाऽभिमततत्प्रकारणज्ञानत्वेन तत्तत् प्रकरणज्ञानस्यैव हेतुत्वमास्तामिति वाच्यम् । तेषां प्रकरणाज्ञानेन कारणताबाधेन तादृशप्रकरणज्ञानस्य हेतुत्वं नैव

भवितुमर्हतीति भावः। तात्पर्यज्ञानजनकत्वेन तेषामनुगमे तु लाघवात् तात्पर्यज्ञानस्यैव कारणत्वमस्तु इति भावः।

इत्थं च तात्पर्यज्ञानस्य कारणत्वस्वीकारे वेदस्थलेऽपि तात्पर्यज्ञानार्थमीश्वरः कल्प्यते, तथा च वेदस्थले ईश्वरीयतात्पर्य-ज्ञानमादाय तत्रत्यशाब्दबोध उपपादनीयः। यदि चाध्यापक-तात्पर्यज्ञानं तत्रत्यस्थलीयशाब्दोपपत्तये परिकल्प्यते तदपि नोचितं प्रतिभाति, यतः सृष्टेरादौ अध्यापक एव कश्चिन्नास्ति, एवञ्च अध्यापकाभावात् कथं तत्र अध्यापकतात्पर्यज्ञानं कल्पयितुं शक्यते इति भावः। न च य एव नास्ति कुतः सर्गादिरिति वाच्यम्। प्रलयस्यागमेषु प्रतिपाद्यत्वात्। "यदा स जागर्ति तदा सृजति यदा निद्राति तदा सर्वं निमीलति"—विलासिन्यां

तथा च यथा सुषुप्तिकाले कस्यचिददृष्टसहकारिनिरोधाद् भोगनिवृत्तिः, तथा प्रलयकालेऽपि सर्वात्मनामेकवृत्तिरोधाद् भोगनिवृत्तिरित्यर्थः।

एवं तात्पर्यज्ञानस्य कारणत्वस्वीकारे शुकवाक्ये शुकतात्पर्या-भावेऽपि ईश्वरीयतात्पर्यज्ञानमादयैव शाब्दबोधनिर्वाह्नो बोध्यः। विसंवादीच्छारूपतात्पर्यस्यैवाभावात्। अतस्तत्र शिक्षयितुरेव तात्पर्यज्ञानं कारणमिति मन्तव्यम्।

वेदस्य नानार्थकत्वेन नानार्थवेदे अर्थविशेषे कस्य तात्पर्या-वधारणं मन्तव्यमिति प्रश्ने समुपस्थिते अनादिमीमांसापरिशोधित-तर्कैरेवार्थावधारणं भवतीति शास्त्रकारैः स्वीकृतमिति भावः।

# ‘स्फोटस्वरूपमीमांसा’

शब्दस्य स्वतन्त्रं प्रामाण्यमभ्युपगच्छद् व्याकरणदर्शनमपि शाब्दबोधप्रक्रियायां पश्चात्पदं न भवति, अपितु प्राग्रपदमेव। स्वन्यते चेदम्—‘शब्दप्रमाणका वयम्, यच्छब्द आह तदस्माकं प्रमाणम्, इत्युक्त्या महर्षिणा पतञ्जलिना। अत्र द्वितीयप्रमाण-शब्दः भावल्युडन्तः प्रमापरः। सा च प्रमा शाब्दी एव, शब्दप्रमाण-जन्यत्वात्। शब्दप्रमाणका इति कथनेन शब्दस्य प्रमाणेषु प्राधान्यमिति सूच्यते, न तु अब्भक्षन्यायेन शब्दस्यैव प्रामाण्यमिति, प्रत्यक्षादीनामपि प्रामाण्यस्याभ्युपगतत्वात्। तत्र पूर्ववैयाकरण-सम्मतं शब्दस्य स्वरूपं प्रदर्श्य शाब्दबोधप्रणाली प्रदर्शयिष्यते।

‘पाणिन्यादि मुनित्रयसम्मतं शब्दस्वरूपम्, तत्र शब्दस्य नित्यत्वं विभुत्वमेकत्वं च स्वीकुर्वन्ति पाणिन्यादिमहर्षयः। तथाहि—अर्थवदधातुरितिसूत्रेण अर्थनिरूपितशक्त्याश्रयस्य शब्दस्य प्रातिपदिकसंज्ञाविधानं शब्दस्योक्तं स्वरूपमन्तरा कथं संगच्छेत? यदि घकारादिध्वनि समुदायरूपएव घटशब्दः स्यात्तदा घकारादिषु प्रत्येकं शक्तिसत्वे अर्थबोधावृत्तिप्रसङ्गः। यदि च तादृशसमुदाये घटपदार्थनिरूपिता शक्तिस्तदा तत्समुदायस्यासत्वेन

शक्तेर्निराश्रयत्वमेव प्रसज्येत। वर्णरूपध्वनीनामुच्चरितप्रध्वंसित्वेन यौगपद्यासम्भवात्समुदायासम्भवः। उक्तं च भाष्यकृता—'यावद्गकारे वाग्वर्तते, न तावदौकारे यावदौकारे, न तावद् विसर्गे इति। येन यत्नेनैकोवर्ण उच्चार्यते तेनैव विच्छिन्ने तस्मिन् तं यत्नमुपसंहृत्यान्येन यत्नेन वर्णान्तरमुच्चार्यते, इति 'परः सन्निकर्षः संहिता' इति सूत्रे।

एवं च शक्त्याश्रयत्वाऽन्यथाऽनुपपत्त्या घट इतिशब्दो नूनमनवयवो मन्तव्यः, इति नित्यत्वमेकत्वं च सिध्यति, 'एक इन्द्रशब्दः क्रतुशते प्रादुर्भूतो युगपत्सर्वयागेष्वङ्गं भवति, इति श्रुत्या लाघवाच्च विभुत्वमपि शब्दस्य मन्तव्यम्।

किं च-युष्मदस्मद्भ्यां ङसोऽशितिसूत्रे शित्करणम् 'सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।

एकदेशविकारे हि नित्यत्वं नोपपद्यते। इति परिभाषां ज्ञापयति इति प्रसिद्धमेव। ततोऽपि उक्तं शब्दस्वरूपं प्रसिध्यत्येव।

किं च 'सिद्धे शब्दार्थसम्बन्धे' इति वार्तिके शब्दस्य सिद्धत्वं ब्रुवता श्री कात्यायनेनाऽपि तत्स्वरूपमनुमोदितमेव। अन्यच्च—'येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः, इति भाष्यग्रन्थेनोक्तः सिद्धान्तः सुष्ठु समर्थितो भवति। अत्र हि उच्चारितेनेत्यस्योच्चारित प्रकाशितेनेत्यर्थः। येनेत्येकवचनेन शब्दस्यैकत्वम्, विषाणिनामिति बहुवचनेनार्थस्य बहुत्वं च सूचितं भवति। ईदृक्स्वरूप एव शब्दः स्फोटपदेनाऽपि अन्यदर्शने संकेतितो वर्तते। स्फोटपदीया व्युत्पत्तिश्च कर्म—करणोभयार्थे घञ्प्रत्यये सति द्विविधा भवति। एषा द्वयी अपि

उपयुज्यते। तथाहि—स्फुटत्यर्थो येन स स्फोटः अर्थविषयक प्रमाजनक इत्यर्थः। स्फुटयते ध्वनिनाऽभिव्यज्यते इति स्फोटः, ध्वनिव्यङ्ग्य इत्यर्थः। एवं च ध्वनिव्यङ्ग्यत्वे सति अर्थविषयक-प्रमाजनकत्वं स्फोटस्य लक्षणं पर्यवसन्नम्। येनोच्चारितेनेति भाष्यादपि इमौ व्युत्पत्तिलभ्यावर्थौ अत्र लक्षणे विवेशनीयावित्या-याति। अलक्षणे विशेषणदलाभावे प्रत्यक्षादावतिप्रसङ्गः। विशेष्यदलाभावे तु चुटचुटादिध्वनिना अभिव्यक्ते ऽतोपसरणीयम्, इत्याद्यर्थविशेषेऽतिप्रसङ्गः स्यात्। यदि च ध्वनिपदेनाभिव्यक्त एव ध्वनिर्गृह्यते, तदा ध्वनिजन्यश्रावणप्रत्यक्षविषयध्वना-वेवातिप्रसङ्गः स्यात्। अत उभयोपादानम्।

'शब्दस्योक्तं स्वरूपं प्रत्यक्षप्रमाणगम्यमपि,

शब्दस्य नित्यत्वमेकत्वादिकं च प्रत्यक्षप्रमाणतोऽपि लभ्यम्। तथाहि—घट इत्येकं पदमित्येकपदविषयिका या प्रत्यक्षात्मिका प्रतीतिः सर्वजनानुभवसिद्धा, साऽसति बाधके नाऽपलपितुं शक्या। नाऽपि इयं प्रतीतिर्वर्णमात्राश्रया इति वक्तुं शक्यम्, पुष्पेषु सूत्रं विना माला प्रत्ययाभाववत् परस्पर विलक्षणवर्णमालायाम-भिन्ननिमित्तमन्तरा पदप्रतीत्यभावस्यैव प्रसङ्गात्। अतश्च पदस्फोटरूपसूत्रेणैव वर्णमाला सम्पादयितुं युज्यते, नान्यथा। 'स्फोटस्य व्यञ्जकतापक्षे दोषनिरासः।'

न च वर्णवाचकतापक्षे यो दोषः, स एवेदानीं वर्णस्य स्फोटव्यञ्जकतापक्षेऽप्यायाति। यतश्च प्रत्येकं वर्णानां व्यञ्जकत्वं समुदायस्य वा इति विकल्पस्य पूर्ववदेव प्रसक्ततया व्यञ्जक-त्वाऽसम्भव इति वाच्यम्। प्रत्येकवर्णस्य व्यंजकतामतेनैव

सर्वदोषनिरासात्। तथाहि—प्रथमो वर्णः स्फोटमस्फुटं व्यनक्ति, द्वितीयः स्फुटं तृतीयः स्फुटतरं चतुर्थः स्फुटतममित्येवं रीत्याऽस्य-मतस्योपपत्तेः। उक्तं च वाक्यपदीये ब्रह्मकाण्डे—

प्रत्येकं व्यञ्जका वर्णा भिन्ना वाक्यपदेषु ये।
तेषामत्यन्तभेदेऽपि संकीर्णा इव शक्तयः॥ इति॥

'स्फोटतत्त्वसमर्थकानि नानामतानि,

निरुक्तकारो महर्षियास्कोऽपि शब्दपदेन स्फोटतत्त्वं स्मरति, तथाहि—'व्याप्तिमत्त्वात्तुशब्दस्य, इत्युक्त्या शब्दस्य व्यापकत्व-मेतन्मते। न हि स्फोटवादमन्तरा इदं समर्थितं भवति। एवमेव महर्षिरौदुम्बरायणो वार्ताक्षश्च स्फोटपक्षं सुष्ठु समर्थयेते। उक्तं चैतत् श्रीहरिणा वाक्यपदीये द्वितीये काण्डे—

वाक्यस्य बुद्धौ नित्यत्वमर्थयोगं च लौकिकम्।
दृष्ट्वा चातुष्ट्वं नास्तीति वार्ताक्षौदुम्बरायणौ॥ इति॥

पूर्वमीमांसादर्शने—'सत्यन्तरे च यौगपद्यात्, इति सूत्रं व्याचक्षाणेन श्लोकवार्तिककृता—

'नाना देशाऽवगम्यत्वाद्युगपत्तुल्यबुद्धिभिः, इत्याद्युक्तम्। तत्रैवाग्रिमे श्लोके उत्तरार्धरूपेण 'अविमुत्वेहि युगपन्नैको नावाऽवगम्यते, इत्युक्तम् तेन एकस्य वर्णात्मकशब्दस्य युगपन्नाना-धिकरणेषूपलम्भेन विभुत्वं सिध्यत्येव। पुनरपि—

'प्रागुक्तेन विभुत्वेन व्योमवच्चास्य नित्यता', इति कथनेन विभुत्वनित्यत्वे सिध्यमाने वर्णस्य स्फोटरूपत्वमवगमयत एव। वर्णस्फोटस्वीकारे स्फोटवादः समर्थित एव।

योगसूत्रभाष्यविवरणेऽपि—यथा शिविकोद्वाहनादि अनेकसाध्यमेकस्याऽपि वैकल्पे न सम्पद्यते तथैवार्थस्य प्रतिपादनमपि अनेकसाध्यत्वादन्यतमेन वर्णानामशक्यमिति पदस्यैव व्यञ्जितारो वर्णा इति स्थितमित्युक्तम् । अनेन स्फोटवादः सुष्ठु समर्थ्यते एव ।

देवताऽधिकरणे ब्रह्मसूत्रभाष्येऽपि—वर्णानामुत्पन्नप्रध्वंसित्वेन तेभ्यो देवादीनां सृष्टिरनुपपन्ना स्यात् । किं च पूर्ववदेवार्थावगतिरपि ततो न संभवति इत्यादिकं विमृश्य स्फोटरूपनित्यशब्दात् क्रियाकारकफललक्षणं सर्वं जगदभिधेयभूतं प्रभवति-इत्यर्थकमुक्तम्, एतेनाऽपि स्फोटमतं संमान्यते एव ।

'स्फोटाख्यशब्दस्य द्रव्यत्वं गुणत्वं वा'

लिङ्गसंख्यान्वितं द्रव्यमिति लक्षणपक्षे तु स्फोटस्य द्रव्यत्वमेव । यद्यपि इदं व्यावहारिकं द्रव्यम्, तथाऽपि पारमार्थिकमपि द्रव्यमिदमस्त्येव । 'वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते, इति वाक्यपदीये श्रीहर्युक्तेः । किं च परममहत्परिमाणवत्त्वरूपविभुत्वपक्षे कथं शब्दस्य द्रव्यत्वमपलपितुं शक्यं स्यात् ?

ध्वनिरूपशब्दस्य तु गुणत्वमपि उक्तं वार्तिककृता तथाहि—'अतस्थैश्च गुणैः समासो वाच्यः, इति वार्तिके 'नदी घोषः, 'पटहशब्दः' इत्यादीनि उदाहरणानि तत्रोक्तानि द्रष्टव्यानि । 'आकाशदेशः शब्दः, इति भाष्योक्त्या शब्दस्याकाशश्रितत्वेन गुणत्वमुक्तं श्रीनागेशभट्टेन लघुमञ्जूषायाम् ।

किं च—सत्त्वेनिविशतेऽपैति पृथग्जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च, सोऽसत्त्वप्रकृतिर्गुणः ॥

इत्येतद्भाष्योक्तलक्षणलक्षितमपिगुणत्वं तत्र तिष्ठत्येव । मीमांसादृष्ट्याऽपि शब्दस्य द्रव्यत्वमेवाभ्युपगतमस्ति ।

'स्फोटो न द्रव्यं न गुणोऽपि तु भावात्मैव'

वस्तुत एतत्सर्वंकार्यंभूतशब्दस्यैव वक्तुं शक्यते । वस्तुतस्तु सर्वकारणानामपिकारणभूतोऽनादिनिधनो विभुः प्रपञ्चात्मक-विवर्तोपादानस्वरूपस्फोटपदाभिधेयः पदार्थस्तु न द्रव्यादिरूपः गुणक्रियादिशून्यत्वात् । अपि तु केवलं भावात्मैव-इति वक्तुं शक्यते इति सिद्धान्तयति शब्दकौस्तुभे शाब्दिकप्रवराः श्रीभट्टोजि दीक्षिताः।

'स्फोटस्य चिद्रूपता श्रुतिसम्मता'

'वागेव विश्वा भुवनानि जज्ञे, इत्येषा श्रुतिर्वाचो भुवनकर्तृत्वं प्रतिपादयति । जज्ञे इत्यस्यान्तर्भावितण्यर्थतया 'जनितवती' इत्यर्थंकरणात् । 'वागेवेदं बुभुजे, इत्येषा श्रुतिर्वाचो भुवनपालकत्वं संहारकत्वं च प्रतिपादयति, भुजपालनाभ्यवहार-योरिति स्मरणात् । एवं च 'यतो वा इमानि भूतानि जायन्ते' येन जातानि जीवन्ति, यत्प्रयन्ति अभिसंविशन्ति, इत्यानि श्रुत्या सहैकवाक्यतायै वाक्तत्त्वस्य ब्रह्मरूपता समायाति । ततश्च-चिद्रूपता सुतरां सिध्यति । एवमेव सद्रूपताऽऽनन्दरूपताऽपि बोध्या । 'वाग्वै ब्रह्म', इति श्रुतिरपि वाचो ब्रह्मरूपतां प्रस्तौति । किं च— यथा घटः सन्, पटः सन् इत्येवं रूपेण प्रपञ्चमात्रे सद्रूपानुवेधः, घटो भाति, पटो भाति, इत्येवं रूपेण प्रकाशरूपाऽनुवेधः, घटः प्रियः, पटः प्रियः इत्येवं रूपेणानन्दरूपाऽनुवेधः । तथैव वाचक शब्दरूपाऽनुवेधोऽपि सर्वप्रपञ्चे इत्यनया रीत्याऽपि शब्दतत्त्वस्य चिद्रूपता सम्मान्यते एव मनीषिवरैः सुधीभिः ।

## 'स्फोटव्यञ्जकध्वनिविमर्शः

'अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते, इति भाष्योक्त्या ध्वनिरूपोऽपि शब्दो वैयाकरणैः स्वीक्रियते एव। परन्त्वयं स्फोटस्य व्यञ्जकोऽर्थस्याबोधक एव। अयमेव वैखरी-मध्यमा इत्येवं शब्दैः संकेतितोऽस्ति। व्याकरणशास्त्रे हि चतस्रो वाचः सम्मानिताः सन्ति। तत्र सर्वप्राणिनां मूलाधारस्था तत्रत्य संस्कृतपवनेनाभिव्यज्यमानास्पन्दशून्या शब्दब्रह्मरूपाऽनादिनिधना या वाक् सैव परा, इत्युच्यते। अनुपहितचितिरेवेयम्, 'स्वरूपज्योतिरेवान्तः परा वामनपायिनी, इति स्मरणात्। ततो नाभिपर्यन्तमागच्छता तेन वायुना अभिव्यज्यमाना मनोगोचरीभूता वाक् 'पश्यन्ती' इत्युच्यते।

एतदुभयमपि वाग्ब्रह्मयोगिनां समाधौ निर्विकल्पक सविकल्पकज्ञानविषय इत्युच्यते। ततो हृदयपर्यन्तमाक्रामतानेन वायुनाऽभिव्यज्यमाना तत्तदर्थवाचकस्फोटाभिव्यञ्जिका स्वमात्रश्रव्या सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्या मध्यमा वागुच्यते। ततश्च मुखदेशमारोहता तेन वायुना मूर्धानमाहत्य परावृत्य च तत्तत्स्थानेषु अभिव्यज्यमाना परश्रोत्रेणाऽपि ग्रहणार्हा वैखरी वागुच्यते। उक्तं च लघुमञ्जूषायाम्—

परा वाङ्मूलचक्रस्था पश्यन्ती नाभिगा स्मृता।
हृदिस्था मध्यमा ज्ञेया वैखरी स्यात्तु कण्ठगा ॥ इति ॥

ऋग्वेदेऽपि आसां चतसृणां वाचां संकेतो लभ्यते,— तथाहि—

चत्वारि वाक्परिमिता पदानि,
तानि विदुर्ब्राह्मणाय मनीषिणः।
गुहायां त्रीणि निहिता नेङ्गयन्ति,
तुरीयं वाचो मनुष्या वदन्ति ॥ इति ॥

अत्रैतन्मन्त्रं व्याचक्षाणं भाष्यं विवृण्वन् श्रीनागोजिभट्टः उद्योते-परापश्यन्तीमध्यमावैखरीणां चतसृणां वाचां स्पष्टमुल्लेख-कृतोऽस्ति।

यत्तु—वैखर्य्यामध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम् ॥

इति वाक्यपदीयब्रह्मकाण्डस्थकारिकायां तिसृणामेव वाचां वर्णनमुपलभ्यते।

तत्तु—व्याकरणशास्त्रविषयीभूतानां वाचां प्रदर्शनम्। पश्यन्त्यामपि योगिनां प्रकृतिप्रत्ययविभागाऽवगतिर्भवत्येव। पराख्यायां वाचि तु तेषामपि न तदवगतिः। उक्तं च—

स्वरूपज्योतिरेवान्तः परावागनपायिनी।
तस्यां दृष्टस्वरूपायामधिकारो निवर्तते ॥ इति ॥

इत्थं च परावाचो व्याकरणशास्त्रविषयत्वाभावः स्फुटमेव प्रतिपादितः।

"स्फोटव्यञ्जकता वैखरी मध्यमयोरुभयोरन्यतरस्या एव वा"

तत्र वैखरीमध्यमा चेत्युभे अपि स्फोटं व्यञ्जयतः इति महाभाष्यमतम्। तथाहि—'श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः, इति भाष्ये प्रयोगपदं वैखरीध्वनि-

परमिति प्रदीपकारः। बुद्धिनिर्ग्राह्य इत्यत्र बुद्धिपदं मध्यमा-परमिति उभयोर्व्यञ्जकता सिध्यति। इयमेव सरणिः श्रीभर्तृ-हरि-कैयट-भट्टोजिदीक्षितप्रभृतीनां वैयाकरणमूर्धन्यानाम्।

भूषणसारकृता श्रीकोण्डभट्टेन तु-वायुसंयोगस्य स्फोट-व्यञ्जकता उक्ता। सा तु ध्वनिनाऽन्यथा सिद्धत्वाद् भाष्यविरुद्ध-त्वाच्च न सम्मानास्पदम्। एवम् परमलघुमञ्जूषायां श्रीनागो-जिभट्टेन मध्यमाध्वनेरेव व्यञ्जकत्वमुक्तम्।

वैखर्य्या कृतो नादः, परश्रवणगोचरः।
मध्यमया कृतो नादः, स्फोटव्यञ्जक उच्यते॥

इति कारिका प्रमाणत्वेन चोपन्यस्ता। तच्चेदं मतं वक्तुः कृते चेत्, सत्यम्। श्रोतॄणां कृते तु वैखरीध्वनिरेव व्यञ्जकः, भाष्यमुद्धरता। तस्य हि प्रयोगेण वैखरी रूपेण अभिज्वलितः स्वरूपरूषितः कृतः, इत्यर्थं इति।

उक्तकारिकायां परश्रवणगोचर इत्यतस्य परेषां श्रोतॄणां श्रवणगोचरः सन् स्फोटव्यञ्जक इत्यर्थः, स्फोटव्यञ्जक इत्यस्य वक्तुर्हृदये इति शेषः,। कृत इत्यस्य वक्त्रोच्चारित इत्यर्थः। वैखर्य्या इति मध्यमया इति चाभेदे तृतीया, एवं च वैखरीरूपो मध्यमारूपश्च नादो ध्वनिरिति विवरणेन सर्वमिष्टं तात्पर्यं सेद्धुमर्हति।

## 'आचार्य श्रीहरिसम्मतं वैखरीस्वरूपद्वयम्

वाक्यपदीये वैखर्य्याः स्वरूपद्वयमुक्तं श्रीहरिणा। तथाहि—

प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते।
शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः॥

महर्षिश्रीव्याडिप्रणीते संग्रहेऽपि एवमेव विभागद्वयं प्रदर्शितम्।

तथाहि—शब्दस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।
स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते॥ इति॥

एवं च स्फोटस्याभिव्यञ्जने प्राकृतो ध्वनिरुपयुज्यते, स्वीय-मात्राकालादिना च नित्यमपि स्फोटं परिच्छिनत्ति। स्फोटस्याभिव्यक्त्युत्तरं द्रुतादि वृत्तिभेदे वैकृतोध्वनिर्निमितं भवति। द्रुतमध्यमविलम्बितवृत्तीनां लक्षणानि कृतानि प्रदीपकृता श्रीकैयटेन।

'वैखरीध्वनिविषये सूत्रकृन्मतं यजुःप्रातिशाख्य मतं च, वैखरीध्वनिविषये सूत्रकृता महामुनिपाणिनिना शिक्षायामुक्तम्-

आत्मा बुद्धया समेत्यार्थान् मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः।
वर्णान् जनयते—इति।

यद्यपि अनयोक्त्या स्वरसतो वायोर्निमित्तहेतुता लभ्यते, तत्र च मारुतः पराद्याख्यमन्तःस्थितं ज्ञानरूपं शब्दं वर्णत्वेनाभिव्यक्ति इत्यर्थं स्पष्टमायाति। अस्मिश्चार्थे वक्ष्यमाणभाष्यमतेन सहैकवाक्यता सम्भवति। तथापि प्राणादिरूपस्य वायोः परिणाम भूतोऽयं ध्वनिरित्यभिमतं सूत्रकारोयमिति केश्चिदुच्यते। व्याख्यायते चोक्तः शिक्षाग्रंथः-'मारुत एव नाभेरूर्ध्वमुद्यन् मूर्ध्नभिहत-आत्मानं शब्दत्वेन अभिव्यनक्ति, इत्येवं रूपेण।

एवमेव—वैखरीशब्दो वायोः परिणाम इति यजुः प्रातिशाख्यम्,। तथाहि—'वायुः खात्, इति महर्षिः कात्यायनः

सूत्रयति । तस्यायमर्थः—वायुः शब्दस्य कारणं । स च खात् आकाशाद् भवति, ननु वायुः शब्दस्य निमित्तकारणमेवास्तु न तूपादानमिति कथं तत्परिणामः शब्दः ? इति जिज्ञासायां द्वितीयं सूत्रम्—'शब्दस्तत्, । शब्दस्तदात्मको वाय्वात्मक इत्यर्थः । ननु यदि शब्दो वाय्वात्मकस्तदा वायोः प्रायेण सर्वगतत्वात् सदाकालं तत्रोपलब्धिः स्याच्छब्दस्येति चेत्तत्रोच्यते—'संकरोपेति, तृतीयं सूत्रम् । हृदि सम्यक्करणैरुपहितो वायुर्गेणुशङ्खादिभिः शब्दीभवति—इत्यनेन शब्दस्य वायुपरिणामता सुष्ठु उच्यते । शब्दीभवनप्रकारोऽपि दर्शितस्तत्रैव 'ससंघातादीन् वाक्, इति चतुर्थसूत्रेण । तथाहि—सः पूर्वोक्तावस्थापन्नो वायुः संघातादीन् प्राप्य वाग् भवति-संघातः पुरुषप्रयत्नः स आदिर्येषां स्थानादीनां ते संघातादयस्तान् प्राप्य वाग् भवति वर्णो भवति—इत्यर्थः ।

## 'स्फोटभेदविमर्शः'

इत्थं च शब्दप्रमाणप्रस्तावे स्फोटस्य तद्व्यञ्जकस्य च स्वरूपं निरूप्य स्फोटभेदनिरूपणमुपक्रम्यते । तत्र च प्रक्रियाकल्पानुरोधेन शाब्दिकैरष्टौ पक्षा उपस्थाप्यन्ते । तथाहि—वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटः, जातिपक्षे च—वर्णजातिस्फोटः, पदजातिस्फोटः वाक्यजातिस्फोटश्चेति त्रयः । तत्र च—किञ्चिद्वर्णव्यत्यासादिना शक्तताऽवच्छेदकानुपूर्वीभङ्गस्य प्रतिपदमौत्सर्गिकतया तत्र च केनचित् क्वचित् प्रथमं शक्तिग्रहात् केन कस्य स्मरणमित्यत्र विनिगमना विरहात् ऋषभो वृषभो वृष इत्यादाविव 'कर्', 'कार्', 'कुर्', 'चकर्', इत्यादीनां प्रयोगसमवायिनां सर्वेषामेव वर्णानां तत्तदानुपूर्व्यवच्छिन्नां वाचकतेति वर्णस्फोटपक्षः ।

रामं, रामेण, रामाय, हरिं, हरी, हरीन् इत्यादौ परिनिष्ठिते रूपे कियानंशो द्रव्यादिवाचकः, कियांश्च कर्मत्वादेरित्यस्य विनुगन्तुमशक्यतया राममित्यादि पदमेव वाचकं द्रव्याभिन्नकर्मण इति पदस्फोटपक्षः।

दधीदम्, हरेऽव, विष्णोऽव, इत्यादावपि विनिगमनाविरह-साम्याद् वाक्यमेव विशिष्टार्थे शक्तमिति वाक्यस्फोटपक्षः।

एकः पट इति वदेकं पदमेकं वाक्यमित्यबाधितप्रतीत्या वर्णातिरिक्तमेव पदं वाक्यं वा अखण्डं वर्णव्यङ्ग्यम्—इत्थं पञ्चव्यक्ति स्फोटाः।

जातिस्फोटवादिनस्तु घाकारोत्तरटत्वादिकं शक्तताऽ-वच्छेदकतया आद्यपक्षत्रयेऽपि यथायथं वक्तव्यम्, अन्यथा सरसरो, इत्यादावर्थविशेषबोधो न स्यात्। तच्चोपाधिरूपम्, उपाधिश्च परम्परासम्बद्धा जातिरेव। सा च सर्वाधिष्ठानब्रह्मस्वरूपात्मिका। तथा च शक्यांश इव शक्तांशेऽपि न्यायसाम्येनाऽकृत्यधिकरणरीत्या ब्रह्मतत्त्वमेव तत्तदुपहितं वाच्यं वाचकं च। अविद्या आविद्यक धर्मविशेषो वा — जातिरिति पक्षे तु सैववाचिकाऽस्तुइति सिद्धान्त-यन्ति।

## 'उक्तेषु अष्टसु स्फोटेषु प्रमाणानि'

एतेषु अष्टसु स्फोटेषु यथायथं प्रमाणानि उपन्यस्यन्ते। तथाहि—स्थानिवत्सूत्रे—'सर्वे सर्वपदादेशाः,' इति भाष्यम्। तत्र पद्यतेऽर्थोऽनेनेति अर्थवदिह पदं न तु सुप्तिङन्तरूपम् तथा च एरुरित्यस्य वेस्तुरित्यर्थं इति टीकाग्रन्थश्च वर्णस्फोटेऽनुकूलः।

तथा स्थान्यर्थाभिधानसमर्थस्यैवादेशता इति स्थानेऽन्तरतम-परिभाषयैव तस्थस्थभिपामित्यादिषु निर्वाहे तदर्थं यथासंख्य-सूत्रं नारब्धव्यमिति भाष्यमपि।

पदस्फोटवाक्यस्फोटौ तु इहैव प्रघट्टके—'येनोच्चारितेनेति भाष्यप्रतीकमादाय भाष्यार्थतया वर्णितौ श्रीकैयटेन। वर्ण-व्यतिरिक्तस्य पदवाक्यस्य वेति वदता तयोरखण्डताऽप्युक्ता। नित्येषु शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमिति तत्र तत्र भाष्ये सखण्डताऽप्युक्ता। तां विना तत्र वर्णानुपलब्धेः पस्पशाया-मेवान्यत्रप्रघट्टहके किं पुनरित्यादि भाष्यमुपादाय केचिद् वर्णस्फोटमपरे पदस्फोटं चाहुरिति ब्रुवता श्रीकैयटेन अइउण् इत्यत्र व्यक्तिजातिस्फोटयोर्बलाबलं चिन्तयता, प्रत्याहाराह्निकान्ते 'अक्षरं नक्षरं विद्यात्' इति भाष्यव्यख्यावसरे व्यवहारनित्यता तु वर्णपदवाक्यस्फोटानाम्, नित्यत्वं तु जातिस्फोटस्यैव इतिप्रति-पादयता, अनुपदमेव 'ब्रह्मतत्त्वमेव हि शब्दरूपतया भाति, इति व्याचक्षाणेन च तेन सर्वे पक्षाः सूचिता एव—इति विवेकः।

## 'वाक्ये स्फोटे एव सूत्रकृतां विशेषतः सम्मतिः'

स्वरूपंशाब्दस्येति सूत्रं विदधता महर्षि पाणिनिना वाक्यस्फोटे स्वीया दृढा सम्मतिः सूचिताऽस्ति। यतोहि—व्याकरणशास्त्रे शब्दः स्वार्थविशिष्टस्य स्वरूपस्य बोधको भवति—इति स्वरूपमिति सूत्रेणोच्यते। शब्दपदेन कस्य ग्रहणमित्यत्र आचार्यपाणिनिः स्वयं ब्रवीति—वचोऽशब्दसंज्ञायामिति। अनेन सूत्रेण वाक्यं शब्द इत्यनयोः पर्यायता लभ्यते। एवं च वाक्यस्य वाचकत्वं सुस्पष्ट-मायाति इति वाक्यस्फोटस्तन्मते सिद्धान्तितः।

## 'मतान्तरदृष्ट्या स्फोटवादनिरासः'

पदवाक्ययोर्वर्तमाना वर्णाः (ध्वनयः) स्फोटं नाभिव्यञ्जन्ति, धर्मिणः स्फोटस्यासिद्धत्वात्-इति तस्यावाचकत्वे नैव दृष्टविरोधः। उक्तं च श्लोकवार्तिके—

नार्थस्य वाचकः स्फोटो वर्णेभ्यो व्यतिरेकतः।
घटादिवन्न दृष्टेन विरोधो धर्म्यसिद्धितः॥ इति।

एवमेव उत्तरमीमांसादर्शनेऽपि पदस्फोट-वाक्यस्फोटयोरनङ्गीकारो दृश्यते। तथाहि—गौरित्येकः शब्दः इति या बुद्धिः सा वर्णेषु एकार्थविषयकबोधजनकत्वेनौपाधिकी, वन-सेनादि बुद्धिवत्। उपलब्धिक्रमस्योपलभ्यमानवर्णेषु आरोपेण राज-जरा-इत्यनयोरविशेषः सम्पादनीयः। दृष्टस्य वर्णाना मर्थबोधकत्वस्य हानिः, अदृष्टस्य स्फोटस्य कल्पनेति गौरवं न सोढव्यमित्यादि-बहुयुक्तिभिः स्वसिद्धान्तः समर्थितः।

एवमेव जैनदर्शनस्याऽपि स्फोटवादप्रतिकूला मतिः। तथाहि—शब्दार्थोपलब्धिनिमित्तक्षयोपशम प्रतिनियमादविनष्टा एव पूर्व वर्णसंविदस्तत्संस्काराश्चान्त्यवर्णसंस्कारं विदधति। तथाभूतसंस्कारप्रभवस्मृतिसव्यपेक्षोवान्त्यो वर्णः पदार्थं प्रतिपत्ति हेतुः। वाक्यार्थप्रतिपत्तावपि अयमेव न्यायोऽङ्गीकरणीयः इत्यादिरीत्या पदवाक्यार्थप्रतिपत्तिः सम्पादनीया इति स्फोटवादो न सम्मान्यते जैनदर्शनाचार्यैरपि।

## 'स्फोटतत्त्वनिरासे न्यायदर्शनविचारः,'

पूर्वं पूर्वं वर्णानुभवजनितसंस्कारसहितचरमवर्णानुभवरूपो-द्बोधकोद्बोधित-चरमवर्णविषयकसंस्कारेणैव क्रमिकतत्तद्वर्ण-

विषयकपदस्मरणस्योपपादनेन सकलेष्टसिद्धेः स्फोटवादी नैयायिकमूर्धन्यैनैवाभ्युपेयते । किं च पूर्वं पूर्वं वर्णानुभवजनितसंस्काराणां सहकारेण चरमवर्णे श्रोत्रेन्द्रियस्य समवायसम्बन्धेन च समूहालम्बनश्रावणप्रत्यक्षमपि भवितुमर्हति, सुरभिचन्दनमित्यत्र यथा सौरभांशे ज्ञानलक्षणः, चन्दनांशे संयोगः सन्निकर्ष इति अलौकिकलौकिकोभाभ्यां स सन्निर्षाभ्यामेकं चाक्षुषप्रत्यक्षं जायते, तद्वत् पूर्वं-पूर्वं-वर्णानुभवजन्य-संस्कारस्य तज्जन्यस्मृतेर्वा ज्ञानलक्षणत्वम्, चरमवर्णे समवाय इति अलौकिक-लौकिकोभयविधसन्निकर्षजन्यमेकं घटपटादिसमूहालम्बनं श्रावणं प्रत्यक्षं सम्पादयितुं शक्यम् शाब्दबोधादव्यवहितप्राक्क्षणे तस्य प्रत्यक्षस्य नष्टतया तज्जन्यसंस्कारजनितं स्मरणं वा मन्तव्यम् । एवं रीत्या पदस्य प्रत्यक्षे स्मरणे वा उपपादिते स्फोटकल्पना मुधैव शाब्दिकैः स्वीक्रियते, श्रूयमाणवर्णेभ्योऽतिरिक्तस्य तस्य स्वीकारेऽनुभवविरोधो गौरवं च ध्रुवं प्रसजति ।

अतएव च पदवाक्ययोः स्फोटरूपता नैवाभ्युपेयते कैश्चिदपि दार्शनिकैः । ऋषीणामपि सिद्धान्ताः परस्परं न विरुद्धाः । 'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः, इति सिद्धान्तेनाव्यवस्थितानामुपायानां प्रतिपत्तौ हेतुभेदस्य निश्चप्रचं सम्भवात् ।

'वाग्वै ब्रह्म, इत्यादि श्रुतयोऽपि उपादानोपादेययोरभेदोपचारेण सुष्ठु योजनीयाः, 'अन्नं ब्रह्म' 'मनो ब्रह्म' इत्यादिश्रुतिशतवत् ।

किं च—वर्णानां वाचकत्वपक्षे यो दोषः, स एव स्फोट-व्यञ्जकत्वपक्षेऽपि प्रसक्तः। प्रत्येकं व्यञ्जकत्वमभ्युपगम्य तस्य दोषस्योद्धारः कर्तुं न सुशकः। प्रथमादिव्यञ्जकेनैवोपपत्तौ द्वितीयादिव्यञ्जकानां वैयर्थ्यंप्रसङ्गात्। यच्च—द्वितीयादीनां व्यञ्जकानां स्फुट-स्फुटतर-स्फुटतमप्रकाशनार्थतया साफल्यं ब्रूषे, तदपि न शोभनं प्रतिभाति, प्रकाशसाधनीभूतासु तत्तद्वृत्तिषु स्फुटत्वास्फुटत्वयोर्निर्वक्तुमशक्यत्वात्।

अतश्चानुभवसिद्धं श्रूयमाणवर्णानां वाचकत्वं विहाय विस्फोटवति जर्जरे स्फोटवादे शाब्दिकमर्मविद्भिरास्था न विधेया, नाऽपि अन्यैर्दार्शनिकाग्रेसरैरिति साग्रहं प्रतिवेदयन्ति न्यायदर्शनरहस्यज्ञा गौतमीयाः।

## न्यायदर्शनरीत्या उक्तव्याकरणमतनिरासः

व्याकरणदर्शनपद्धत्या उक्ताः पदार्थाः शाब्दबोधविषयतया नाभ्युपेयन्ते न्यायदर्शनमर्मज्ञैः। तथाहि—फलव्यापारौ धात्वर्थौ—इति पक्षो न सम्मतो नव्यनैयायिकानाम्। अपितु फलाऽवच्छिन्नो व्यापार एव धात्वर्थः। किं च व्यापारमात्रं धात्वर्थः, फलं तु द्वितीयाविभक्तेरर्थः, इत्यपि न्यायमतविशेषः। किं वा भवतु नाम तयोर्धात्वर्थत्वम्, तावताऽपि तिबाद्यर्थो न कर्ता कर्म वा, अपितु कर्तृत्वम्, कर्मत्वमेव वा। तच्च कर्तृत्वं कृतिरूपम्। अत एव कृतित्वस्य शक्यताऽवच्छेदकतायां लाघवं सुतरां भवति। अपि च समानाभिधानश्रुत्या अस्यां कृतावेव तिबाद्यर्थस्य वर्तमानादि कालस्यान्वयः सुष्ठु कर्तुं शक्यः। अपि च—कर्तृरूपस्य तिङर्थस्य स्वीकारे—प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानमिति

न्यायेन कर्तुः प्राधान्ये प्रथमान्तार्थमुख्यविशेष्यकबोध एव शाब्दिकै-रभ्युपेतव्यः स्यात्, ततश्च स्वसिद्धान्तप्रच्युतिः, परसिद्धान्ताभ्यु-पगमश्च कर्तव्यो भविष्यति। किं च पञ्चकं प्रातिपदिकार्थं इति पक्षोऽपि न रोचते न्यायमर्मज्ञेभ्यः। 'व्यक्त्याकृतिजातयस्तु पदार्थः, इति सूत्रयता भगवता गोतमेन लिङ्गसंख्यादीनां नामार्थत्वानभ्युपगमात्। एवमेव बौद्धपदार्थसत्ताऽपि खपुष्पाय-माणा एव प्रतीयते। प्रत्यक्षं बाह्यं पदार्थमभ्युपगम्याऽपि तत्स्वीकारे मुधैव गौरवात्। यदि च ईदृशो देवदत्त इति ऋष्यनुभवस्य तत्र प्रामाण्यमुच्यते, तदपि न शोभनम्। बुद्धिविषयस्य बौद्धपदार्थस्यास्माभिरपि स्वीकारेण तत एव तत्संगतेः। नहि घटादयो बाह्या एव न बुद्धिविषया इति केनाऽपि वक्तुं शक्यते। भवत्सम्मता अन्तःकरणपरिणामभूता बौद्धा न स्वीक्रियन्ते। घटं करोतीत्यादौ कर्मसंज्ञाऽपि घटपदस्य घटकारणीभूतमृत्पिण्डे लक्षणयाऽप्युपपादयितुं शक्या, ओदनं पचतीत्यादौ यथा ओदनपदस्य तण्डुले लक्षणा, तद्वत्।

एवं च मृत्पिण्डं तादृशं करोति, येन स घटात्मना परिणमति एवमेव शब्दस्य स्वरूपं ज्ञानमात्रे भासते-इति कथनमपि न युक्तिसहम्। निर्विकल्पकप्रत्यक्षादौ तद्व्यभिचारस्यानुभूयमानत्वात्। पशुपक्ष्यादिभिः क्रियमाणे ज्ञाने व्यभिचाराच्च। किंच शशशृङ्गादौ शृङ्गे शशीयत्वभ्रम एव भवति। न तत्र विशिष्टस्यैकः कश्चन अर्थः नाऽपि समासग्रहणं नियामकमपितु विधायकमेव, तेन प्रातिपदिकसंज्ञा सुष्ठु सिध्यति। एवं विषयताभानमपि न शोभनम्, एकेनैव सन्निकर्षेण 'घटस्वरूपम्' 'रूपवान् घटः' इति प्रत्यक्षस्य

क्रियमाणत्वात्। इयान् विशेषः—यदा रूपस्य विशेष्यत्वमभिलिलापयिषितं तदा 'घटस्वरूपम्' इति यदा च घटस्य विशेष्यत्वमभिलिलापयिषितं तदा 'रूपवान् घटः' प्रत्यक्षमुदेति। ज्ञानमात्रस्य सविषयकत्वनियमेन विषयताभानं सुतरां भविष्यति, न तु पदार्थविषया।

एवमेव व्यापारमुख्यविशेष्यकः शाब्दबोध इति सिद्धान्तोऽपि न रमणीयतरः। प्रकृति-प्रत्ययौ सहार्थमिति नियमेन कर्तुरेव प्राधान्यापातात्। किञ्च कर्तुः तिबर्थत्वाभावेऽपि प्रथमान्तार्थस्य व्यापाराश्रयस्य व्यापारं प्रति जनकत्वेन प्राधान्यं यल्लोके प्रसिद्धं चकास्ति, तत् केन अपलपितुं शक्यमस्ति, प्रधानं च सर्वतो बलवदिति प्रथमान्तार्थस्य मुख्याविशेष्यताऽभ्युपगन्तव्यैवानिच्छयाऽपि भवद्भिः। कर्मणि प्रत्यये कर्मणोऽपि फलाऽपेक्षया जनकत्वेन प्राधान्यं वर्तते एव।

ननु 'भावप्रधानमाख्यातम्' सत्त्वप्रधानानि नामानि इत्यादि वाक्यानाम् ऋषिप्रोक्तानां का गतिः इदानीमिति चेत्, उच्यते—धात्वर्थफलापेक्षया भावस्य (व्यापारस्य) प्राधान्यमित्येव तात्पर्यम्। यथा बहुषु प्रातिपदिकार्थेषु द्रव्यस्य प्राधान्यम्। न तु वाक्यार्थान्तःपातिनां सर्वपदार्थानां मध्ये व्यापारस्य प्रधानत्वमिति दिक्प्रदर्शनं न्यायशास्त्रविदुषामिति शम्।

## व्याकरणदर्शनसम्मताः शाब्दबोधविषयीभूताः पदार्थाः

शाब्दबोधे प्रायः प्रतिवाक्यार्थं कियन्तः पदार्थाः सन्निविष्टा भवन्ति? इति व्याकरणदर्शनरीत्या प्रत्याख्येयदृष्ट्या प्रदर्श्यन्ते।

तत्र प्रतिवाक्यं क्रियापदं कारकपदं तद्विशेषणपदं च अधिकादधिकं भवितुमर्हन्ति। तत्र च क्रियापदे धातुभागे विक्लित्त्यादि फलं फूत्कारादिव्यापारश्चेत्यर्थद्वयम्। तिबादिरूपे प्रत्ययभागे च कर्तृकर्मान्यतरत्, वर्तमानभूतभविष्यत्कालान्यतमः, एकत्वबहुत्वसंख्याऽन्यतमा चेति त्रयोऽर्थाः। कारकपदे प्रातिपदिकभागे प्रवृत्तिनिमित्त-तदाश्रय-लिङ्ग-संख्या-कारकाणि इति पञ्च अर्थाः। स्वादिप्रत्ययानां चात्रपक्षे द्योतकतैव न तु वाचकता। उक्तं च भाष्यकृद्भिः—द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तयः, इति। उक्तयोर्द्वयोरप्यंशयोः शब्दस्य स्वरूपं पदार्थनिष्ठप्रकारत्वादिविषयता चेति नियमेन भासमानाः पदार्थाः, शब्दस्य स्वरूपं तु प्रत्ययांशेऽपि बोध्यम्। इत्थं संकलनया द्वयोरप्यंशयोः सप्तसप्त अर्थाः सम्भवन्ति, लिङ्गसंख्यादि वृत्तिधर्मभेदविमर्शे विषयताभेदविमर्शे तु नाना पदार्था द्रष्टव्याः। तत्राऽपि व्याकरणदर्शनहृदयभूतबौद्धपदार्थपक्षाश्रयणे तु यावन्तो बाह्या अर्थास्तावन्त एव अन्तःकरणे अनादिकालतः संस्कारात्मनाऽवस्थिता बौद्धाः पदार्थाः ज्ञातव्याः। उक्तं च बौद्धपदार्थसत्तायां भाष्यकृता भगवता 'उपदेशेऽजनुनासिक इत्', इति सूत्रे—'अङ्गदी कुण्डली व्यूढोरस्को वृत्तबाहुरीदृशो देवदत्तः', इति। अत्र यादृशो देवदत्तो बुद्धौ भासते, ईदृशो बाह्य इत्यर्थः, स च बौद्धपदार्थसत्त्वमन्तरा कथं संगच्छेत ?। एवमेव 'हेतुमति चे' त्यादि सूत्रस्थैर्भाष्यग्रन्थैरपि बौद्धपदार्थसत्त्वं सुष्ठु समर्थितं भवति।

किं च 'घटं करोति', इत्यादौ घटस्य कर्मसंज्ञासिद्धिः कथं स्यात् बौद्धपदार्थमन्तरा, बाह्यस्यघटस्येदानीमभावात्। एवमेव शशशृङ्गादिशब्दानां प्रातिपदिकसंज्ञार्थमपि बौद्धपदार्थः स्वीकार्यं

एव। अन्यथा तत्र बाह्यार्थाभावेन सा कथं स्यात्। किं च बोद्धार्थाभिन्ना यत्र बाह्यार्थास्तत्रैव शब्दस्य प्रामाण्यं नान्यत्र शशशृङ्गादौ इत्यपिबोध्यम्।

शब्दस्तु शाब्दबोधे तत्तच्छब्दत्वेन प्रविशति। विषयताभानं तु स्वरूपत एव। किं चास्या ज्ञानमात्रे भानमभ्युपेयते शाब्दिकैः। अतएव 'यज्ज्ञानं यच्छब्दविषयकं प्रतीयते, तत् तच्छब्दजन्य-विषयतासमानविषयताकं प्रत्येतव्यमिति नियमं प्रतिपादयता लघुमञ्जूषाटीका-कृता श्रीदुर्बलाचार्येण ज्ञानमात्रे विषयता-मानाऽनुरोधेन सर्वत्र ज्ञाने शब्दविषयकत्वमपि साधितम्। अन्यथा 'घटस्य रूपम्', 'घटो रूपवान्', इत्यादिप्रत्यक्षे सन्निकर्षादिभिर्वि-षयताविशेषो न व्यपतिष्ठेत।

यदि तु प्रवृत्तिनिमित्तादिवद् घटादिनिष्ठानां गुणादीनामपि शाब्दबोधे सामान्यरूपेण मानम्, तदा इतोऽप्यधिका अर्थाः शाब्दीं विषयतामनुभवन्ति। ध्वनितं चैतत् 'गुणसमुदायो द्रव्यम्', इति सिद्धान्तयता भगवता पतञ्जलिना। अतएव च— अनिर्ज्ञातार्थस्य साकल्येन ज्ञापकत्वमिति प्रमाणसामान्यलक्षणम् 'उपमानानि सामान्यवचनैः', इति सूत्रस्थभाष्यसम्मतं साकल्य-पदस्य समीचीनं साफल्यं प्रकटयति।

## 'क्वचिद्वाक्ये शाब्दबोधप्रकारः'

उक्तार्थविषयकः शाब्दबोधः क्वचिद् वाक्येऽवश्यं दर्शनीय इति जिज्ञासायामुच्यते—'चैत्रो ग्रामं गच्छति', इति वाक्यं दृष्टान्तीकृत्य। अत्र गम् धातोः संयोगरूपे फले तज्जनके व्यापारे

च शक्तिः। थिप्प्रत्ययस्य कर्तरि एकत्वे वर्तमानकाले च शक्तिः। चैत्रपदस्य चैत्रत्वादिविशिष्टे द्रव्ये च शक्तिः, सुब्विभक्तिस्तदर्थाऽनुवादिका। ग्रामपदस्यापि ग्रामत्वादि विशिष्टे शक्तिः, अम्प्रत्ययस्याऽपि एकत्वे कर्मणि च सा। तत्र व्यापारमुख्यविशेष्यकबोधवादिनां शाब्दिकानां मते—तिबर्थस्य कर्तुः वृत्तित्वसम्बन्धेन, वर्तमानकालस्य चावच्छेद्यत्वसम्बन्धेन धात्वर्थे व्यापारेऽन्वयः। तिबर्थैकत्वस्य समवायसम्बन्धेन कर्तरि, तत्रैव च कर्तरि चैत्रपदार्थस्याभेदेनाऽन्वयः। अम्प्रत्ययार्थ कर्मणि अमर्थैकत्वस्य समवायेन, ग्रामरूपप्रकृत्यर्थस्य चाभेदेन, कर्मणश्च वृत्तित्वसम्बन्धेन संयोगरूपे फले, तस्य च जनकत्वसम्बन्धेन व्यापारेऽन्वयः।

एवं च—'चैत्राभिन्नैक कर्तृवृत्तिः वर्तमानकालाऽवच्छिन्नः ग्रामाभिन्नैकत्वविशिष्टकर्मवृत्तिसंयोगजनको व्यापारः, इति शाब्दबोधः सम्पन्नः।

## वाक्यपदीयमते वाक्यलक्षणानि—

आख्यातशब्दः संघातो जातिः संघातवर्तिनी।
एकोऽनवयवः शब्दः क्रमो बुद्ध्यनुसंहृतिः ॥ १ ॥
पदमाद्यं पृथक्सर्वं पदं साकाङ्क्षमित्यपि।
वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायवादिनाम् ॥ २ ॥

अयमर्थः—न्यायदर्शिनां विदुषां वाक्यं प्रति वाक्यविषये बहुधा अष्टधा मतिर्भिन्ना। ते इमे—१—आख्यातशब्दो वाक्यमिति। २—संघातः, पदसंघातः। ३—संघातवर्तिनी जातिः। ४—एकोऽनवयः शब्दः। ५—क्रमः। ६—बुद्ध्यनुसंहृतिः। ७—आद्यं पदम्। ८—पृथक् सर्वं पदं साकाङ्क्षम्।

तत्राख्यातशब्दो वाक्यमितिवादिनाम् आख्यातशब्द एव वाक्यमिति नाभिप्रायः, देवदत्त ! ग्रामम्याज दण्डेन इत्यादौ सुप्तिङन्तचये वाक्यत्वव्यवहारश्च सर्वजनीनस्यापलापप्रसङ्गात्। किन्तु क्वचित् आख्यातशब्दोऽपि वाक्यम्, यत्र कारकशब्दप्रयोगं विना केवलाख्यातशब्दप्रयोगेऽपि वाक्यार्थावगतिः। यथा पिधेहीति। तदिदं शब्दार्थनिर्णयप्रकरणे दर्शयिष्यति। पदसंघातो वाक्यमिति वादिनस्तु पिधेहीत्यादौ न केवलाख्यातस्य वाक्यत्वम्। किन्तु द्वारमिति कर्माध्याहृत्य तत्संहतस्यैवेति। केवलाख्यातशब्दस्य वाक्यत्ववत् केवलसुबन्तस्य द्वारमित्यादिवाक्यत्वन्तु न, तत्र नियमेन पिधानक्रियाया अनुपस्थितेः। सुप्तिङन्तपदसंघात-वर्तिनी जातिर्वाक्यमिति वादिनामभिसन्धिस्तु 'देवदत्त ग्रामम्याज दण्डेन' इत्यादिपदसंघातरूपवाक्येषु अस्ति कश्चन प्रतिवाक्यं भिद्यमानो जातिविशेषः, येन प्रतिपुरुषं प्रत्युच्चारणं प्रतिक्षणं भिद्यमानेऽपि देवदत्त ग्रामम्याज दण्डेनेति वाक्ये एकत्वप्रतिज्ञा भवति। तत्र प्रतिपुरुषं प्रत्युच्चारणं प्रतिक्षणञ्च भिद्यमाने पदसंघाते वाचकत्वं न संभवति, शक्तेरानन्त्यव्यभिचारदोष-प्रसङ्गात्। अतः पदसंघातगताया जातेरेकस्या एव वाचकत्वमिति तस्या एव वाक्यत्वमिति।

एकोऽनवयवः शब्दो वाक्यमिति केषाञ्चिन्मतम्। एतन्मते वाक्यस्फोटोऽखण्डः, तत्र वर्णपदापोद्धारकल्पनायामपि वस्तुतो वर्णाः पदानि वा तत्र न सन्तीति। पदानां क्रमः, पौर्वापर्यम्, पूर्वापरीभूतानि पदान्येव वाक्यमित्यपरे। एतन्मते वाक्य-स्फोटस्य सखण्डत्वं पदसमुदायारब्धत्वञ्चेति। बुद्ध्यनुसंहृति-

वाक्यमित्यन्ये । एतस्मिन् कल्पे वाक्यमण्डनम्, तत्र पदानि न सन्ति, किन्तु पदानि पदबुद्धयश्च कल्पितानि । तत्र पदबुद्धीनां कल्पितानामनुक्रमेण संहार उपसंहार इति पदसमुदायरूपत्वं बुद्ध्या प्रकल्प्य वाक्यत्वव्यवहारः ।

आद्यं पदं वाक्यमित्यपि केषाञ्चिन्मतम् । अस्मिन् पक्षे अनेकपदाऽरब्धं सखण्डम् वाक्यम् । अस्मिन् मते प्रथमोपस्थितत्वात् शक्ततावच्छेदकानुपूर्वीकल्पनायां लाघवाच्च आद्यं पदमेव वाचकम्, इतरपदानि तु तत्सहकारीणि तच्छक्तिद्योतकानि । यथा 'साक्षात् क्रियते' इत्यत्र साक्षात्पदमेव साक्षात्कारवाचकम्, क्रियते इति तु पूर्वपदस्य तदर्थे शक्तिद्योतकमित्याद्यपदस्येव वाक्यत्वमिति । पृथक् सर्वं पदं साकांक्षम् । वाक्यमितिवादिनामयं भावः—पृथग् वाक्यात् पृथक्कारे साकांक्षं पदान्तरसाकांक्षं, सर्वं आद्यं मध्यमन्त्यञ्च, पदं समुदितं वाक्यमिति । तदुक्तं परमर्षिणा—"अर्थैकत्वादेकं वाक्यं साकांक्षं चेद् विभागे स्यात्" इति ।

प्रकृतकारिकाद्वयस्य गंभीराशयस्तु—वाक्यविषये आचार्याणामष्टौ विकल्पाः । तत्राऽपि वाक्यस्फोटोऽखण्ड इति पक्षे जातिः संघातवर्तिनी एकोऽनवयवः शब्दः, बुद्ध्यनुसंहृतिरिति त्रीणि वाक्यलक्षणानि । वाक्यस्फोटः सखण्ड इति पक्षे तु आख्यातशब्दः, क्रमः संघातः, पदमाद्यम् पृथक् सर्वं पदं साकाङ्क्षमिति पञ्च लक्षणानि । तत्रापि संघातः, क्रम इत्यभिहितान्वयपक्षे लक्षणद्वयम् । तथा हि पदमेव शक्तं न तु वाक्यम्, वाक्यार्थभूतः पदार्थानां संसर्गस्तु आकाङ्क्षाभास्यः, आकाङ्क्षा च तत्तच्छाब्दबोधं प्रति नियतः पदानां समभिव्याहारविशेषः ।

## अखण्डवाक्यस्य स्वरूपम्

अथाखण्डपक्षे श्वेतो धावतीत्येतत्प्रश्नद्वयाऽपाकरणाय कथमेकं वाक्यम्, अत्र हि श्वा इत्येतद्रूपं संहितावशाद्विनष्ट-मित्येतत्पदार्थासंभवात् कथं तदवगतिः ? तत्राह—

संसर्ग इव रूपाणां शब्देऽन्यत्र व्यवस्थितः ।
नानारूपेषु तद्रूपं तन्त्रेणापरमिष्यते ॥ ९६ ॥

तस्मिन्नभेदे भेदानां संसर्ग इव वर्तते ।
रूपं रूपान्तरात्तस्मादनन्यत् प्रविभज्यते ॥ ९७ ॥

शास्त्रे प्रत्याय कस्यापि क्वचिदेकत्वमाश्रितम् ।
प्रत्याय्येन क्वचिद्भेदो ग्रहणग्राह्ययोः स्थितः ॥ ९८ ॥

ऊ इत्यभेदमाश्रित्य यथासंख्यं प्रकल्पितम् ।
लृङ् लृतोर्ग्रहणे भेदो ग्राह्याभ्यां सहकल्पितः ॥ ९९ ॥

यस्येत्येतदणो रूपं संज्ञिनामभिधायकम् ।
न हि प्रतीयमानेन ग्रहणस्यास्ति सम्भवः ॥ १०० ॥

ऊ इत्येतदभिन्नं च भिन्नवाक्यनिबन्धनम् ।
भेदेन ग्रहणं चास्य पररूपमिव द्वयोः ॥ १०१ ॥

प्लुतस्यांगविवृद्धि च समाहारमयोस्तथा ।
व्युदस्यता पुनर्भेदः शब्देष्वत्यन्तमाश्रितः ॥ १०२ ॥

अद्धं चादिषु शब्देषु रूपभेदः क्रमाद्यथा ।
तन्त्रात्तथैकशब्दत्वे भिन्नानां श्रुतिरन्यथा ॥१०३॥

संहिताविषये वर्णाः स्वरूपेणाविकारिणः ।
शब्दान्तरत्वं यान्तीव शक्त्यन्तरपरिग्रहात् ॥१०४॥

इन्द्रियादिविकारेण दृष्टं ग्राह्येषु वस्तुषु ।
आत्मत्यागादृते भिन्नं ग्रहणं स क्रमः श्रुतौ ॥१०५॥
अभिधानक्रियायोगाच्छब्देष्वविकृतेष्वपि ।
रूपमत्यन्तभेदेन तदेवैकं प्रकाशते ॥१०६॥
ऋचो वा गीतिमात्रं वा सामद्रव्यान्तरं न तु ।
गीतिभेदाद्विगृह्यन्ते ता एव विकृता ऋचः ॥१०७॥
उपायाच्छ्रुतिसंहारे (रो) भिन्नानामेकशेषिणाम् ।
तन्त्रेणोच्चारणे तेषां शास्त्रे साधुत्वमिष्यते ॥१०८॥

अस्यार्थः—अन्यत्र वाक्यतदर्थयोरखण्डत्वपक्षे, शब्दे श्वेत इत्यादौ, रूपाणां श्वा इत इति, श्वेत इति चैवंविधानां रूपाणां तन्त्रोच्चारणेन संसर्ग इव व्यवस्थितः। अत्रैव शब्दो श्वेत इत्यादावुपादानं तु वस्तुतो नाखण्डत्वपक्षे नानारूपाणां संसर्गस्तत्र व्यवस्थित इति बोधयितुम्। अतश्च तन्त्रेणावस्थितमपरमखण्डं तद्रूपं नानारूपेषु प्रत्यायकं श्वा इत इति श्वेत इति च नानारूप-विषयकप्रतीतिजनकमिष्यते, ताभ्याञ्चार्थद्वयबोध इत्यखण्डत्व-पक्षे न दोष इति।

तदेव प्रकारान्तरेण व्याचिख्यासुराह—तस्मिन्नभेद इति। अस्यार्थः—तस्मिन् श्वेत इत्येवं रूपे अभेदे = एकस्मिन्नेवाखण्डे, भेदानां = परस्परं भिद्यमानानां वा इति श्वेत इत्येवंविधानाम्, संसर्ग इव वर्तते, स्थितः। तस्माद्रूपम्—श्वेत इत्यखण्डं रूपम्, रूपान्तरात् श्वा इत इति, श्वेत इति च रूपद्वयात् तन्त्रन्याया-श्रयणेनान्यदपि = अनन्यदेव, आवृत्योभयार्थप्रत्यायकतया प्रविभज्यते। वक्तुस्तन्त्रेणोच्चारणम्, बोद्धुस्त्वावृत्या बोध इति स्थितेः। अस्मिन् पक्षे च श्वेत इत्यखण्डमेवोभयार्थप्रत्यायकमिति

पूर्वकारिकोक्तात् पक्षाद् विशेष इति। पूर्वस्मिन् पक्षे तु श्वेत इत्यखण्डं रूपद्वयस्य श्वा इत इति चैवंविधस्य प्रत्यायकम्, प्रतीतन्तु तद्द्वयं स्वस्वार्थस्य प्रत्यायकमिति।

पूर्वकारिकाभ्यां पक्षद्वयमुक्तम्, श्वेत इत्यखण्डं श्वा इत इति श्वेत इति रूपद्वयस्य प्रतिपादकम्, प्रतीताच्च रूपद्वयादर्थद्वयस्य बोध इत्येकः पक्षः। श्वेत इत्यखण्डं रूपमेवावृत्त्या प्रविभागकल्पनयोभयार्थप्रतिपादकमिति द्वितीयः। तत्र प्रत्याय्यप्रत्यायकयोः शब्दस्वरूपयोर्भेदे प्रथमः पक्षः तयोरभेदे तु द्वितीयः पक्षः। इमौ च प्रत्याय्यप्रत्यायकयोर्भेदाभेदपक्षौ शास्त्रे लक्ष्यसिद्धये द्वावपि तत्र तत्र समाश्रिताविति नात्रैतयोरेकः साधुत्वेन निर्धारयितुं शक्यत इति विवक्षन् प्रत्याय्यप्रत्यायकयोः शास्त्रविषयभेदेन भेदाभेदौ शास्त्रे दृष्टौ प्रसंगात् प्रदर्शयितुमाह—शास्त्र इति। शास्त्रे क्वचित् प्रत्यायकस्य प्रत्याय्येन सहैकत्वमभेदोऽप्याश्रितम्। क्वचिद् ग्रहणग्राह्ययोः प्रत्याय्यप्रत्यायकयोर्भेदः स्थित इति योजनया निगदव्याख्यातार्थं एष श्लोकः ॥६८॥

तत्र प्रत्याय्यप्रत्यायकयोरभेदं तावदाह—इत्यभेदमाश्रित्येति। अस्यार्थः—ऊकालोऽज्झ्रस्वदीर्घप्लुत इत्यत्रैक उच्चारित ऊकारः प्रत्यायकः, त्रयस्तु ह्रस्वदीर्घप्लुता उकारा अनुच्चारिताः प्रत्याय्या इति प्रत्याय्यानां त्रित्वेऽप्यनुच्चारितत्वात्, ऊकालोऽजित्युद्देश्यघटकस्य ऊकारस्योच्चारितस्यैकत्वात् विधेयानाञ्च ह्रस्वदीर्घप्लुतसंज्ञानां त्रित्वात् संख्यावैषम्येन यथासंख्यं संबन्धो न प्राप्नोतीत्याशङ्क्य प्रत्याय्यप्रत्यायकयोरभेदमाश्रित्यात्र शास्त्रे यथासंख्यं प्रकल्पितम्। तथाहि—ऊकालोऽज्झ्रस्वदीर्घप्लुत इति सूत्रे भाष्य

उक्तम् "ह्रस्वादिषु समसंख्याऽप्रसिद्धिरुद्देशनिर्देशवैषम्यात्। सिद्धन्तु समसंख्यत्वात्, त्रयाणां हि विकारनिर्देशः (म० भा० १।२।२७) इति।

प्रत्याय्यप्रत्यायकयोर्भेदं शास्त्रे निदर्शयितुमाह—लृलुटोर्ग्रहण इति। अस्यार्थः—स्यतासी लृलुटोरित्यत्र (३।१।३३) लृलुटो-र्ग्रहणे लृशब्देन लृङ्लृट्समुदायस्य लुट्शब्देन लुटञ्च ग्रहणे ज्ञाने जायमाने, ग्राह्याभ्यां सह लृङ्लृट्समुदायेनलुटा च प्रत्याय्येन सह प्रत्यायकयोर्लृलुटोः सूत्रघटकयोर्भेदः कल्पितः। अभेदे हि प्रत्याय्यगतायास्त्रित्वसंख्याया गौण्यप्युत्तरा संख्या पूर्वां संख्यां बाधत इत्यभ्युपगमेन प्रत्यायकगतद्वित्वसंख्याबाधकत्वेन उद्देश्य-विधेययोः संख्यावैषम्येण यथासंख्यं सम्बन्धो न स्यादिति।

यस्येति च (अष्टा० ६।४।१४८) इत्यत्र इश्च अश्च यं तस्य यस्येति संसृष्टेकाराकारयोरूपमिकाराकाररूपयोरणोः प्रागुक्त-रीत्या प्रत्यायकम्। न च प्रतीयमानाभ्यां ताभ्यां स्वसंज्ञि-प्रत्यायनसंभव इति प्रत्याय्यप्रत्यायकयोरभेदपक्षमाश्रित्य प्रतीय-मानयोरपि ग्रहणकशास्त्रप्रवृत्त्या यस्येतिपदात् दीर्घकाराकार-योरपि ग्रहणेन सौपर्णेयो वैनतेय इत्यत्रापि यस्येति लोपः प्रवर्तते। यदि चात्र प्रत्याय्यप्रत्यायकयोरभेदो नाश्रीयते तदा प्रतीयमानेन स्वसंज्ञिनां ग्रहणस्यासम्भवेन नात्रेष्टं सिद्ध्येत्। तस्माद् यथाऽत्र यस्येति पदं संसृष्टरूपत्वानिकाराकारयोः प्रत्यायनद्वारा तत्तदष्टादशकस्य प्रत्यायकम्, प्रत्याय्यप्रत्यायकयोरभेदपक्ष-समाश्रयणात्तथा श्वेतो धावति इत्यत्र तन्त्रेणोच्चारितमेकमेव श्वेत इति पदं श्वा इत इति श्वेत इति पदद्वयस्य प्रत्यायकं

संसृष्टरूपत्वादित्यत्रापि प्रत्याय्यप्रत्यायकयोरभेदोपचारादस्त्येव श्वेतो धावतीत्यस्मादुभयार्थप्रतीतिरिति ॥ १०० ॥

ऊकाल इत्यत्र यद् 'ऊ' इत्येतदुपात्तम्, तद्ध्रस्वदीर्घप्लुतानां त्रयाणामुकाराणां सामान्येन उत्वजातिमत्तयाऽभिन्नं रूपं बोद्धव्यम्। ततश्च 'ऊकालः' इत्येतदेकमपि पदं ग्रहणकवाक्यस्थानीयम् (संग्राहकवाक्यसदृशम्), अवान्तरवाक्यानां त्रयाणां निबन्धनम् (ज्ञापकनिमित्तम्) भवतीत्याह—भिन्नवाक्यनिबन्धनमिति। भिन्नवाक्यानां निबन्धनमिति षष्ठीतत्पुरुषः। अतश्च यदि उकारत्रयस्य संसृष्टत्वादभेदेनैव ग्रहणं प्रत्यायके 'ऊ' इत्येतस्मिन् स्थितं तदा 'ऊ' इत्येतद्रूपं भिन्नवाक्यानां निबन्धनमेव भवति। यथापररूपं संसृष्टत्वादेकमपि द्वयोः प्रत्यायकं दृश्यते तथैतद्बोद्धव्यम्। ततश्च श्वेतो धावतीत्यादाववान्तरे वाक्योपप्लावनेनोभयार्थता भविष्यतीति ॥ १०१ ॥

यद्यपि वाक्यतदर्थयोरखण्डत्वे सुस्थितेऽपि तन्त्रेणावान्तरवाक्योपप्लवावनेन वाऽर्थत्रयबोधाय 'ऊकालः' इति निर्देशं कुर्वतः सूत्रकृतः प्रत्याय्यप्रत्यायकयोरभेद एवेष्टस्तथापि 'प्लुतावैच इदुतौ' (अष्टा ८।२।१०६) इति सूत्रस्य वार्त्तिकतद्भाष्यदर्शनेन तेषां शब्दानां परस्परं भेदपक्ष एव वार्त्तिककारस्याभिरुचित इति गम्यत इति दर्शयितुमाह—प्लुतस्येति। अस्यार्थः—एकारस्य ओकारस्य च प्लुतस्य प्रसङ्गे या तदङ्गस्य तदवयवस्येकारस्योकारस्य प्लुतकरणेन विवृद्धिस्तत्प्रयुक्ता चैचोरभिवृद्धिश्चतुर्मात्रत्वसंपत्तिरूपा तां व्युदस्यता प्रतिषेधता, पररूपेः चायोः पूर्वपरयोः समाहारं प्रतिषेधता वार्तिककृता पुनः = तु, शब्देषु = प्रत्याय्येषु प्रत्यायकेषु

चात्यन्तं भेद आश्रितः। तथाहि—प्लुतावैच इदुतौ (८।२ १०६) इति सूत्रस्यैचः प्लुतप्रसङ्गे तदवयवाविदुतौ प्लवेते (प्लुतौ भवतः) इत्यर्थः। ऐ३तिकायन, औ३पगव इति चोदाहरणम्। चतुर्मात्रावत्रैचौ संपद्येते। अत्र सूत्रे भाष्ये उक्तम् "अङ्गविवृद्धिर्नोपपद्यते, नह्यैचोऽवयवोऽकार इकार उकारो वा" इत्येवमंगविवृद्धि प्रतिषेधता वार्तिककृता 'तावेव शब्दावेकत्र सम्मिलिताविति' यः प्राग् उपदर्शितः प्रत्याय्यप्रत्यायकयोरभेदः स पराकृतः यद्यप्येतत्कारिकाव्याख्यावसरे पुण्यराजोपन्यस्ताऽङ्गविवृद्धिर्नोपपद्यत इत्याद्यानुपूर्वीवार्तिके तद्भाष्ये च नोपलभ्यते; तथापि तत्रत्यवार्तिकभाष्ययोर्भावार्थानुवादरूपैषा हरिपरम्पराप्राप्ता द्रष्टव्या। तथा पररूपेऽचोः पूर्वपरयोः समाहारं व्युदस्यता वार्तिककृता प्रत्याय्यप्रत्यायकयोर्भेद एवेष्यते। यथाह सः—'समादारोऽचोश्चेन्नाभावाद्' (महाभा० १।२।३१।१ वा) इति। अस्यार्थः—अचोः पूर्वपरयोः समाहारः पररूपमिति चेन्न, प्रत्याय्यप्रत्यायकयोर्भेदेन पररूपे तयोरभावादिति। तस्मादनुपदमवान्तरवाक्योवप्लावनेन तन्त्रन्यायसमाश्रयणेन वा यच्छ्वेतो धावतीत्यादौ सदृशयोर्मेलनस्य समर्थनं न तज्ज्याय इति ॥ १०२ ॥

यद्यपि प्रत्याय्यप्रत्यायकशब्दानां परस्परं भेदपक्ष एव वार्तिककृतोऽभीष्ट इत्यभेदपक्षस्तन्मूलभूतं तन्त्रञ्च सूत्रकृदभिप्रेतं तस्य नाभिप्रेतमिति पूर्वकारिकायां प्रतिपादितं तथापि सूत्रकृदभिप्रेतभेदपक्षं यस्य मूलं तन्त्रं च शास्त्रसिद्धान्तत्वेनोपसंहर्तुमुपक्रमते—अर्धर्चादिष्विति। अस्यार्थः—यथा अर्धर्चादिषु (अष्टा २।४।३१)

अभिन्नेष्वेव शब्देषु क्रमाद् ऋचोऽर्धम्, अर्धर्चमिति शब्दानां भिद्यमानं क्रममाश्रित्य रूपभेदः प्रतीयते व्यवह्रियते च ऋचोऽर्धमिति विग्रहः, अर्धर्चमिति समास इति, तथैकशब्दत्वे प्रत्याय्यप्रत्यायकशब्दयोरेकशब्दत्ववादे, भिन्नानाम् शब्दानाम् अन्यथा श्रुतिः = अभिन्ना श्रुतिः, तन्त्रात् = तन्त्रं समाश्रित्य बोद्धव्येति शेष इति ॥ १०३ ॥

शब्दैकत्ववादमेव स्फुटीकर्तुमाह—संहिता विषय इति। एक एव श्वेतशब्दोऽनेकार्थप्रत्यायनशक्तिमत्तयाऽसंहितानेकवर्णवत्तया च संहिताविषये प्रतिभासत इत्येकस्यैव श्वेतशब्दस्य कल्पितया संहितयोच्चारणात् शक्त्यन्तरस्यापि परिग्रहेणोभयार्थप्रत्याय्यकत्वं मन्यते लोकः, न तु वास्तवी तत्र संहितेति ॥१०४॥

एकस्यापि श्वेत इति शब्दस्य संहितारूपनिमित्तविशेषात् कल्पिताद् भेद उपजायते इति दृष्टान्तप्रदर्शनेनाह—इन्द्रियादिविकारेणेतियथाकाचकामलादिरोगदोषो - पहतचक्षुषामेकाकारमपि वस्तु शुक्तिः—रजतमिति, काच इति, रङ्गमिति, रज्जुरपि सर्पः, धारा, दण्डः, माला इति नानारूपतयाऽवभासते स्वरूपादप्रच्युतमेव, तथैकोऽपि श्वेत इति शब्दः शास्त्रकल्पितसंहितावशात् श्वा इत इति रूपान्तरेणावभासते स्वरूपमपरित्यजन्नेवेति ॥१०५॥

प्रागुक्तदृष्टान्तसिद्धं शब्दैकत्वमेवोपसंहर्तुमाह—अभिधानक्रियायोगादिति। अस्यार्थः—अविकृतेष्वपि शब्देषु भिन्नाकारतया प्रतीतावपि वस्तुतो भिन्नाकारतयाऽविकृतेष्वपि श्वेत इत्यादिशब्देषु, तदेवैकं रूपं श्वेत इति, अभिधानक्रियायोगात्—अभिधान-

मत्र संहितयोच्चारणमेव, न व्यर्थाभिधानम्। तस्या योगात् संबन्धात्, भिन्नपदपदार्थप्रतीत्यनुकूलशक्त्यन्तरपरिग्रहादत्यन्तभेदेन श्वा इत इत्येवं प्रकाशते प्रतीयत इति ॥१०६॥

ऋचो वेति—यद्यपि गीतिविशेषणोदीरिता ऋचो वा साम अथवा ऋच्याध्यारूढं गीतिमात्रं साम, उभयथापि न तु ऋगपेक्षया द्रव्यान्तरं साम, तथापि ता एव ऋचो गीतिभेदाद् विकृता विशेषरूपेणोदीरिता विगृह्यन्ते = विभिन्नरूपैर्गृह्यन्त इति ॥१०७॥

अत्र वाक्याखण्डत्ववादे पदभेदमर्थभेदं च प्रतीयमानं संहिताविषये वर्णा इति कारिकायां प्राक् तन्त्रेणाव्यक्तं समर्थितमपि स्पष्टं पुनः समर्थयितुमाह उपायादिति। अस्यार्थः—श्वेतो धावतीत्यादिवाक्येषु भिन्नानाम् = श्वेत इति, श्वा इत इत्यादिपदानाम्, एकशेषिणाम् = एकशेषवताम्, एकशेषेणोच्चारितानाम् = तन्त्रेणोच्चारितानामिति यावत्। अत्रैकशेषशब्दस्य तन्त्रे प्रयोगः सकृदुच्चरितत्वे सत्यनेकार्थबोधकत्वरूपैकशेषसाधर्म्याद् गौणः। एकशेषशब्दस्य तन्त्रे साधर्म्यात् प्रयोगस्तु वार्तिककृताऽपि कृतः। तद्यथा—"हलन्त्यमेकशेषनिर्देशाद् वा (महाभा० १।३।३। वा० ५॥) इति। अत्र हलन्त्यमित्येकवचननिर्देशात्तन्त्रमेव, न तु एकशेष इति। उपायात् तन्त्रेणोच्चारणरूपादुपायात्। श्रुतिसंहारः—श्रुतौ = श्वेतो धावतीत्येकस्मिन्नखण्डे वाक्ये, संहारः संश्लेषः, निर्गीर्णत्वमिति यावत्। तमेवोपायं प्रदर्शयितुमाह—तन्त्रेणोच्चारणमिति। श्वेतो धावतीत्यादौ तेषाम् = भिन्नानां श्वेत इति श्वा इत इत्यादिरूपाणां पदानाम्, तन्त्रेणोच्चारणे

साधुत्वं शास्त्रे = आद्गुण इत्यादौ श्वा इत इत्येतदर्थमुपप्लुते, उच्यते = तात्पर्येणाख्यायते। अत्र शास्त्र इति वस्तुतः करणस्य शास्त्रस्याधिकरणत्वविवक्षया सप्तमीति ॥१०८॥

## वाक्यानां शक्तिभेदेन विभागः—

साधारणत्वात् संदिग्धाः सामर्थ्यान्नियताश्रयाः।
तेषां ये साधवस्तेषु शास्त्रे लोपादिशिष्यते ॥३६०॥
तुल्यायामनुनिष्पत्तौ ज्ये द्रा घा इत्यसाधवः।
नह्यन्वाख्यायके शास्त्रे तेषु दत्तादिवत् स्मृतिः ॥३६१॥
कृतणत्वाश्च ये शब्दाः नित्यं खरणसादयः।
एकद्रव्योपदेशित्वात्तान् साधून् संप्रचक्षते ॥३६२॥
गोत्राण्येव तु तान्याहुः संज्ञाशक्तिसमन्वयात्।
निमित्तापेक्षणं तेषु स्वार्थे नावश्यमिष्यते ॥३६३॥
व्यवहाराय नियमः संज्ञानां संज्ञिनि क्वचित्।
नित्य एव तु सम्बन्धो डित्थादिषु गवादिवत्। ३६४॥
वृद्ध्यादीनां च शास्त्रेऽस्मिञ्छक्त्यवच्छेदलक्षणः।
अकृत्रिमोऽभिसम्बन्धो विशेषणविशेष्यवत् ॥३६५॥
संज्ञास्वरूपमाश्रित्य निमित्ते सति लौकिकी।
काचित् प्रवर्तते काचिन्निमित्तासंनिधावपि ॥३६६॥

इदं तु अवधेयम्—शास्त्रेण देवदत्तादिशब्दैकदेशानां लोपान्वाख्यानेऽपि न तत्र शास्त्रतात्पर्यम्, किन्त्वनेन प्रकारेण देवदत्तादिशब्दानां दत्तादिशब्दानाञ्च स्वतन्त्राणां देवदत्तादिशब्दार्थे साधुत्वबोधन एव तच्छास्त्रतात्पर्यम्, पदानामखण्डत्वाभ्यामेकदेशस्य लोपस्य चापपत्तेरिति।

यथा स्वघटितसमुदायमनुनिष्पादीनि देवादिदत्तादिपदानि तादृशसमुदायार्थ विनियुज्यन्ते, न तथाऽपदानां वर्णसमुदायानामनुनिष्पत्तौ दत्तादिपदानामनुनिष्पत्त्या समानायामप्यनर्थका अपदभूता वर्णसमुदाया ज्ये, द्रा इत्यादयः स्वघटितसमुदायार्थे शास्त्रेण विनियुज्यन्त इत्यतो न ज्येष्ठद्राघिष्ठादिषु ज्ये, द्रा इत्यादयो वर्णसमुदाया वृद्धव्यवहारे शब्दानां साधुत्वे प्रमाणभूते साधुत्वेनाभ्यनुज्ञायन्त इत्यतः साधुत्वान्वाख्यायकेन शास्त्रेणापि समुदायैकदेशभूतानां पदानामेव साधुत्वेनानुगमः क्रियते। अतः शास्त्रेणाननुशिष्टत्वान्नैते श्लाघामघादिशब्दैकदेशा घादयो वर्णसमुदाया मघादिशब्दवाच्यानामर्थानां वाचका इति।

अथ पदेषु पदैकदेशाः सन्ति न वेति विचारप्रसंगे यदि पदेषु पदैकदेशाः सन्तीत्युच्यते, यदा देवदत्तादिसंज्ञापदानां सावयवत्वेनानित्यत्वे तन्निष्ठयोस्तदर्थतत्सम्बन्धयोरपि आश्रयानित्यत्वेनानाश्रितयोस्तयोः स्थित्यसम्भवादनित्यत्वमित्याशङ्क्य शब्दार्थसम्बन्धानां नित्यत्वं समर्थयितुमाह—कृतणत्वाश्चेति। एवञ्च स्वरणासादयः शब्दाः नित्यं कृतणत्वाः, न तु तेषु संज्ञासंज्ञिसम्बन्धात् प्राक् तदुत्तरं वा णत्वविधियोग इति खरणसादयः शब्दा नित्या एव। "पूर्वपदात् संज्ञायामगः" इति सूत्रेण तु तेषां साधुत्वमात्रमभ्यनुज्ञायत इति न संज्ञाशब्दानां तेषां शब्दार्थसम्बन्धस्य चानित्यत्वप्रसङ्ग इति कारिकाशयः। पूर्वकारिकायां निगूढं यदुक्तम्—कृतणत्वानामेकोराशिर्नित्य एव, णत्वविधिना तेषां साधुत्वमात्रमन्वाख्यायते न स्वपूर्वं णत्वं क्रियत इति एतदेवं स्फुटं प्रतिपादयितुमाह—गीर्वाण्येवेति। ननु प्रागुक्तकारिका-

द्वयोक्तं संज्ञाशब्दानां नित्यत्वं नोपपद्यते, तेषां तत्तत्पिण्डे सम्बन्धस्य तत्तत्काले पित्रादिभिः क्रियमाणत्वात्। तथाहि—ते ते संज्ञाशब्दास्तत्तदर्थे तत्तत्काले तत्तत्पिण्डे सन्तमर्थं सत्त्वेनासन्तञ्च तमारोप्य प्रवृत्तिनिमित्तिकृत्य यथाकथञ्चिन्नियुज्यन्ते। इत्याशङ्क्य संज्ञाशब्दानां नित्यत्वं समर्थयितुमाह—व्यवहारायेति। शास्त्रेऽपि वृद्ध्यादिसंज्ञाशब्दानां डित्थादिसंज्ञाशब्दवदेव व्यवहाराय क्वचित् संज्ञिनि नियमोऽवज्ञातव्य इत्याह—वृद्ध्यादीनामिति वाक्य-वाक्यार्थयोः विषये नानामतानि—

निर्देशे लिंगसंख्यानां सन्निधानमकारणम्।
प्रमाणमेव ह्रस्वादावनुपात्तं प्रतीयते ॥३०७॥

ह्रस्वस्यार्द्धं च यद् दृष्टं तत्तस्याऽसन्निधावपि।
ह्रस्वस्य लक्षणार्थत्वात् तद्वदेवाभिधीयते ॥३०८॥

दीर्घप्लुताभ्यां तस्य स्याद् मात्रया वा विशेषणम्।
जातेर्वा लक्षणा यस्माद् सर्वथा सप्तपर्णवत् ॥३०९॥

गन्तव्यं दृश्यतां सूर्यं इति कालस्य लक्षणे।
ज्ञायतां काल इत्येतत्सोपायमभिधीयते ॥३१०॥

विध्यत्यधनुषेत्यत्र विशेषेण निदर्श्यते।
सामान्यमाश्रयः शक्तेर्यः कश्चित्प्रतिपादकः ॥३११॥

काकेभ्यो रक्ष्यतां सर्पिरिति बालोऽपि चोदितः।
उपघातपरे वाक्ये न श्वादिभ्यो न रक्षति ॥३१२॥

प्रक्षालनं शरावाणां स्थालीनां मार्जनं तथा।
अनुक्तमपि रूपेण भुज्यंगत्वात् प्रतीयते ॥३१३॥

वाक्यात् प्रकरणादर्थादौचित्याद् देशकालतः।
शब्दार्थाः प्रविभज्यन्ते न रूपादेव केवलात् ॥३१४॥

संसर्गो विप्रयोगश्च साहचर्यंविरोधिता।
अर्थः प्रकरणं लिंगं शब्दस्यान्यस्य सन्निधिः ॥१५॥

सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छदे विशेषस्मृतिहेतवः ॥३१६॥

भेदपक्षेऽपि सारूप्याद्भिन्नार्थाः प्रतिपत्तिषु।
नियता यान्त्यभिव्यक्ति शब्दाः प्रकरणादिभिः ॥३१७॥

नामाख्यातसरूपा ये कार्यान्तरनिबन्धनाः।
शब्दा वाच्याश्च तेष्वर्थो न रूपादधिगम्यते ॥३१८॥

या प्रवृत्तिनिवृत्त्यर्था स्तुतिनिन्दाप्रकल्पना।
कुशलः प्रतिपत्ता तामयथार्थां प्रतीयते ॥३१९॥

विधीयमानं यत्कर्म दृष्टादृष्टप्रयोजनम्।
स्तूयते सा स्तुतिस्तस्य कर्तुरेव प्रयोजिका ॥३२०॥

व्याघ्रादिव्यपदेशेन यथा बालो निवर्त्यते।
असत्योऽपि तथा कश्चित् प्रत्यवायो विधीयेते ॥३२१॥

न संविधानं कृत्वापि प्रत्यवाये तथाविधे।
शास्त्रेण प्रतिषिद्धेऽर्थे विद्वान् कश्चित् प्रवंतते ॥३२२॥

सर्पेषु संविधायापि सिद्धैर्मन्त्रौषधादिभिः।
नान्यथा प्रतिपत्तव्यं न ततो गमयेदिति ॥३२३॥

क्वचित् तत्त्वसमाख्यानं क्रियते स्तुतिनिन्दयोः।
तत्रापि च प्रवृत्तिश्च निवृत्तिश्चोपदिश्यते ॥३२४॥

रूपं सर्वंपदार्थानां वाक्यार्थोपनिबन्धनम् ।
सापेक्षा ये तु वाक्यार्थाः पदार्थैरेव ते समाः[१] ॥३२५॥

अयं भावः—नानाविधानि वाक्यानि नानाविधाषु च तदर्था भर्तृहरिणा प्रदर्शिताः। तत्र क्वचित् प्रधानीभूतः एव अर्थः अन्यस्य लक्षणं भवतु इति प्रतिपाद्यते गन्तव्यं दृश्यतां सूर्यं इति कारिकया । अयमर्थः यत्र क्वचित् पथिकैः इत्थमभिधीयते, त्वर्यंताम्, अपरमपि वर्त्म अद्य गन्तव्यमस्ति, सूर्यश्च दृश्यतामिति। तत्र मुख्यया वृत्त्या. सूर्यदर्शनप्राधान्येन श्रूयमाणेन दृश्यतां सूर्यः इति वाक्येन कालस्य कालविशेषस्य लक्षणे लक्षणया बोधने क्रियमाणे ज्ञायतां कालः ज्ञायतामल्पीयान् दिवसस्य अंशात्मकः कालः परिशिष्यते—इत्येतद् वाक्यार्थरूपं वस्तु सोपायं = सूर्यदर्शनरूपकालज्ञानोपायसहितं अभिधीयते बोध्यते। तत्र साहित्यविशेषणीभूतः वाक्यार्थः शक्त्यः विशेष्यभूतस्तु लक्षणया इति विवेकः शक्यार्थबाधश्च वैयर्थ्यात्। अत्र साहित्यं बोद्धं ग्राह्यं शक्यलक्ष्यार्थबोधयोः पूर्वापरभावित्वेन वाह्यस्य साहित्यस्य असम्भवात्। अथवा केवले विशेषणीभूते शक्तिः सहिते तु अजहल्लक्षणा इत्यपि पक्षान्तरम्। एवमेव विशेषाभिधायकेपि वाक्ये सामान्यमात्रमेवप्रयोजकं लोकेऽपि दृश्यते इत्यपि उच्यते काकेभ्यो रक्षतां सर्पिरिति कारिकया।

एवमेव क्वचित् साक्षादनुक्तमपि वस्तु मुख्यार्थंनान्तरीयतया बोध्यते इत्यपि उक्तं प्रक्षालनं सरावाणां कारिकया। एवमेव

---

१. वाक्यपदीयम् द्वितीयो भागः—सरस्वतीभवन-ग्रन्थमाला ।

इदं गौणं, इदं मुख्यम्, इत्यादि निर्णयोपाया अपि दर्शिताः वाक्यादित्यनया। तथा च संसर्गविप्रयोगं साहचार्यादयः शब्दार्थं विशेषावगतिहेतवः इत्यपि प्रदर्शितं संसर्गोविप्रयोगश्चेत्यादि कारिकाभिः एवमेव अन्याऽपि विधाः द्रष्टव्या उक्तासु कारिकासु इत्यलं अतिविस्तरेण।

वस्तुतः व्याकरणदर्शनदिशा प्रतिभैव वाक्यार्थः इति वाक्य-वाक्यार्थयोः भेदं त्रयमिति च अंशद्वयं श्रीभर्तृहरिसम्मतं भवतां पुरस्तात् उपस्थाप्यते अत्र फाल्गुनपूर्णिमायां सम्वत् २०२५ वैक्रमे सारस्वतीसुषमायां मुद्रितात्। प्रकाशितायां प्रतिभावाक्यार्थं इति विषयमधिकृत्य श्री रामप्रसाद त्रिपाठी महोदयेन निर्मितात् निबन्धात् विशेषतः साहाय्यं गृहीतमस्ति। तथाहि—

## प्रतिभापदार्थः

अत्र प्रतिभेति[1] विधेयदलम्, वाक्यार्थ इति तूद्देश्यदलम्। तत्र प्रथमं तावत् प्रतिभापदार्थं एव विमृश्यते, अपूर्वं जिज्ञास्यत्वेन प्रधानत्वात्। तत्र प्रतिभात्यर्थोऽनया सा प्रतिभेति व्युत्पत्तौ प्रतिपूर्वकाद् भाधातोः करणेऽङ् प्रत्ययः 'आतश्चोपसर्गे' इति सूत्रेण। एवं चान्त.करणस्य बुद्ध्यभिधाना निश्चयात्मिका वृत्तिरेव प्रतिभेति प्रतिभाति। उक्तं च श्रीभर्तृहरिणा—

विच्छेदग्रहणेऽर्थानां प्रतिभाऽन्यैव जायते।
वाक्यार्थ इति तामाहुः पदार्थैरुपपादिताम्॥ इति[2]॥

---

१. मनोबुद्धिरहंकारश्चित्तं करणमान्तरम्।
संशयो निश्चयो गर्वः स्मरणं विषया इमे॥ वे० प०...

२. वाक्यपदीनम्—२ काडः १४४ श्लो०।

अत्र—"देवदत्तादिपदेभ्यो विच्छिन्नेभ्यस्तदर्थानां विच्छेदेनैव ग्रहणे प्रत्ययवेलायामेका प्रतिभा पदार्थमतिव्यतिरिक्तैव जायते, तां च वाक्यार्थं वैयाकरणा आहुः।" इति [1]टीकाकृदुक्त्या पदार्थमतिभिन्ना या वाक्यार्थमतिः सा प्रतिभेति स्फुटमायाति।

इयं च स्वसंवेदनसिद्धैव, इदं तदिति रूपेण प्रतिपन्नाऽपि निरूपयितुं न शक्या[2]।

नियतसाधनाऽवच्छिन्नक्रियाप्रतिपत्त्यनुकूला प्रज्ञा प्रतिभा, इति कमलशीलाचार्याः[3]।

प्रतिभा संस्कारविशेष इति मम्मटाचार्याः[4]।

समस्तलोकस्य नेत्रभूतः सकलेतिकर्तव्यतासम्पादकः प्रतिनियत-संस्कारजन्यः शक्तिविशेषः प्रतिभा, इति मण्डनमिश्राः[5]।

इदमित्थमनेन कर्तव्यमित्येवंरूपेतिकर्तव्यताजननी विच्छिन्न-प्रतिपत्तिकपदार्थोपश्लेषसम्पादकाऽऽसंविदितस्वभावा शब्दजन्या भावना प्रतिभा, इति वाचस्पतिमिश्राः।

प्रतिभानं प्रतिभेति भावेऽङ्प्रत्यये बुद्धेर्व्यापारविशेषः प्रतिभा, इति केचन शाब्दिकाः[6]। एवमेव नानाविधा प्रतिभा तत्र तत्र व्याख्याता।

---

१. वाक्यपदीयम्—२ काण्डः १४४ श्लो० पुञ्जराजकृता।
२. ,, २ ,, १४५ ,,।
३. तत्त्वसंग्रहः—पृ० २८६।
४. काव्यप्रकाशः
५. विधिविवेकः पृ० २४८।
६. 'आतश्चोपसर्गे; पा० सू० ( अ० ३—पा० ३ सू० १०६ )
७. ध्वन्यालोकलोचनम १—६। ध्वन्यालोके—४-६। व्यक्तिविवेकः पृ० १०८। काव्यकौतुके मा० च० कृते काव्ये।

## प्रतिभाभेदाः

एवं च बुद्धिविशेषरूपा, तज्जनकसंस्कारविशेषरूपा, तज्जन्यव्यापारविशेषरूपा वा त्रिविधा प्रतिभा ज्ञातव्या।

पुनः प्रकारान्तरेण सा षड्विधा। उक्तं च—

स्वभावचरणाभ्यासयोगादृष्टोपपादिताम्।
विशिष्टोपहितां चेति प्रतिभां षड्विधां विदुः॥ इति॥

अयं भावः—स्वाभाविकी प्रतिभा प्रथमा, यथा परस्याः प्रकृतेः प्रथमं सत्तालक्षणमात्मानं महान्तं प्रत्यानुगुण्यं सुषुप्तावस्थस्य प्रबोधाऽनुगुण्यमिव, फलसत्तामात्रं निद्रायाः। चरणनिमित्तिका प्रतिभा द्वितीया, यथा चरणेनैवावधृतप्रकाशविशेषाणां वशिष्ठादीनाम्। अभ्यासनिमित्तिका तृतीया, यथा कूपतटाकादिखनकानाम्। योगनिमित्तिका चतुर्थी, यथा योगिनामव्यभिचारेण पराभिप्रायज्ञानादिषु। अदृष्टहेतुका पञ्चमी, यथा रक्षःपिशाचादीनां परावेशान्तर्धानादिषु। विशिष्टैरुपहिता षष्ठी, यथा सञ्जयादीनां कृष्णद्वैपायनादिभिः।

एवं प्रतिभा बहुविधा वाक्यनिबन्धना वाक्यप्रतिपद्या च[1]। वस्तुतो भेदानां संकलनं नैव सम्भवति, प्रतिप्राणि प्रतिविषयं च प्रतिभानामानन्त्यात्।

## वाक्यवाक्यार्थयोर्भेदत्रयम्

एवं चेदानीं वाक्यवाक्यार्थावधिकृत्य पुनरपि तादृशं भेदत्रयं निरूप्यते।

---

१. वा० प०—का० २, कारि० १५३ टीका पु० कृता।

१—तत्र बाह्यं ध्वनिरूपं वाक्यम्, बाह्य एव घटादिरर्थो इति प्रथमः कल्पः।

२—आन्तरं स्फोटात्मकं वाक्यमान्तरो घटादिर्बाह्यघटादितादात्म्यमापन्नोऽर्थ इति द्वितीयः कल्पः।

३—आन्तरं स्फोटात्मकं वाक्यमान्तर एव वाक्यार्थः प्रतिभामात्रविषयः प्रतिभासमसमयश्च। द्वितीये तु कल्पेऽन्यसमयेऽपि पदार्थसत्ता इति विशेष इति तृतीयः कल्पः। अयमेव तृतीयः कल्पः 'प्रतिभा वाक्यार्थः', इति सिद्धान्तमनुपतिष्यति।

७. (क) तत्र प्रथमः कल्प आलोच्यते। अयमपि पक्षो महाभाष्ये निर्दिष्टोऽस्ति, 'अथवा प्रतिपदार्थको लोके ध्वनिः शब्द इत्युच्यते', इत्यादिना। इमे बाह्या अर्थाः प्रत्यक्षादिसिद्धा एव। तत्र जातिव्यक्तिलिंगसंख्याकारकाणि क्रियात्वक्रिये शब्दस्य स्वरूपं चेत्यादयो विशेषणविशेष्यभावो विशेष्यस्वरूपो वा संसर्गो वाक्यार्थं इत्युच्यते[1]।

तत्र शब्दस्य स्वरूपे या वृत्तिः सा तु स्वरूपत एव न तु धर्मविशेषपुरस्कारेण। उक्तं च—

अर्थस्वरूपे शब्दानां स्वरूपाद् वृत्तिरिष्यते। इति[2]।

वाक्यरूपस्य वाक्यार्थे वृत्तिरन्यानपेक्षया। इति च[3]।

समर्थः पदविधिरितिसूत्रभाष्यात्तु विषयताऽपि शब्दशक्येति स्फुटमायाति। तथाहि—'राजपुरुष इत्यत्र का तर्हि वृत्तिर्न्याय्या?

१. वै० सि० लघुमञ्जूषा—स्फोटनिरूपणम्।
२. वाक्यपदीयम्—२ का०—२६३ कारिका।
३. वाक्यपदीयम्—२ का०—२६४ कारिका।

जहत्स्वार्था इत्यभिधाय राजपुरुषमानय इत्युक्ते पुरुषमात्रस्यानयनं प्राप्नोति, इत्याशङ्क्य सिद्धान्तिनोक्तम्—नैष दोषः, जहदप्यसौ स्वार्थं नात्यन्ताय जहाति। यः परार्थविरोधी स्वार्थस्तं जहाति तद्यथा तक्षा राजकर्मणि प्रवर्तमानः स्वं तक्षकर्म जहाति, नतु हिक्कितहसितकण्डूयितानि। न चायमर्थः परार्थविरोधी विशेषणं नाम, तस्मान्न हास्यति, इति[1]।

'परार्थविरोधी, इत्यनेन हि राजरूपस्यार्थस्य पुरुषं प्रति विशेषणतयोपस्थितो राजरूपोऽर्थः स्वतो न विरोधी किन्तु तन्निष्ठं विशेष्यत्वादिकमेवेति विरोधित्वेन तदेव गृह्यते, त्याज्यते च।

विषयतायाः पदाशक्यत्वे तु न तत्त्यागेऽपि तस्याः स्वार्थत्वाभावाद् जहत्स्वार्था इति कथनं कथं संगच्छेत ?

अत्र पक्षे ध्वनिसमूहो वाक्यम्। बाह्य एव घटादिस्तस्यार्थः। अत्र बाह्य एवेत्येवकारेण आन्तरव्यावृत्तिः। अन्तरस्य स्वरूपमनुपदमेव वक्ष्यते।

७. ( ख ) आन्तरस्फोटरूपं वाक्यं ध्वनिव्यंगयमान्तर एवार्थस्तद्वाच्य इति द्वितीयः कल्प इदानीं क्रमप्राप्त आलोच्यते। तत्र शब्दस्य स्फोटरूपता पूर्वं प्रमाणितैव। तस्य आन्तरत्वं ध्वनिव्यङ्ग्यत्वं च किञ्चिद् विमृश्यते। तत्र अन्तरे बुद्धौ भव आन्तर इत्युच्यते। अत्र पक्षे शब्दस्य विभुत्वेऽपि ध्वनिरूपरूषितत्वेन परिच्छिन्नतया हृदयरूपदेशाऽवच्छिन्नाकाशसम्बद्धतया स्फोटस्यान्तरत्वम्। अयं भावः—चत्वारि वाक्परिमिता पदानि, तानि

---

१. पा० सू०—अ० २ पा० १ सू० १।

विदुर्ब्राह्मणा ये मनीषिणः। गुहा त्रीणि निहिता नेङ्गयन्ति, तुरीयं वाचो मनुष्या वदन्ति[1]। इति ऋङ्मन्त्रे परापश्यन्तीमध्यमा-वैखर्य्यंश्चतस्रो वाच उक्ताः। तत्र परा वाक् आत्मज्योतियेव तस्यां साक्षात्कृतायां तु मोक्षलक्ष्म्या अवाप्तिरेव

उक्तं च—

स्वरूपज्योतिरेवान्तः परा वागनपायिनी।
तस्यां दृष्टस्वरूपायामधिकारो निवर्तते[2] ॥ इति।

एषा च सर्वंगताऽपि प्राणिनां मूलाधारे संस्कृतपवनचलनेना-भिव्यज्यते। ज्ञातमर्थविवक्षोः पुंस इच्छया जातेन प्रयत्नेन योग एव मूलाधारस्थपवनसंस्कारः। तदभिव्यक्तं शब्दब्रह्म स्वप्रतिष्ठतया निष्पन्दं 'परा वाक्' इत्युच्यते। उक्तं च हरिणा—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रकृया जगतो यतः[3] ॥ इति।

तदेव नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्तं मनोविषयः 'पश्यन्ती' इत्युच्यते। एतद्द्वयं सूक्ष्मतमसूक्ष्मतरमीश्वराधिदैवं योगिनां निर्विकल्पकसविकल्पकज्ञानविषय इत्युचयते। तदेव हृदयपर्यंन्तमागच्छता तेन वायुना हृदयदेशेऽभिव्यक्तं तत्तदर्थत-त्तच्छब्दविशेषोल्लेखिन्या बुद्धया विषयीकृता हिरण्यगर्भदेवत्या परश्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा 'मध्यमा' वाणीत्युच्यते। सेव चास्यपर्यन्तमागच्छता तेन वायुना कण्ठदेशं गत्वा मूर्धानमाहत्य

---

१. उद्धृतः—म० भा०—नवाह्निकभागतः।
२. महाभारतम्।
३. वा० प० १ का० १ कारिका।

परावृत्य तत्तत्स्थानेष्वभिव्यक्ता पराश्रोत्रेणाऽपि ग्रहणयोग्या विराडधिदेवत्या 'वैखरी' वागित्युच्यते। तत्र मध्यमायां यो नादांशस्तस्यैव स्फोटरूपता[1]। मध्यमापाश्च हृदयदेशाऽवच्छिन्नाकाशधर्मतया स्फोटस्यान्तरत्वं स्फुटम्[2]। इदं च स्फोटतत्त्वम् अर्थवत्सूत्र[3] वचोऽशब्दसंज्ञायामिति सूत्रं च[4] विदधता भगवता पाणिनिना स्मर्यते। यदि स्फोटात्मकः शब्दो न स्यात्तर्हि अर्थविषयकबोधजनकतारूपा शक्तिः कुत्र तिष्ठेत्? तदाश्रयीभूतशब्दस्यासत्त्वे प्रातिपदिकसंज्ञाविधायकमर्थवत्सूत्रं किं कुर्यात्? एवमेवाशब्दसंज्ञायां 'वाच्यम्' शब्दस्य संज्ञायां 'वाक्यम्' इत्यभिप्रेत्य 'वचोऽशब्दसंज्ञायाम्' इति सूत्रकरणमपि स्फोटवादं व्यनक्ति। यतश्च वाक्यमेव शब्दो न तु वर्णो नाऽपि पदम्। तस्य निराकांक्षप्रतिपत्तिजनकत्वाभावात्। वाक्यस्याऽपि निराकांक्षप्रतिपत्तिजनकत्वं तु स्फोटवादमन्तरा कथं संघटेत? इति।

महाभाष्येऽपि "येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां संप्रत्ययो भवति स शब्दः" इत्यादिना।[5] बहुत्र[6] समर्थितोऽयं स्फोटवादः। अत्रोच्चारितेनेत्यस्य उच्चारितप्रकाशितेनेत्यर्थः कृतोऽस्ति भाष्यटीकायाम्[7]।

---

१. वै० सि० ल० म०—शक्त्याश्रयनिरू०।
२. वै० सि० ल० म०—स्फोटनिरू०।
३. अ० १ पा० २ सू० ४५।
४. अ० ७ पा० ३ सू० ६७।
५. म० भा०—नवा०—अ० १ पा० १ आ० १।
६. म० भा० नवा० अ० १ पा० १ सू० ६९।
७. ,, ,, ,, १ ,, १ आ० १ प्रदीपटीका।

श्रीहरिणा स्वीये वाक्यपदीये तु पदे पदे स्मारितोऽयं स्फोटवादः[१]।

अथ वाक्यार्थस्य आन्तरत्वं निरूप्यते। तत्रान्तरोऽर्थं इत्यनेन बुद्धिदेशस्थ इत्युच्यते। उक्तं च श्रीनागेशभट्टेन—'अर्थश्च बौद्ध एव ज्ञानविषय शक्तिग्रहविषयश्च। ज्ञानं च वृत्तिरूपं बुद्धिधर्म एव, इति[२]। अनेन ग्रन्थेनार्थस्य बुद्धिदेशस्थत्वं पूर्वमेव, पश्चात् शाब्दज्ञानविषयत्वमित्यायाति। उक्तं च श्रीहरिणाऽपि—

यो वाऽर्थो बुद्धिविषयो बाह्यवस्तुनिबन्धनः।
स बाह्यं वस्त्विति ज्ञातः शब्दार्थः सम्यगिष्यते॥
शब्दोपहितरूपांश्च बुद्धेर्विषयतां गतान्।
प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते॥इति[३]।

अत्राबहीरूपोऽपि बहीरूपतया अध्यस्त इति पुण्यराज[४]। अध्यासे बीजं चान्तःकरणस्य रागादिदोष एव। अत एव बाह्यार्थानयनमप्युपपद्यते। यत्र, हि आन्तरस्यार्थस्य बाह्यार्थेन सह संवादस्तत्र शब्दस्य प्रामाण्यम्, विसंवादे तु अप्रामाण्यमिति व्यवस्था।

उपदेशेऽजनुनासिक इदितिसूत्रे महाभाष्ये 'को देवदत्तः ?' इति प्रश्ने 'अङ्गदी कुण्डली व्यूढोरस्को वृत्तबाहुरीदृशो देवदत्तः'

---

१. वा० प०—का० १ कारि० १-७५-८१-८८।
२. सि० ल० मञ्जूषा—बौद्धार्थप्र०।
३. वा० प० का० २—कारि० १३४-। वा० प० का० ३-कारि०—५।
४. ,, ,, २ ,, १३४—टीका।
५. लघु मञ्जूषा—बौद्धार्थप्र०।

इत्युक्तम्[१]। तत्र एकस्यां व्यक्तौ भेदाभावादीदृश इति कथनं न युज्यतेऽन्येषां मते। अस्मन्मते तु एतैः शब्दैर्बुद्धौ यादृशोऽर्थो भासते तादृशो बाह्य इति व्याख्याने सर्वं समञ्जसं भवति। ईदृशतादृश-शब्दाभ्यां प्रत्यभिज्ञाविषयत्वं सुष्ठु प्रतिपाद्यते। हेतुमति चेति सूत्रे भाष्येऽपि 'कंसं घातयति' इत्येतदुपपादनाय 'तेषामुत्पत्तिप्रभृत्या-विनाशाद् ऋद्धीर्व्याचक्षाणाः सतो बुद्धिविषययान् प्रकाशयन्ति' इति कथनेन[२] बौद्धपदार्थसत्ता स्फुटं प्रतीयते। तत्र हि कथावाचकेन विदुषा बौद्धकृष्णद्वारा बौद्धकंसस्य बौद्धं हननं प्रतिपाद्यते।

एवमेव पंक्तिविंशति...इति सूत्रे मतुप्सूत्रादौ[४] च आन्तर-पदार्थस्य पर्याप्तचर्चाऽस्ति महाभाष्ये कैयटे च।

कार्यमात्रमुत्पत्तेः प्राङ् नाशोत्तरं चासदपि बुद्धिविषयतया सिद्धमेवेत्यर्थकम् 'बुद्धिसिद्धं तु तदसत्' इति सूत्रं[५] कुर्वता महर्षि-गोतमेनाऽपि उक्तविषये स्वसम्मतिर्दीयत एव।

किं च शशशृङ्गं नाऽस्तीत्यादौ बुद्धिसिद्धस्यैव शशशृङ्गस्य बाह्यसत्ता निषिध्यते। घटोऽस्ति, घटो नाऽस्ति इत्यादौ बुद्धिसत्तासमाविष्टस्य घटस्य बाह्यसत्तातदभावबोधनाय 'अस्ति नास्ति' इत्युभयोरुच्चारणं सार्थकं भवति।

---

१. म० भा०—१ अ० ३ पा०—२ सू०।
२. म० भा०—अ० १ पा० ३ सू० २६।
३. म० भा०—अ० ५ पा० १ सू० ५९।
४. म० भा०—अ० ५ पा० २ सू० ९४।
५. न्यायदर्शनम्, अ० ४—पा० १ सू० ५०।

७ (ग) अथ आन्तरं स्फोटात्मकं वाक्यमान्तर एव वाक्यार्थ इति तृतीयः सिद्धान्तपक्ष आलोच्यते। यत्र वाक्यार्थस्य प्रतिभामात्रविषयत्वं सुष्ठु सिध्यति।

अत्र श्रीवाचस्पतेरुक्तिं स्मृतिं च प्रमाणयति श्रीनागेशभट्टः[1]। तथा हि—चेतनो हि नामरूपे बुद्धावलिख्य घट इति नाम्ना कम्बुग्रीवादिरूपेण च बाह्यं घटं निष्पादयति। निर्वर्त्यस्याऽपि अन्तःसंकल्पात्मना सिद्धस्य घटस्य कर्मकारकत्वं 'घटं करोति' इत्यादौ। यदाहुः—बुद्धिसिद्धं तु तदसत्, इति[२]। तथा हि—चित्तस्य द्रव्यरूपो वृत्त्याख्यः परिणामः। इन्द्रियप्रणाल्या निर्गत्य चित्तं विषयेण संयुज्य सूक्ष्मावस्थारुपविषयवासनावशात् तत्तद्विषयाकारेण परिणमति, नतु तस्यां बाह्यविषयप्रतिबिम्बः। स्वप्नादौ बाह्यविषयाभावेन तत्प्रतिबिम्बासम्भवात्।

उक्तं च—

विप्र! पृथिव्यादि चित्तस्थं न बहिष्ठं कदाचन।
स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयते।। इति[३]।

किं चात्र पक्षे इदं रजतमित्यादिभ्रमस्थले सन्निकृष्टस्य प्रतिभासमात्रशरीरस्यैव रजतादेरारोपः शुक्त्यादौ, न तु दूरस्थस्य हट्टस्थस्य इत्यपि महल्लाघवमस्ति।

---

१. सि० ल० मञ्जूषा—बौद्धार्थप्र०।
२. न्या० द०—अ० ४—पा० १—सू० ५।
३. सि० ल० म०—बौद्धार्थप्र०।
३. ,, ,,—,,

## वैयाकरणभूषणसारमते वाक्यार्थस्वरूपम्

इत्थं च प्रचतीत्येकाऽऽश्रयिका पाकाऽनुकूला भावना। पच्यते इत्यैकाऽऽश्रया या विक्लित्तिस्तदनुकूला भावनेति बोधः।

---

प्रभा—कर्त्तृप्रत्यते तिङर्थकर्तुः कालस्य च धात्वर्थव्यापार-विशेषणत्वं, तिङर्थसंख्यायास्तिङर्थकर्तृविशेषणत्वे कर्माख्याते तृतीयार्थकर्तुः, तिङर्थकालस्य च धात्वर्थव्यापारविशेषणत्वे संख्यास्तिङर्थकर्मविशेषणत्वे कर्मणश्च धात्वर्थफलविशेषणत्वे, फलस्य च धात्वर्थव्यापारविशेषणत्वे चेत्यर्थः। एकाऽऽश्रयिकेति—समवायसम्बन्धेनैकविशिष्टो य आश्रयस्तन्निष्ठा वर्तमानकाला-वाच्छिन्ना विक्लित्यनुकूला भावनेति बोधः। पच्यत इतिसमवाय-सम्बन्धेनैकत्वविशिष्टो यः कर्मरूप, आश्रयस्तन्निष्ठा या विक्लत्ति-स्तदनुकूला देवदत्ताभिन्नकर्तृनिष्ठा वर्तमान कालावच्छिन्ना भावनेति बोधः। नवीनमते कर्मणि तिङिधात्वर्थव्यापारः फले जन्यत्वसम्बन्धेन विशेषणम्। पक्वः इत्यादौ कर्मणि कृति फूत्कारादिव्यापारजन्यविक्लत्याश्रयः' इति बोधानुसारेण व्यापारम्प्रति फलस्य प्राधान्यदर्शनात् कर्मतिङमपि फलस्यैव विशेष्यत्वमुचितम्। अतएव 'इष्यते पुत्रः' 'इष्टः पुत्रः' इत्यर्थे पुत्रीयति इति न प्रयोगः भिन्नार्थत्वात्। किन्तु पुत्रामिच्छतीत्यर्थे एव 'क्यच्' इति 'सुप' आत्मनः' इति सूत्रे भाष्यम्। भिन्नार्थत्व-श्चैकत्र फलप्राधान्यम्, अपरत्र व्यापारस्येति नव्याः।

देवदत्तादिपदप्रयोगे स्वाख्यातार्थकर्त्रादिभिस्तदर्थस्याऽभे-दान्वयः। 'घतो नश्यति' इत्यत्र घटाऽभिन्नाऽऽश्रयको नाशाऽनुकलो व्यापार इति बोधः प्रतियोगित्वविशिष्टनाशसामग्रीसमवधानम्

अत एव तस्यां सत्यां नश्यति तदत्यन्ते 'नष्टः' तद्भावित्वे नङ्क्ष्यतीति प्रयोगः। 'देवदत्तो जानाति' इच्छतीत्यादौ च देवदत्ताऽभिन्नाऽऽश्रयको ज्ञानेच्छाद्यनुकूलो वर्तमानो व्यापार इति बोधः।

---

प्रभा—कर्त्तरितिङि अभेदेन देवदत्तादेः प्रथमान्तस्यार्थस्य तिङर्थाऽऽश्रयेऽन्वयः। कर्मणि तिङि तण्डलादेस्तिङर्थाश्रयेऽन्वयः। तत्र 'देवदत्तेन' इत्येतद्घट कतृतीयार्थंकर्तरि प्रकृत्यर्थं देवदत्तस्या भेदेनान्वयः। कर्तृश्रनिष्ठत्वंसम्बन्धेन धात्वर्थं व्यापारेऽन्वयः। सकर्मकधातूना फलव्यापारोभयवाचकत्वं व्यवस्थाप्याकर्मकाणामप्युभयवाचकत्वमावश्यकमित्यभिपात्रेण तत्स्थलीयबोधाकारमाह—घटो नश्यतीति।

सर्वविषभक्त्यर्थं विषयीकृत जायमानः शाब्दबोधः कीदृशः इत्यत्र वैयाकरणमतम्—

देवदत्तस्य गौर्ब्राह्मणाय गेहाद् गङ्गायाम् हस्तेन मया दीयते। इत्यत्र देवदत्त सम्बन्धिनी या गौस्तदभिन्नाश्रयकृत्यागानुकूलो ब्राह्मणोद्देश्यको गेहनिष्ठविभागजनको गङ्गाधिकरणको हस्तकर-

प्रभा—तथा च देवदत्तत्वावच्छिन्न स्वस्वामिवच्छिन्ना या विशेष्यता तादृशविशेष्यतावच्छिन्ना या प्रकारता तादृशप्रकारतानिरुपिताऽऽश्रयत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यत्वावच्छिन्ना आश्रयत्वावच्छिन्ना स्वरूपसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता स्वस्वत्वध्वंससमानाधिकरणपरस्वत्वत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यत्वावच्छिन्नोक्त स्वस्वत्वावच्छिन्नाऽनुकलत्वसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारता-

निरुपिता, (१) ब्राह्मणत्वावच्छिन्ना अभेदसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरुपिता उद्देश्यत्वावच्छिन्ना या विशेष्यता तादृशविशेस्यत्वावच्छिन्ना उद्देश्यत्वावच्छिन्ना निरूपकत्वसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता, (२) गेहत्वावच्छिन्नाऽऽधेयसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता विभागत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यत्वावच्छिन्ना विभागत्वावच्छिन्ना जमकत्वसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता, (३) भगीरथरथ्यातावच्छिन्नजलप्रवाहत्वावच्छिन्ना (गङ्गात्वावच्छिन्ना) अभेदशम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता अधिकरणत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यत्वावच्छिन्ना अधिकरणत्वावच्छिन्ना निरूपकत्वसम्बन्धावछिन्ना या प्रकारता-तादृशप्रकारतानिरूपिता (४) हस्तत्वावच्छिन्ना भेदसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता करणत्वावच्छिन्न निरूपकत्वसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारता तादृशप्रकारतानिरूपिता, (५) अस्मदर्थत्वावच्छिन्नाऽभेदसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिताऽऽश्रयत्वावच्छिन्नाऽऽश्रयवत्वाच्छिन्नाऽऽधेयत्वसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता, (६) च वर्तमानकालावच्छिन्नव्यापारत्वावच्छिन्नविशेष्यताशालीति परिष्कृतो बोध इति पञ्चोलिनः।

—वैयाकरणभूषणसारः—प्रभा समुल्लिसितः २२८।

———

# लक्षणाशक्ति-विमर्शः

अत्र प्रथमं वृत्तेर्लक्षणं तस्याः भेदाश्च मतभेदप्रदर्शनपुरःसरमुत्थाप्यन्ते।

स्वशक्यसंबन्धत्वं लक्षणा। तस्माच्च पदनिष्ठत्वं स्वाश्रयसंबन्धिवाचकत्वसम्बन्धेन। यथा 'गङ्गायां घोषः' इत्यादौ गङ्गापदशक्यप्रवाहसंबन्धो लक्षणा। तज्ज्ञानकार्यतावच्छेदकं च गङ्गासम्बन्धवत्तीरत्वप्रकारकतीरविशेष्यकशाब्दत्वम्। गङ्गासम्बन्धस्य सम्बन्धत्वेन भानं संयोगत्वादिना वा 'गङ्गासम्बन्धितीरे घोषः' 'गङ्गासंयुक्ततीरे घोषः' इत्युभयविधानुभवात्। एवं 'सिंहो देवदत्तः' इति बोधे लक्षणैव। 'अभिधेयाविनाभूते' इत्यस्यापि अभिधेयसम्बधेन यत्र प्रकारः तत्र वृत्तिर्लक्षणा इत्यर्थः। न चैवं तीरत्वमात्रप्रकारको बोधः कथं स्यादिति वाच्यम्। नदीतीरे समुद्रतीरे वा इति संदेहापत्त्या तादृशं बोधस्य अलीकत्वात्।

न चैवं सर्वत्र गङ्गासम्बन्धिनी इति बोधात् अजहल्लक्षणापत्तिः। शक्यलक्ष्योभयस्य क्रियान्वयित्वे अजहल्लक्षणाङ्गीकारात् इति सम्प्रदायः। वस्तुतो गङ्गापदात् तीरत्वमात्रप्रकारकः बोधः।

तीरत्वनिष्ठ-प्रकारतानिरूपितविशेष्यतासम्बन्धेन गङ्गापदजन्य-शाब्दे, समवायेन, गङ्गासंयोगवत्त्वज्ञानस्य हेतुत्वकल्पनया न संशयाद्यापत्तिः इति युक्तम्।

सा च लक्षणा द्वेधा। अजहत्स्वार्था जहत्स्वार्था च। स्वशक्यार्थं—विशेष्यकान्वयबोधप्रयोजिका अजहत्स्वार्था। यथा 'यष्टीः प्रवेशय।' इत्यादौ। अत्र शक्यार्थस्यापि क्रियान्वयात्। इयमेव उपादानलक्षणा इत्यालंकारिकाः। स्वशक्यार्थाविशेष्य-कान्वयप्रयोजिका जहत्स्वार्था 'गङ्गायां घोषः'। लक्षितलक्षणाऽपि अत्रैवान्तर्भूता। स्ववाच्यपदघटकवर्णद्वयघटितपदवाच्यत्वरूप-सम्बन्धस्यैव द्विरेफादिपदे लक्षितणात्वात्। एतेन, द्विरेफपदेन भ्रमरपदं लक्ष्यते। तेन शक्त्या भ्रमरबोधः इत्यपास्तम्। द्विरेफपदोत्तर विभक्त्यर्थस्य अन्वयापत्तेः।

'तत्त्वमसि' इत्यादौ जहदजहल्लक्षणा च तृतीया इति वेदान्तिनः।

लक्ष्यतावच्छेदके न लक्षणा इति प्राञ्चः। गोत्वविशिष्टशाब्दे गोत्वविशिष्टशक्तिग्रहस्य हेतुत्ववत् तद्विशिष्टशाब्दे तद्विशिष्टवृत्ति-ज्ञानस्य हेतुत्वात् तत्रापि लक्षणा युक्ता इति नव्याः। लक्षणाबीजं शक्यार्थान्वयानुपपत्तिः, न तु तात्पर्यानुपपत्तिः, वेदे तदसम्भवात्। 'यष्टीः प्रवेशय' इत्यादौ तु प्रवेशनपदस्य भोजनप्रयोजकप्रवेशन-परत्वग्रहात् अन्वयानुपपत्तिरेव। वस्तुतः मुख्यार्थानुपपत्तिज्ञानं मुख्यार्थबाधे प्रतिबन्धकं न लक्ष्यार्थबोधकारणम्। लाक्षणिकस्थले गङ्गापदेन तीरपदस्मृतिः, तेन तीरस्मृतिः इति प्राञ्चः। तन्न। गङ्गापदात् तीरानुपस्थितौ तत्र विभक्त्यार्थान्वयो न स्यात्। अतः

तीरोपस्थापकत्वेऽपि नानुभावकत्वम्, तीरान्वयबोधे तीरान्वय-प्रतियोगिशक्तपदज्ञानत्वेन हेतुताङ्गीकरणात्। शक्तपदान्तरादेव तीरान्वयानुभवस्य युक्तत्वात्। सर्वंलाक्षणिकस्थले तु न बोध इति दिक्। मणि. पृ० ७५-७६. लक्षणाऽपि च या दृष्टपूर्वा तस्यामेव शीघ्रतरबुद्धिर्भवति। वा० ३।३।१।३ पृ० ८०७ लक्षणाऽपि शब्दवृत्तिप्रकारएव। सु० पृ० ७२७ लक्षणाऽपि हि प्रवृत्तिविशेषकरत्वात् अर्थंवती। यथा 'अग्नौ तिष्ठति' 'अवटे तिष्ठति' इति।

तथा न्यायसुधाकृताऽपि अर्थंवादाधिकरणे लिङः प्रवर्तना-सामान्ये शक्तिमुपपाद्य प्रवर्तनासामान्यस्य वाच्यत्वे अवगते तद्विशेषाकाङ्क्षायां प्रैषादीनां पुरुषधर्माणां वेदेऽनुपपत्तेः तद्विलक्षणं विशेषान्तरं अभिधेयेन सामान्येन विधिप्रेरणानियोगाख्यं लक्ष्यते इति। अत्र वाच्यप्रवंतनासामान्यधर्मं एव लक्षणा इत्युक्तं न शब्दधर्मं इति।[१]

मीमांसकानां मते तु लक्षणायाः इदं स्वरूपम्—

ज्ञाप्यसम्बन्धेनोद्बुद्धशक्तिसंस्कारतो बोधे लक्षणा 'गभीरायां नद्यां घोषः' इत्याद्यनुरोधात्। तथा हि—न तावद् 'गभीर' पदं तीरलक्षकम् 'नद्याम्' इत्यनन्वयापत्तेः। न हि तीरं नदी। अत एव न नदीपदेऽपि, गभीरपदार्थानन्वयात्। न हि तीरं गभीरम्। न च पदद्वये प्रत्येकं सा, विशिष्टनदीतीराप्राप्तिप्रसङ्गात्। न च 'नदी' पदेन गभीरनदीतीरं लक्ष्यते, 'गभीर' पदं तात्पर्यग्राहकमिति वाच्यम्, विनिगमनाविरहात्। न च 'नदी' पदस्य द्रव्यवाचकतया

१. मीमांसाकोषः, लक्षणा पृ० ३३–४०।

साक्षात्सम्बन्धानुरोधेन तत्रैव सेति वाच्यम्, 'गभीर' पदस्यापि नित्यं गुणिवाचकतया तेनापि साक्षात्सम्बन्धस्यैव सत्त्वात्। अतः समुदाये साऽङ्गीकार्या। अत एवार्थवादवाक्यानां प्राशस्त्ये लक्षणासिद्धिः। अपभ्रंशेष्वपि लक्षणा इष्टैव। अतएव लक्ष्यस्य व्यञ्जतायां 'सोहेन्ती' इत्याद्युदाहरणं प्रकाशकारैर्दत्तम्, तस्यापि शक्तत्वाच्च। ज्ञापकत्वञ्च 'अर्थबोधकतापर्य्याप्त्यधिकरणत्वम्' इति न प्रत्येकं वर्णेषु सा। लक्ष्यताऽवच्छेदकत्ववल्लक्षकताऽवच्छेदकत्वस्यापि गुरुभूतायां पदघटितानुपूर्व्यां स्वीकारे बाधकाभावः। ज्ञापकताशरीरे ज्ञानं च शाब्दबोधरूपमेव निविष्टमिति न। शब्दसमवायेन घटादिपदज्ञाप्याकाशस्य शक्तिं विनाऽप्युपस्थितस्य शाब्द (बोध) विषयत्वम्। अतएव 'क्षत्रिणो यान्ति' इत्यादौ क्षत्रिपदस्यैकसार्थवाहित्वेन क्षत्र्यक्षत्रिसमुदाये लक्षणेति सामासादिवृत्तौ विशिष्टशक्तिमनङ्गीकुर्वन्तोऽपि वृद्धा आहुः[1]।

वैयाकरणानां मते तु लक्षणा एतद्रूपेण वर्णिता अस्ति तस्य सूक्ष्मः प्रकारः अधस्तात् प्रदर्श्यते—आरोपितशक्यताऽवच्छेदक-

---

'शक्यसम्बन्धो लक्षणा' इति स्वीकारे वाक्ये लक्षणा न सम्भवति तत्र शक्तेरभावादिति। मीमांसकमतमाहस्वज्ञाप्य सम्बन्धो लक्षणा। एवञ्च वाक्यार्थस्यापि वाक्यज्ञाप्यत्वात् तत्र लक्षणा सिध्यतीति भावः[2]।

---

१. वैयाकरण सिद्धान्तलघुमञ्जूषा पृ० १०८।

२. रत्नप्रभा पृ० १०६।

रूपेण शक्त्यैव तत् पदवाच्यत्वेन प्रसिद्धान्यव्यक्तिबोधे, व्यक्तिविशेषबोधे वा लक्षणेति व्यवहारः। 'क्षत्रिणो यान्ति' इत्यादावप्यक्षत्रिषु साहचर्यात्क्षत्रित्वारोपः। 'काकेभ्यो दधि' इत्यादावपि दध्युपघातकमात्रे काकत्वारोपः। 'कमलानि कमलानि' इत्यादौ कमलत्वेनैव व्यक्तिविशेषबोधः। 'त्वामस्मि वच्मि' इत्यादौ सम्बोध्यत्वादिनैवोपदेश्यत्वाद्यवस्थाविशिष्टतत्तद्व्यक्तिबोधो लक्षणया। अत्र पौनरुक्त्याद् विशेषानाधायकत्वाद्वा तात्पर्यानुपपत्तिः, सामान्यविशेषभावः सम्बन्धः। अतएव "पुंयोगादाख्यायाम" (पा० सू० ४।१।४८) इति सूत्रे भाष्ये 'गोपी' इत्यादौ गोपसम्बन्धिस्त्रीत्वेन लक्षणायाम् "तस्येदम्" (पा० सू० ४।३।१२०) इति शास्त्रेण तादृशेऽर्थेऽण्प्रत्ययान्तस्यैव तादृशवाक्यस्यैव तादृश—वाक्यस्यैव वा साधुत्वनियमादसाधुत्वापत्ति दूषणमभिसंधाय "नावश्यमत्रमेवाभिसम्बन्धो भवति तत्रेदमिति, किन्तु तन्मूलकः सोऽयमित्यप्यभिसम्बन्धोऽस्ति" इत्युक्त्वा "चतुर्भिः प्रकारैः तस्मिन् स इत्येतद्भवति, तात्स्थ्यात्, ताद्धर्म्यात्, तत्सामीप्यात्, तत्साहचर्य्यात्। मञ्चा हसन्ति, सिंहो माणवकः, गङ्गायां घोषः, यष्टीः प्रवेश" (महाभा० ४।१।४८) इत्युक्तम्। कैयटोऽप्याह—"आरोप्यते ताद्रूप्यम्, न तु मुख्यम्। बालेषु मञ्चत्वाऽरोपान्यञ्चपदप्रवृत्तिः 'हसन्ति' इति पदान्तरप्रयोगाद् विज्ञायते" (महाभा० प्र० ४।१।४८) इति। सोऽयमपीत्यादेः 'सोऽयं' इत्यपि विशेष्यविशेषणभावोऽस्तीत्यर्थः। न च 'गङ्गायां घोषः' इत्यादावारोपितगङ्गात्वेन बोधेऽपि तस्य ज्ञानस्य भ्रमत्वाच्छास्त्रज्ञानवतां सर्वथा भ्रमत्वेन ग्रहाच्च तदुत्तरं गङ्गागतशैत्यपावनत्वादिप्रतीतिरूपं फलं न सिध्येत्, अतएव शुक्तौ रजतज्ञाने

भ्रमत्वज्ञानवतो न प्रवृत्तिरिति वाच्यम्, मध्ये व्यञ्जनया मुख्यगङ्गा-पदार्थाभेदस्यापि प्रतीतेः। व्यञ्जनाजन्यज्ञाने च बाधज्ञानेन नाप्रामाण्यग्रह इत्यदोषात्। वस्तुतस्तु शाब्दानुपपत्तिमूलकारोपितार्थंबोधे बाधज्ञानेन नाप्रामाण्यग्रहो जन्यते। अतएव 'पचति' इत्यादिजबोधे नाप्रामाण्यग्रहो, तथा सत्यनुपपत्तिपरिहाराभावादित्यग्रे निरूपयिष्यामः।

---

सामीप्यादिसम्बन्धमूलकशक्यताऽवच्छेदकारोप एव लक्षणा। तथा च 'गङ्गा' पदशक्यताऽवच्छेदकप्रवाहविशेषत्वस्य तीरे आरोपात् तीरस्यापि प्रवाहविशेषत्वेनैव बोध इति भावः। तदुक्तं हरिणा—

"अर्थमात्रं विपर्य्यस्तं शब्दः स्वार्थे व्यवस्थितः।"

(वाक्यप० कां० २ कारि० २५०)

एवञ्च शक्यस्यैव बोधान्न लक्षणाप्रयुक्तकार्यकारणभावान्तरं कल्पनीयम्। प्रसिद्धेति—तत्पदवाच्यत्वेन प्रसिद्धो यस्तद्भिन्नो योऽप्रसिद्धस्तटादिस्तद्रूपव्यक्तिबोधे प्रसिद्धत्वविशिष्टव्यक्तिविशेषबोधे वा लक्षणेति व्यवहारः। गङ्गादिपदस्य प्रसिद्धोऽर्थः प्रवाहविशेषादिः, अप्रसिद्धस्तटादिरिति भावात्। प्रसिद्धत्वञ्च पदान्तरासमभिव्याहारेऽपि तज्जन्यप्रतीतिविषयत्वम्, तच्च प्रवाहादावेव न तु तटादौ। व्यक्ति विशेष इति—'कमलानि कमलानि' इत्यादौ सौरभविशिष्टस्यैव कमलत्वेन बोधः। 'कमल' पदस्य कमलत्वावच्छिन्नविषयकबोधजनकत्वेऽपि कमलत्वव्याप्यधर्मावच्छिन्नस्य बोधो लक्षणयैव। एतेन 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इत्यपास्तम्।[1]

---

१, रत्नप्रभा, वैयाकरणसिद्धान्तमघुमञ्जूषा पृ० ११३.

काव्यप्रकाशकृतस्तु लक्षणाविषये स्वमतमित्थमुद्भावयन्ति—

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।
अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया ॥६॥

---

पुंयोगादाख्यायाम् (४।१।४८) इति सूत्रमहाभाष्योक्ते 'गङ्गायां घोषः' 'कूपे गर्गकुलम्' इत्याद्युदाहरणे वाच्यार्थस्य (प्रवाहादिरूप शक्यार्थस्य घोषाद्यधिकरणत्वाद्यसम्भवरूपे बाधे सति। यद्वा अनुपपत्तिरूपे बाधे सति। वस्तुतस्तु बाधे तद्रूपेण वक्तृतात्पर्याविषयत्वे सतीत्यर्थः । तद्योगे तस्य (प्रत्यक्षादिप्रमाणेन बाधितस्य) मुख्यार्थस्य योगे सम्बन्धे। साक्षात्सम्बन्धे इत्यर्थः। अमुख्येन लक्षणीयेन तटादिनार्थेन सह सामीप्यादिरूपसाक्षात्सम्बन्धे सतीतियावत् । रूढितः प्रसिद्धेः। प्रयोगप्रवाहादित्यर्थः। अथेति विकल्पे। प्रयोजनात् शैत्यपावनत्वादिप्रतीतिरूपफलात् (प्रवाहादिरूपमुख्यार्थगतस्य शैत्यपावनत्वादिरूप धर्मस्य तटादिरूपलक्ष्यार्थे या प्रतीतिर्ज्ञानं तद्रूपात्फलादिति भावत्। यथा अन्योऽर्थः तदादिरूपं यावत्। लक्ष्यते प्रतिपाद्यते सा (वृत्तिः) लक्षणेत्युच्यते इत्यर्थः। अन्योऽर्थो यत् लक्ष्यते यत् प्रतिपाद्यते सा लक्षणेत्यन्वयः। अन्यार्थप्रतिपत्तिहेतुः शब्दव्यापारो लक्षणेत्यर्थः। सा च लक्षणा शक्यतावच्छेदकारोपरूपा शक्यसम्बन्धरूपा वा वक्तृतात्पर्यरूपा वेत्यन्यदेतत्। आरोपितेति क्रियेति च न लक्षणघटकम्, किन्तु लक्षणास्वरूपकथनपरम्। सा हि, आरोपिता मुख्यार्थव्यवहितलक्ष्यार्थविषयकत्वात् शब्दे कल्पिता। साक्षात्सम्बन्धेन मुख्यार्थनिष्ठा

परम्परासम्बन्धेन तु शब्दनिष्ठेरयर्थः। यत् लक्ष्यते यत् प्रतिपाद्यते सा प्रतिपत्तिरेव लक्षणेति कैश्चिदाख्यातम्, तदज्ञानविजृम्भितम्।

यद्यपि 'काकेभ्यो दधि रक्ष्यताम्' 'क्षत्रिणो यान्ति' इत्यादौ न मुख्यार्थस्य बाधः, तथापि वक्तृतात्पर्यविषयवाक्यार्थबोधाभावोऽभिप्रेतः। आद्ये उपघातकत्वेनैव मुख्यार्थस्यान्वयो न तु काकत्वेन। अन्त्येचैकसार्थप्रवृत्तत्वेनैव मुख्यार्थस्यान्वयो न तु क्षत्रित्वेनेति नाव्याप्तिः। यत्र तु काकमात्रे तात्पर्यं तत्र नैव लक्षणा। एतेन तात्पर्यानुपपत्तिरेव लक्षणाबीजम्, नत्वन्वयानुपपत्तिरिति सूचितम्। यद्यपि 'यष्टीः प्रवेशय' 'गङ्गायां घोषः' इत्यादौ, उभयापेक्षा दर्शनाद् विनिगमनाविरहः, तथापि 'गङ्गायां घोषः' इत्यत्र वक्तृतात्पार्यभावे घोषपदे, एव मीने लक्षणा किं न स्यात्। कुतश्च गङ्गापदेऽपि स्वार्थसम्बन्धिनौकादौ न लक्षणा ? तावताप्यन्वयानुपपत्तिशान्तेः। अतस्तात्पर्यानुपपत्तिरेव लक्षणाबीजमित्याहुः। उक्तं च परमलघुञ्जूषायां नैयायिकमतानुवादावसरे नागोजीभट्टैः "शक्यसम्बन्धो लक्षणा। अन्वयाद्यनुपपत्तिप्रतिसंधानं च लक्षणाबीजम्। वस्तुतस्तु तात्पर्यानुपपत्तिप्रतिसंधानमेव लक्षणाबीजम्। अन्यथा 'गङ्गायां घोषः' इत्यत्र घोषपदे। एव मकारादि लक्षणापत्तिः, तावताप्यन्वयानुपपत्तिपरिहारात्। 'गङ्गायां पापी गच्छति' इत्यादौ गङ्गादिपदस्य नरके लक्षणापत्तेश्च। अस्माकं तु भूतपूर्वपापावच्छिन्न लक्षकत्वे तात्पर्यान्न दोषः।

'कर्मणि कुशलः' इत्यादौ दर्भग्रहणाद्ययोगात् 'गङ्गायां घोषः' इत्यादौ च गङ्गादीनां घोषाद्याधारत्वासंभवात् मुख्यार्थस्य बाधे विवेचकत्वादौ सामीप्ये च सम्बन्धे रूढितः प्रसिद्धे, तथा गङ्गातटे

घोष इत्यादेः प्रयोगात् येषां न तथा प्रतिपत्तिः, तेषां पावनत्वादीनां धर्माणां तथा प्रतिपादनात्मनः प्रयोजनाच्च मुख्येन अमुख्योऽर्थो लक्ष्यते यत् स आरोपितः शब्दव्यापारः सान्तरार्थ निष्ठो लक्षणा।

---

स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम्।
उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा॥ १०॥

'कुन्ताः प्रविशन्ति' 'यष्टयः प्रविशन्ति' इत्यादौ कुन्तादिभिरात्मनः प्रवेशसिद्ध्यर्थं स्वसंयोगिनः पुरुषा आक्षिप्यन्ते। तत् उपादानेनेयं लक्षणा। "गोरनुलन्ध्यः" इत्यादौ श्रुतिचोदितमनुबन्धनं कथं मे स्यादिति जात्या व्यक्तिराक्षिप्यते न तु शब्देनोच्यते "विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे" इति न्यायादिव्युपादानलक्षणा तु नोदाहर्त्तव्या। न ह्यत्र प्रयोजनमस्ति न वा रूढिरियम्। व्यक्त्यविनाभावित्वात्तु जात्या व्यक्तिराक्षिप्यते। यथा क्रियतामित्यत्र कर्त्ता। कुर्वित्यत्र कर्म। प्रविश पिण्डीमित्यादौ गृसं यक्षयेत्यादि च।

'पीनो देवदत्तोदिवा न भुङ्क्ते' इत्यत्र च रात्रिभोजनं न लक्ष्यते श्रुतार्थापत्तेरर्थापत्तेर्वा तस्य विषयत्वात्। 'गङ्गायां घोषः' इत्यत्र तटस्य घोषाधिकरणत्वसिद्धये गङ्गाशब्दः स्वार्थमर्पयति, इत्येवयादौ लक्षणेनैषा लक्षणा। उभयरूपा चेयं शुद्धा। उपचारेणामिश्रितत्वात्। अनयोर्लक्ष्यस्य लक्षकस्य च न भेदरूपं तातस्थ्यम्। तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्वप्रतिपत्तौहि प्रतिपादयिषितप्रयोजनसंप्रत्ययः। गङ्गासम्बन्धमात्रप्रतीतौ तु गङ्गातटे घोष इति मुख्यशब्दाभिधानाल्लक्षणायाः को भेदः।

सारोपान्या तु यत्रोक्तौ विषयी विषयस्तथा ।
आरोप्यमाणः आरोपविषयश्च यत्रानपह्नुतभेदौ ॥
सामानाधिकरण्येन निर्दिश्येते सा लक्षा सारोपा ।
विषय्यन्तः कृतेऽन्यस्मिन् सा स्यात्साध्यवसानिका ॥

विषयिणारोप्यमाणेनान्तः कृते निगीर्णे, अन्यस्मिन्नारोपविषये सति साध्यवसाना स्यात् ।

भेदाविमौ च सादृश्यात्संबन्धान्तरतस्तथा । गौणौ शुद्धौ च विज्ञेयौ ।

इमावारोपाध्यवसानरूपौ सादृन्यहेतू भेदौ 'गौर्वाहीकः' यत्यत्र 'गौरयम्' इत्यत्र च अत्र हि स्वार्थसहचारिणो गुणा जाड्य-मान्द्यादयो लक्ष्माणा अपि गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमि-त्तत्वमुपयान्ति, इति केचित् । स्वार्थसहचारिगुणाभेदेन पदार्थगता गुणा एव लक्ष्यन्ते न परार्थोऽभिधीयते, इत्यन्ये । साधारणगुणाश्र-यत्वेन परार्थ एव लक्ष्यते, इत्यपरे । उक्तं चान्यत्र 'अभिधेयावि-नाभूत प्रतीतिलक्षणोच्यते । लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता' । अविनाभावोऽत्र सम्बन्धमात्रं न तु नातरीयकत्वम् । तत्वे हि मञ्चाः क्रोशन्ति इत्यादौ न लक्षणा स्यात् । अविनाभावे-चाक्षेपेणैव सिद्धेर्लक्षणाया नोपयोग इत्युक्तम् । 'आयुर्घृतम्' 'आयुरेवेदम्' इत्यादौ च सादृश्यादन्यत् कार्यकारणभावादि संबंधान्तरम् । एवमादौ च कार्यकारभावादिलक्षणपूर्वेऽपि ताद्रूप्यप्रतीतिः सर्वत्रैवाभेदावगमश्च प्रयोजनम् । शुद्धभेदयोस्त्व-न्यवैलक्षण्येनाव्यभिचारेण च कार्यकारित्वादि । क्वचित् तादर्थ्या-दुपचारः । यथा, इन्द्रार्था स्थूणां, इन्द्रः । क्वचित् स्वस्वामिभावात् ।

यथा, राजकीयः पुरुषो राजा। क्वचित्, अवयवावयविभावात्। यथ, अग्रहस्त इत्यत्राग्रमात्रेऽवयवे हस्तः। क्वचित् तात्कर्म्यात्। यथा, अतक्षा तक्षा।

---

अत्राहुरुद्योतकाराः—"परे तु शक्यतावच्छेदकारोपेण शक्यतावच्छेप्रकारक एव तीरादिबोधो लक्षणायामिति गौतमसूत्रे पुंयोगादिति पाणिनिसूत्रे महाभाष्ये च स्पष्टमिति निरूपितं मञ्जूषायाम्। न च गंगात्वादिनैव तीरबोधः। न चारोपित गङ्गात्वेन बोधेऽपि तस्य ज्ञानस्य भ्रमत्वात् शास्त्रज्ञानवतां सर्वथा तत्वेन ग्रहाच्च तदुत्तरं गङ्गागतशैत्यपावनत्वप्रतीतिरूपं प्रयोजनं न सिध्येत्। अतएव शुक्तिरजतज्ञाने भ्रमत्वग्रहे तत्र न प्रवर्तते, इति वाच्यम्। मध्ये व्यञ्जनया मुख्यगङ्गापदार्थाभेदस्य प्रतीतेः। व्यञ्जनाजन्यज्ञाने च बाधज्ञानेन नाप्रामाण्यग्रह इति न दोषः। तदुक्तं ( ४६ पृष्टे ) 'तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्वप्रत्तिपत्तौ हि प्रतिपादयिषितप्रयोजनसंप्रत्ययः' इति। तत्वेत्यस्य मुख्यगङ्गाभेदेत्यर्थः। न च लक्षणामूलतया गङ्गासम्बन्धप्रतीत्या तत्सिद्धिः। गङ्गातटे घोष इत्यतोऽपि तत्प्रतीत्यापत्तेः। तदुक्तम् ( ३६ पृष्टे ) 'गंगासम्बन्धमात्रप्रतीतौ तु गंगातटे घोष इति मुख्यशब्दाल्लक्षणायाः को भेदः' इति 'कुन्ताः प्रविशन्ति' इत्यादावपि कुन्तत्वादिना कुन्तयुक्तपुरुषप्रतीतिः। अत एवात्र न मतुप्। तेषु च मुख्यकुन्ताभेदप्रतीत्या कुन्तगततैक्ष्ण्यादिप्रतीतिरूपप्रयोजनसिद्धिः। तदुक्तम् ( ४२ पृष्ठे ) 'कुन्तादिभिरात्मनः प्रवेशान्वयसिद्ध्यर्थं स्वसंयोगिनः पुरुषा आक्षिप्यन्ते' इति। आक्षिप्यन्ते, इत्यस्य स्वगतकुन्ताद्याश्रयत्वेन बोध्यन्ते, इत्यर्थः।

 

गौर्वाहीक इत्यत्र साधारणगुणरूपसादृश्याश्रयणेन वाहीकस्यैवारोपितगोत्वेन बोधः। ततो व्यञ्जनया मुख्यगवाभेदप्रतीतिः प्रयोजनम्। तत एव चमत्कारः। आद्यबोधेन तु न चमत्कारः। तस्मिन् भ्रमत्वज्ञानात्। अतएव 'गौर्वाहीको जडः' इत्यादौ न पौनरुक्त्यम्। आयुर्घृतमित्यादौ कार्यकारणभावसम्बन्धादायुष्ट्वेन घृतबोधः। ततो व्यञ्जनयान्यवैलक्षण्येनायुष्कारित्वरूपप्रयोजनप्रतीतिः। तदुक्तम् 'साधारणगुणाश्रयणेन पदार्थो लक्ष्यते, इत्यपरे' 'लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता'

गौणभेदयोर्भेदेऽपि ताद्रूप्यप्रतीतिः प्रयोजनम्। शुद्धभेदयोस्त्वन्यवैलक्षण्येन कार्यकारित्वादिप्रतीतिः इति। लक्ष्यमाणगुणैरित्यस्य ज्ञायमानगुणैरित्यर्थः। यद्गुणज्ञानपूर्वकं वाहीके गोशब्दप्रयोगस्तद्गुणरूपात्संबन्धादिति यावत्। साधारणगुणाश्रयणेनेत्यस्य तद्रूपसम्बन्धेनेत्यर्थः। अत्रत्यप्रदीपस्तु मतान्तरपरतया कथंचिन्नेयः। लक्ष्यमाणगुणैरित्यत्रप्रकृत्यादित्वात्तृतीया। अनया रीत्यान्योऽपि प्रकाशग्रन्थो योज्यः। एतेन रूपके न लक्षणा। समानविभक्तिकत्वेन नामार्थयोरभेदान्वयोपपत्त्या लक्षणाफलाभावादित्यादि दीक्षितादिनव्योक्तं परास्तम्। 'गौर्नं वाहीकः' इत्यादिबाधज्ञानेन तद्बोधेऽप्रामाण्यग्रहजननात्ततश्चमत्कारानापत्तेः। मम तु तस्य बोधस्य लक्षणामूलव्यञ्जनाजन्यत्वेन तत्र बाधज्ञानेनाप्रामाण्यग्रहाजननान्न दोष इति वदन्ति। इदमेव युक्तम्। अन्यथा गंगादिपदजन्यतटादिशाब्दबोधस्यैव प्रयोजनप्रतीतिनियामकत्वेन-गङ्गातटे, इत्यादितस्तदभावोपपत्तौ मध्येऽभेदप्रतीतिः प्रकाशाद्युक्ताऽसंगता स्यात्। मम तु यथा तदुपयोगस्तद्युक्तम्। तद्बोधे भ्रमत्वग्रहादिति दिक्'।

कार्यकारणभावादित्यादिपदग्राह्यान् संबन्धान् आह क्वचिदित्यादिना तक्षा। अत्र तत्कर्मनिपुणत्वादिकं प्रयोजनं व्यङ्ग्यम्। तदेतदुक्तं परमलघुमञ्जूषायां 'शक्यसम्बन्धो लक्षणा'। सा च लक्षणा तात्स्थ्यादिनिमित्तिका। तदाह—

तात्स्थ्यात्तथैव ताद्धर्म्यात्तत्सामीप्यात्तथैव च।
तत्साहचर्यात्तादर्थ्याज्ज्ञेया वै लक्षणा बुधैः।

तात्स्थ्याद्यथा—मञ्चा हसन्ति। ग्रामःपलायितः। गिरिर्दह्यते। ताद्धर्म्याद्यथा-सिंहो माणवकः, आदित्यो यूपः। तत्सामीप्याद्यथा-गङ्गायां घोषः। तत्साहचर्याद्यथा यष्टीः प्रवेशय। तादर्थ्याद्यथा—इन्द्रार्था स्थूणा इन्द्रः "इति"

तत्र वृत्तिश्च शाब्दबोध हेतुपदार्थोपस्थित्यनुकूलः पदार्थयोः सम्बन्धः, इति तत्वचिन्तामण्यादिग्रन्थे शक्तिवादे तस्याः परिभाषा कृता। यद्यप्ययं सम्बन्धः पदपदार्थयोरुभयोरपि वर्तते सम्बन्धस्य द्विष्ठत्वात्, किन्तु आश्रयतासम्बन्धेन पदनिष्ठत्वात् पदवृत्तिरित्युच्यते। तदुक्तं शक्तिवादे गादाधर्यां संकेतो लक्षणा चार्थे पदवृत्तिरिति।

इयं च वृत्तिः वक्तुःताप्पर्यं निर्वाहयितुमेव मन्यते। तात्पर्यं च वक्तुः त्रिविधम्—औत्सर्गिकम्-आयवादिकं नियतं चेति। यत् तात्पर्यं वक्तुः शब्दोच्चारेण उत्सर्गतः साधारणतः श्रोतृप्रतिपत्तिविषयो भवति तदेव औत्सर्गिकमित्युच्यते। यथा घटपदात् मृन्मयपात्र

१. काव्यप्रकाशः पृ० ५४

विशेष एव साधारणतः वक्तृतात्पर्यविषयतया प्रतीयत इति मृन्मय-पात्रविशेषे घटपदोच्चारयितुस्तात्पर्यम् औत्सर्गिकं तात्पर्यमिति कथ्यते।

यत्र वक्ता प्रसिद्धमौत्सर्गिक वा तात्पर्यं तिरस्कृत्य अन्येन तात्पर्येण शब्दः प्रयुङ्क्ते तत् तात्पर्यं लोके आपवादिकम् इति कथ्यते। औत्सर्गिकस्य तात्पर्यस्य अपवादात्। यथा गङ्गायां घोषः इत्यादौ प्रयोक्ता गंगापदस्य औत्सर्गिकं तात्पर्यं प्रवाहविषयं तिरस्कृत्य तीरात्मकार्थं प्रतिपादनेच्छया एव गंगापदमुच्चारयति इति एतत् तात्पर्यंमापवादिकमित्युच्यते।

तृतीयं च तात्पर्यं नियतमिति कथ्यमानं तत्रैव भवति यत्र वृत्तौ निरूढा लक्षणेति व्यवहारः प्रवर्तते। औत्सर्गिके तात्पर्य प्रतिपादनेऽनुपपत्तावसत्यामपि यस्य शब्दस्य प्रयोगः औत्सर्गिके तात्पर्याति-रिक्ततात्पर्यविषयो भवति तत्रैव नियततात्पर्यमित्युच्यते।

तत्र औत्सर्गिकं तात्पर्यमेव शक्ति कल्पयति—अर्थात् यस्य शब्दस्य औत्सर्गिकतात्पर्येण प्रयोगः तत्र शब्दे तत्तात्पर्यविषय-प्रतिपादनाय प्रवृत्ता वृत्तिः शक्तिरिति कथ्यते। आपवादिक-तात्पर्यप्रतिपादनानुकूलवृत्तिः लक्षणेत्युच्यते।

औत्सर्गिकतात्पर्यं प्रतिपादनेऽनुपपत्तावसत्यामपि यस्य शब्दस्य प्रयोगः औत्सर्गिकतात्पर्यातिरिक्ततात्पर्यविषयप्रतिपादनाय क्रियते तत्र शब्दे वर्तमाना कल्प्यमाना वा तादृशार्थप्रतिपादनक्षमावृत्तिः निरूढलक्षणेत्युच्यते। यथा कटं करोतिव्यजकरशब्दस्य करावयवे। अत्र कटस्य सिद्धत्वे तस्य करणं निर्माणं न सम्भवति असिद्धत्वे च तस्य कर्मत्वं नेति अनुपपत्तिज्ञानमान्तरेणापि कटशब्दस्य

कराऽवयवे निरूढा लक्षणा। अतएव करावयवान् करवत्तया करोति इति ततो वाक्यार्थबोधो जायते। एवं त्वक्शब्दस्य त्वगिन्द्रिये निरूढलक्षणा बोध्या। एवमन्यान्यपि उदाहरणानि बोध्यानि। परन्तु निरूढा लक्षणापि लक्षणैवेति न्यायमते द्विविधा वृत्तिः संकेतः-शक्तिः—अभिधा, लक्षणा च प्राचीन नैयायिकानां मते लक्षितलक्षणाऽपि वृत्त्यन्तरम् परन्तु नव्यनैयायिकानां मतेऽस्याः वृत्त्यन्तरत्वं न अपितु एकस्या लक्षणाया एव भेद इयमिति बोध्यम्।

वैयाकरणास्तु लक्षणां नाङ्गीकुर्वन्ति। तेषां मते शक्तिरेव द्विविधा प्रसिद्धा अप्रसिद्धा च। तत्र तेषां प्रसिद्धां शक्ति परे दार्शनिकाः शक्तिम् अप्रसिद्धां च शक्ति लक्षणेति शब्दमात्रे भेदः। कुमारिलमतानुयायिनस्तु शब्दवृत्तेः विरम्य व्यापाराभाव इति सिद्धान्तमनुसृत्य अभिमिहितान्वयवादस्वीकुर्वाणाः। पदार्थमात्र बोधनया विरतया अभिधया पदार्थानामन्वयबोधासम्भवेन पदार्थानामन्वयबोधनक्षमां तात्पर्याख्यामपि एकां शक्ति लक्षणां गौणीतो भिन्नां वृत्तिमाहुः। तदुक्तं खण्डदेवेन मीमांसाकौस्तुभे—"इदमपि चार्थस्य लक्षकत्वपक्षे लक्ष्यस्याशाब्दस्य विभक्त्यर्थानन्वय इत्युक्तम् तदप्यस्मिन् पक्षे तात्पर्याख्यवृत्तिविषयत्वेन शाब्दस्य लक्ष्येऽपि स्थापयिष्यमाणत्वाद-किञ्चित्करम्॥ इति॥

यद्यप्ययं ग्रन्थः अन्य विषये किन्तु तात्पर्याख्यवृत्ति स्वीकार-समर्थनक्षम इति कृत्वा लिख्यते। महिमभट्टप्रभृतय आलङ्कारिकाः व्यञ्जनामपि एकां वृत्तिं स्वीकुर्वते।

तदुक्तम्—

विरतास्वभिधाद्यासु ययार्थो बोध्यते परः ।
सा वृत्तिर्व्यंजना नाम शब्दस्यार्थादिकस्य च ॥[1]

एतेषामयमाशयः—"गंगातीरे घोषः" इत्येवं स्पष्टम् वाक्यमनुक्त्वा गंगायां घोष इत्येवं स्वरूपे वाक्ये प्रयोक्तुर्लोकस्य अर्थं विशेष प्रतिपत्तिरवश्यमभिमता । स चार्थविशेषः प्रकृते लक्ष्यार्थे तीरे मुख्यार्थप्रवाहवत् शैत्यपावनत्वमेव । शैत्यपावनत्वविशिष्टतीरे गंगापदस्य औत्सर्गिकं तात्पर्यम् । तदनुकूला च शक्तिः संकेताभावादेव न सम्भवति इति न शक्त्यां तादृशतीरस्य बोधः । नापि लक्षणया । लक्षणा हि तत्रैव भवति यत्र मुख्यार्थबाधादि तत्र भवति । अत्र तु नैकस्यापि सम्भवः । तदुक्तम्—मम्मटेन काव्यप्रकाशे—

लक्ष्यं न मुख्यं[2] नाप्यत्र बाधः फलेन नो ।
न प्रयोजयेदस्मिन् न च शब्दः स्खल इति ॥ इति ॥

अतएवेदमपि सूपपन्नम्—

यस्य प्रतीतिमाधातुं लक्षणा[3] समुपास्यते ॥
फले शब्दैकगम्येऽत्रव्यञ्जनान्नापरा क्रिया ॥

नाभिधासमयाभावात् हेत्वभावान्न लक्षणा इति । इयं हि व्यञ्जना प्रथमतो द्विविधा शब्दशक्तिमूला अर्थशक्तिमूला च । अद्यापि द्विविधा—अभिधामूला, लक्षणामूला चेत्यादि ।

---

(१) सा० दि० प० २—१२ ॥
(२) का० प्र० २। १६ ॥
(३) का० प्र० २।१६।१५ ॥

परन्तु अभिधामूलायाः अन्तर्भावः शक्तावेव। तत एवार्थान्तर-प्रतीतेः [1] संम्भवात्। तात्पर्यानुपपत्तेश्चलक्षणाबीजस्यावश्यमेव वक्तव्यतया लक्षणामूलाया अपि लक्षणयैव गतार्थता। अर्थशक्ति-मूलायास्तु अनुमाने एवान्तर्भावः इति महिमभट्टादिभिरपि स्वीकृतैवेति।

एवञ्च व्यञ्जना वृत्यन्तरं नास्तीति नैयायिकाः। नापि तात्पर्याख्यं वृत्यन्तरं स्वीकर्तव्यं—विरम्य व व्यापाराभावे माना-भावात्। शक्त्युपकृतसंसर्गमर्यादयैवान्वयप्रतिपादनसम्भवात्।

तदुक्तं व्युत्पत्तिवादगादाधर्याम्[2]—

शाब्दबोधे चैकपदार्थेऽपरपदार्थसंसर्गः संसर्गमर्दायेव भासते इति ॥

नापि गौणी वृत्यन्तरं स्वीकर्तव्यम्—

शक्यसाक्षात्सम्बन्धस्येव परम्परासम्बन्धस्यापि लक्षणा स्वीकारे क्षति विरहात्।

तस्माद् द्विधैव वृतिः—शक्तिः लक्षणा च। इयं च शक्तिः नैयायिकानां प्राचां मते ईश्वरेच्छारूपा। नव्यानां तु मतेइच्छा रुपैव।

शक्तिश्च मीमांसकानां मते जातावेव। न व्यक्तौ व्यभिचारा-दानन्त्याच्च। तदुक्तं कुमारिलभट्टैः[3]—

आनन्त्यव्यभिचाराभ्यां शक्त्यनेकत्व दोषतः।
न व्यक्तावाकृतो तु स्यात् सर्वमेतत्साञ्जसम्।

---

१. श० श० पु० पृ० १४४ इत्यादि
२. व्यु० पा० पृ० १।
३. तण्जवा० पृ० १।३।३५।

आकृतेः प्रथमं ज्ञाने तस्या एवाभिधेयता।
व्यक्त्या कृत्योरभेदाच्च व्यवहारोपयोगिता।
लिंगसंख्यादिसम्बन्धः सामानाधिकरण्यधीः।
सर्वोपपन्ना च यतः तस्मात्तत्रैवकल्पयेत्॥ इति॥

शाब्दबोधव्यक्तेर्भानं तु लक्षणाया इतिमण्डन मिश्रादयः प्रभाकरोक्ताक्षेपपक्षे व्यक्तिः प्राधान्य-न स्यादिति हेतोः।

नैयायिकास्तु व्यक्तेर्लक्षणया सर्वथापि भानं न सम्भवति गौरस्तीत्यादौ अन्वयानुपपत्तेः तात्पर्यानुपपत्तेश्च अभावात्। व्यक्तिबोधस्तु अत्रापि सिद्धः। आक्षेपे प्राधान्यव्याघात इति तूक्तमेव।

तस्माज्जात्याकृतिविशिष्ट व्यक्तौ एकैव शक्तिरिति प्राचीन-नैयायिकानां मतम्।

जातिविशिष्टव्यक्तौ शक्तिरित्यपि अन्ये नैयायिका व्यक्तावेवेति दीधितिकृतां मतम्। इयं च शक्तिः योगरूढिभेदात् द्विधा। आद्या पाचकादिशब्दे; द्वितीया कृष्णसर्पादिशब्दे, तृतीया पङ्कजादि-शब्दे।

क्वचित् योगरूढिऽपि स्वीकुर्वन्ति—तदुदाहरणम्—

उद्भिदादिपदम्। एतेभ्यः पदेभ्यः स्वातन्त्रेण योगिकार्थ-मुप्यर्थयोः प्रतीतेः यौगिकरूढिप्रवर्तमाना शक्तिरितिभावः।

इदं सर्वमपि उपोद्घातरूपेणोक्तम्—

इदानीं प्रकृतं लाक्षणिकं पदं नानुभावकमिति विषयमधिकृत्य उच्यते। प्रायशः सर्वेषां दार्शनिकानां मते लक्षणायाः वृत्यन्तररूपत्वं सुप्रसिद्धम्।

लक्षणा हि न पदे अर्थबोधिका मुख्यावृत्तिः किन्तु गौण्येव। मीमांसकास्तु गौणीमपि लक्षणातो भिन्नां स्वीकुर्वंते। अपरे नैयायिकादयस्तु लक्षणातोऽभिन्नां लक्षणाप्रभेदस्वरूपा वा मन्यन्ते।

सर्वथाऽपिलक्षणायाः वृत्तित्वं शक्त्यपेक्षणैवेति स्थिते गौणीवृतिर्लक्षणेति प्राक्कथनानुचितम्। सेयं लक्षणा बहुभिर्विदुषा परिभाषिता।

"नैयाकास्तु शक्यसम्बन्धो लक्षणा" इति वदन्ति। यथा गङ्गायां घोषे इत्यादौ शाब्दबोधविषयमतस्य तीरपदार्थस्य गंगापदशक्यार्थेन प्रवाहविशेषेण सामीप्यरूपसम्बन्धः सैव लक्षणा इति शक्यसम्बन्धो लक्षणा" इतरस्य भावः। अतएव यस्यार्थः शक्यार्थेन न कथमपि सम्बन्धो विविक्षितः तस्मिन्नर्थे लक्षणाऽपि सिध्यंति।

इदं सर्वं पूर्वमुक्तमपि प्रकृतसंगमनायोक्तम्॥

अथ लक्ष्यार्थानुमानकत्वमेवपदानां लाक्षणिकत्वमिति नैयायिकाः। शक्यार्थसम्बद्धार्थबोधकत्वमेवपदानां लाक्षणिकत्वमिति प्राभाकरादयः।

तस्यायं भावः—शाब्दबोधस्थले इयंगतिः। अभिहितान्वयवादः अन्विताभिधानवादश्च। आद्यः भाट्टनैयायिकादीनाम्, अन्त्यस्तु प्रभाकराणाम्। इदं सर्वं पूर्वमुक्तमेव।

लाक्षणिकार्थबोधे प्रति शक्यार्थबोधः कारणम्। शक्यार्थबोधश्च शक्तपदमन्तराऽनुपपन्नः। प्राभाकराणां मते ज्ञाने पदानां शक्तिः नत्वर्थे। तच्छाब्दानुभवजनककत्वमेव तच्छक्तत्वम्। गामानयेत्यादौ आनयनकार्यान्वितगोपदार्थप्राणिविशेषबोधजन-

कत्वमेव गोपदे गोपदार्थशक्तत्वम् । एवं च यदि लाक्षणिकं गङ्गापदमपि तीरपदार्थविषयकशब्दानुभवजनकं, तर्हि तस्यापि तीरपदार्थे शक्तत्वमेव स्यात् । न तुलाक्षणिकत्वम् इति सर्वसिद्ध-लक्षणाविघटनमापद्येत । अतः लाक्षणिकं पदं नानुभावकं "न शाब्दबोधजनकम्" इति मन्तव्यमेव । नन्वत्र यदि लाक्षणिकं पदं नानुभावकं तर्हि लाक्षणिकार्थस्य तीरादेः कथं गंगायां घोषः इत्यादिवाक्यजनितशाब्दबोध विषयत्वमिति चेत् ? अत्रोच्यते— प्रभाकरैः अस्माकं मते शक्तिः द्विविधा—आनुभाविकी स्मारिका च । लाक्षणिके हि पदे स्मारिकैव शक्तिः नानुभाविकी । तथा च लाक्षणिकार्थस्य शाब्दबोधभानाय शक्ते एव पदे लाक्षणिकार्थ-स्याप्यनुभावकत्वं मन्तव्यम् । शक्तिसम्बन्धेन लक्षणासम्बन्धेन वा उपस्थितो यः तीरादि पदार्थः तदन्वितो यो घोषादिः तादृशा-र्थस्य शाब्दबोधे मानप्रयोजकं सामर्थ्यमस्माभिरन्विताभिधान-वादिभिः शक्तेषु घोषादिपदेषु स्वीक्रियते ।

अतः गङ्गायां घोष इत्यादो घोषादि पदादेव तीरादिपदार्थस्यापि शाब्दानुभवः, गङ्गादिपदं तु तात्पर्यग्राहकमिति न कोऽपि दोषः ।

यत्र तु वाक्ये सर्वमेव पदं लाक्षणिकमेव स्वीक्रियते यथा "कुमतिः पशुः" इत्यादि वाक्ये । तत्र वाक्ये शक्तपदाभावान्नैव वाक्यार्थबोधः कथमपि सम्भवति, कार्यताबोधकलिङादौ नामन वाच्येति प्राभाकरमते लाक्षणिकस्य नानुभावकत्वं सिद्धम् ।

यथोक्तम्—विश्वनाथेन मुक्तावल्यां पूर्वपक्षे—

लाक्षणिकं पदं नानुभावकं लाक्षणिकस्य शाब्दबोधे तु पदान्तरं कारणमिति ॥

तथा शक्तिवादगादाधार्यामपि पूर्वपक्षत्वेनायं पक्ष उपस्थापितः, तथाहि "यस्तु ज्ञाने पदानां शक्तिः, नत्वर्थे, तथा च तज्ज्ञान-शक्तत्वं तद्वाचकत्वम्, तच्च तद्विषयकशाब्दबोधो जनकतावच्छेदक-धर्मवत्त्वं स च धर्मो वह्न्यादिनिष्ठ दाहानुकूलशक्तिरिव पदार्थान्तरमेव लाक्षणिकं च नानुभावकमेवेति। न तत्र शक्तिः, घटादिपदस्य मितिमात्र विषयकधीजनकत्वेऽपि न तद्वाचकत्वं, तद्विषयकत्वा-वच्छिन्नज्ञानशक्तपदस्यैव तद्वाचकत्वाद्" मितिमात्रविषयकत्वेन ज्ञानस्य न किञ्चत्पदशक्यता, ज्ञानसामान्यसामग्र्या एव मिति मात्रभासकतया पदान्तरस्य च तदर्थं भासकतया तद्विषयकत्वस्य तत् पदजन्यतावच्छेदकत्वे मानाभावात्। कार्यान्वितस्वार्थे पदानां शक्तिरिति वादिनां गुरूणां साक्षात्परम्परासाधारणकार्यत्व विषयतानिरूपितत्वेन घटादिविषयताया घटादिपदजन्यतावच्छेद-कत्वेऽपि न घटादिपदस्य कार्यतावाचकत्वम्, अपितु लिङादिपदस्यैव, तद्विषयकत्वावच्छिन्नेत्यत्र साक्षात् परम्परा–साधारण–निरूपित-त्वांशे विशेषणतयाऽवच्छेदकत्वस्यैव निवेशाद्।

न च कार्यानुकूलशक्तेः स्वरूपसत्या एव कार्यानुकूलतया पदार्थोपस्थितौ शाब्दबोधे च ज्ञातोपयोगिनेऽर्थे पदस्य वृत्तिरूप-शक्त्यन्तरस्य स्वीकार आवश्यक इति वाच्यम्? दाहादिकार्ये वह्न्यादिनिष्ठशक्तेः स्वरूपवत्या एवोपयोगित्वेऽपि शाब्दबोधा-नुकूलशक्तेः शाब्दबोधे पदार्थोपस्थितौ च ज्ञातोपयोगित्वोपगमे बाधकाभावात्, अतीतानागतपदज्ञानादपि शाब्दबोधोत्पत्त्या पदानाम् अहेतुत्वेन तन्न हेतुतावच्छेदकशक्त्यसम्भव इति तु न शङ्क्यम्, तन्मते पदानां नित्यत्वाद्। अस्तु वा तज्ज्ञानशक्त्या तस्य वाचकत्वमिति मीमांसकमतविशेषः।"

इदं च मतं नैवसमीचीनमिति नैयायिकाः।

यतो हि मीमांसकमते लाक्षणिकस्याननुभावकत्वं दुरुपपादम्। पदार्थोपस्थितिद्वारेण शक्यार्थानुभवे शक्तपदस्येव लक्ष्यार्थबोधो लाक्षणिकस्यापि हेतुत्वं दुर्वारम्। अन्यथा तत्रापि शक्तेरावश्यकतया वाचकतापत्तेः, पदार्थोपस्थित्याऽन्यथासिद्धत्वे शक्तस्याप्यवाचकत्वापत्तेः। न चानुभावकतावच्छेदकशक्यवल्लाक्षणिकस्यानुभावकत्वं नैव सम्भवति, मीमांसकैर्हि वाक्यार्थघटकार्थान्तरवाचकमेव पदं स्वार्थस्येव तदन्वय प्रतियोगि लक्ष्यार्थस्याप्यनुभावकं स्वीक्रियते इति वाच्यम् ? तथा सति गङ्गायां घोषः इत्यादौ घोषादिपदस्यापि गङ्गातीरादिरूपार्थानुभावकतावच्छेदकशक्तिमत्त्वेन तद्वाचकत्वापत्तेः, लाक्षणिकस्याननुभावकत्वे शक्तपदाघटितधूमादित्यादि हेतुवाक्यादन्वयाबोधश्च। तत्र धूमादिपदस्य ज्ञाने विभक्तेश्च ज्ञाप्यत्वे लाक्षणिकत्वाद् एवं कुमतिः पशुः इत्यत्रापि उभयोऽपि लाक्षणिकत्वात् अन्वयबोधो न स्यात्। अत्र मतिरित्यस्य कुत्सितमूर्तिमल्लाक्षणिकत्वेन कुमतिरिति पदस्यापि लाक्षणिकत्वम्, मनुष्यपशुशक्त पशुपदमपि लाक्षणिकम्, अतः उभयोरपि लाक्षणिकत्वे शक्तपदस्याभावात् शाब्दबोधो न स्यात्। भवति च शाब्दबोधः, अतः लाक्षणिकस्यापि शाब्दबोधजनकत्वमिति सर्वलोकप्रसिद्धिमनुसृत्य स्वीकर्तव्यम्। उक्तस्थले शाब्दबोधो न भवतीति कथनं सर्वलोकविरुद्धम्। सिद्धार्थस्थलेऽपि 'पुत्रस्ते जात' इत्यादौ शाब्दबोधदर्शनेन कार्यान्विते शक्तिरित्यस्य व्यभिचारात्।

---

१. शा० वा० गा० पृ० २१—२२

ननु लक्ष्यार्थस्य न शाब्दबोधे प्रवेशः अपि तु स्मृतस्य तस्य समभिव्याहृतपदार्थैरसंसर्गाग्रहमात्रे तथा च नानुपपत्तिः, न च लक्ष्यार्थस्य शाब्दबोधविषयत्वानुपगमे तदुपरागेण शृणोमीत्यनुव्यवसायानुपपत्तिरिति वाच्यम्। शाब्दज्ञानस्य अनुद्दिष्टत्वात्, विधेयप्रकारकत्वेनैव व्यवसीयमानत्वात्। लक्ष्यार्थस्य शाब्दबोधविषयत्वेऽपि तस्य विधेयतया भानास्वीकारात्। तदुक्तम्—जैमिनिना "न विधौ परः शब्दार्थः॥ इति॥

अयं भावः—अत्र भावसाधनेन विधिशब्देन विधेयित्वं बोध्यते, सप्रत्ययार्थो निरूपकत्वं, परः शक्यभिन्नो लक्ष्यार्थः इति यावत्, तथा च लक्ष्यार्थो न विधेयितानिरूपकः, न विधेय इति भावः। इति चेन्न ?—

"मञ्चाः क्रोशन्तीत्यादौ लक्ष्यार्थमञ्चस्थपुरुषादेः शाब्दबोधविषयताया आवश्यकत्वाद्, अन्यथा पूर्वाननुभूतस्य पुरुषयोः प्रतीत्यनिर्वाहाद्, अननुभूतस्य स्मरणासम्भवात् समानप्रकारकत्वमात्रेण शाब्दबोधपदार्थोपस्थित्यादेः कार्यकारणभावमभ्युपगच्छतां मीमांसकानां शाब्दबोधे योग्यताबलादपूर्वपदार्थस्य भानेन लक्ष्यार्थस्य शाब्दोपगमे पूर्वस्थापितस्य प्रतीतिरुपपद्यते।

तद्विषयकशाब्दत्वावच्छिन्नं प्रति शक्तिविशेषपुरस्कारेण तद्वाचकपदस्य तज्ज्ञानस्य वा न हेतुता सम्भवति, विशिष्यतत्तत्पदार्थान्विततत्तदर्थबोधे तत्तत्पदसाकांक्षतत्तत्पदज्ञानत्वेनावश्यक्लृप्तकारणतयैवोपपत्तावीदृशकार्यकारणभावस्यनिर्युक्तित्वाद्।

इदन्तु सारम्—तीरादौ गङ्गादिपदजन्यबोधविषयत्वसत्वेऽपि तदंशे शुद्धबोधविषयत्वादिनैव "तीरं बोधविषयो भवतु"

इत्याकारकेण तादृशविषयत्वादिप्रकारकत्वमीश्वरेच्छया स्वीक्रियते । न तु गङ्गादिपदजन्यबोधविषयत्वत्वादिनेव तत् प्रकारकत्वभानाभावात्, तदनभ्युपगमेऽपि तस्यतु सर्वविषयकत्वव्याघाताभावाद् ।

न च तथासति बोधांशे गङ्गापदजन्यत्वानवगाहितयासर्वविषयकत्वानुपपत्तिरितिवाच्यम् ?

तीरादिनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकघटकतयातदनवगाहित्येऽपि बोधांशे स्वातन्त्र्येण तदवगाहित्वोपगमात्, तथा च तत्पदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यता सम्बन्धेनेश्वरेच्छावत्त्वस्येश्वरेच्छानिरूपिततादृशविशेष्यतावत्त्वस्य - वा तत्पदशक्यतारूपतया नातिप्रसङ्गः। उक्तरीत्यैव च घटादिपदजन्यबोधविषयस्य घटान्वितकर्मत्वान्वितानयनादेर्घटादिसंसर्गस्य यतादृशबोधविषयत्वप्रकारकेश्वरे च विषयत्वेऽपि घटादि पदवाच्यत्वमुपपादनीयम्। एवं च लाक्षणिकस्याननुभावकत्वं न विधौ परा। शब्दार्थं इत्यस्य च सर्वथा नियुक्तिकत्वं सिद्धम् इति ।



# अभिहितान्वयवादः

इदानीं भाट्टमीमांसकसम्मतोऽभिहितान्वयवादः प्रभाकर-सम्मतोऽन्विताऽभिधानवादश्चोपपाद्य निराक्रियेते ।

तत्र वाक्यार्थविषये वादिनां विप्रतिपत्तिर्दृश्यते । तत्र वैयाकरणास्तावद् विभागशून्यमेव वाक्यं व्यञ्जकध्वनिभेदेन तेन तेन वर्णपदविभागेन बुध्यमानं तस्य तस्य वाक्यार्थस्य प्रतिपादकमिति मन्यते ।

बौद्धास्तु अविभक्तं ज्ञानमेव वाक्यं तदनन्तरञ्चानेकजाति-गुणद्रव्यक्रियाविषयं ज्ञानमेव वाक्यार्थः ।

कार्यकारणभाव एव च वाक्यवाक्यार्थयोः सम्बन्ध इति स्वीकुर्वन्ति ।

उभयोरपि पक्षयोः काल्पनिकपदपदार्थ - सम्बन्धव्युत्पत्तिर-भ्युपाय इति स्वीकारः ।

नैयायिकास्तु पदमिव वाक्यमपि पूर्वपूर्ववर्णानुभवजनित संस्कार-सहकृतोऽन्त्यो वर्णो वाचक इत्यादिना मार्गेण सावयवमेव प्रतिलब्धसम्बन्धावयवभूतपदजनितपदार्थसंविदुपायं वाक्यार्थस्य वाचकं वदन्ति ।

प्राभाकरास्तु पदान्येव पदार्थान्तरान्वितं स्वार्थं प्रतिपादयन्ति इति प्रतिपादयन्तो दरीदृश्यन्ते। कौमारिलास्तु पदैरभिहिताः पदार्था एव लक्षणया वाक्यार्थं प्रतिपादयन्तीत्याहुः। तथा च भाष्यम्—"पदानि[1] स्वस्वमर्थमभिधाय निवृत्तव्यापाराणि अथ पदार्था अवगताः सन्तो वाक्यार्थं प्रतिपादयन्तीति। तेषु बौद्धसम्मतज्ञानात्मक - वाक्यवाक्यार्थवादस्तावदात्मनि क्रिया-विरोधाद्बहिः पदार्थानामवयासाच्च शून्यवादनिराकरण प्रक्रियोयैव निरस्तो वेदितव्यः। कौमारिलमते पदाद्भिन्नमभिन्नं वाक्यम्, एवं पदार्थादभिन्नो भिन्नो वाक्यार्थं इति विकल्पस्तु भेदाभेदवाद-स्वीकारेण निराक्रियते।

अतः वाक्यमेव विशिष्टार्थंप्रतिपादनराणि पदान्येव भवन्ति। वाक्यार्थोऽपि पदार्थं एवैकार्थान्तरान्वितस्वरूपेइति। यद्यपि अत्यन्ताभेदोभेदो वा न शक्यते वक्तुं तथाप्यवान्तरस्थित्युप-पत्तेर्बहिर्भूतौ तौ अभिधातुं न शक्येते। अतो हेतोर्ज्ञानात्मक-वाक्यवाक्यार्थवादो बौद्धसम्मतो नैव समोचीनः। एवमेवान-वयववाक्यवादाऽपि वैयाकरणसम्मतः अवयवस्यावंगमादेव निरस्तो भवति। पदमिवानवयवत्वं भविष्यतीत्यपि न वाच्यम्? पदेनावयवत्वस्य असिद्धत्वात्। अयं भावः—यथा पदे वर्णात्मक-भागस्य ज्ञाने सत्त्वेप्येकपदावभासादर्थंप्रतिपत्तेश्च वर्णेभ्योऽ-नुपपन्नत्वात् भागज्ञानस्य मिथ्यात्वेन भागशून्यमेवपदं पदार्थंस्य वाचकमाश्रितं भवति, तथैव वाक्यमपि। तत्रापि एकमिदं वाक्यमिति प्रतीतेर्विद्यमानत्वेन नानात्वस्य निराकरणं भवति,

१. शा० भा० पृ० ३८।

नानात्वैकत्वयोर्विरोधात्। वाक्यार्थप्रतीतेश्चान्यस्य उपायस्याभावेन निर्भागं वाक्यमेव कल्पयतीति निर्भागवाक्यवादिनामाशयः। तन्नैव समीचीनतायाकल्पयति दृष्टान्तस्यासिद्धत्वात्। न ह्यस्माकं मते वर्णातिरिक्तोऽनवयवः पदात्मा विद्यते। यतः बहूनामपि एककार्यंप्रयुक्तमेकत्वं यथा सेनेति यथा वा राजसूय इति। तथा पदेऽपि एकत्वविशिष्टार्थप्रतिपादकत्वेनैकत्वप्रतीतेः सिध्यति। एतस्मादेवकारणादर्थैकत्वमविदूषामेकपदेऽर्थो न भवति। अतः वर्णातिरिक्तस्य पदस्य निर्भागस्याऽसिद्धत्वाद् दृष्टान्तस्याऽसिद्धत्वान्नैतद्दृष्टान्तेन वाक्यस्य विभागत्वं भवितुमर्हति। तदुक्तं न्यायरत्नमालायां पार्थसारथिमिश्रैः (पृ० ७४ श्लोक २)—

न चार्थप्रतिपत्त्याऽपि पदमन्यत् प्रसिद्ध्यति।
वर्णानन्तरजाता हि सा तत्कारणिकैव नः॥

अयं भावः—यदा वर्णा एव प्रत्यक्षेणोपलभ्यमानादन्यदिति सिद्धं तथा वर्णोच्चारणानन्तरं जायमानाऽर्थप्रतीतिरपि वर्णनिमित्तैव नान्यनिमित्तेति विज्ञातं भवति। वर्णातिरिक्तस्य तु तत्त्वान्तरस्य प्रत्यक्षानुपलब्धिनिरस्तसत्त्वस्य वाचकत्वमपि दूरनिरस्तमेवातोऽन्यथानुपपत्त्यापि कल्पयितुं नैव शक्यते। अतो वर्णानामेवैकवक्तृ-उच्चारणापादितानन्तर्याणां स्वविशेषयुक्तानां संहतानामानुपूर्वीविशेषयुतामनन्तरमर्थावगमदर्शनातादृशानामेवार्थाभिधायकत्वं निश्चीयते। क्रमवर्तिनां वर्णानां साहित्यन्तु संस्काररूपावान्तरव्यापारवशान्निश्चीयते। यतः पूर्वपूर्ववर्णानुभवेन संस्कारापरनामधेयो व्यापारो जन्यते। तत्

 

सहितस्यान्त्योवर्णोऽर्थप्रतीतिः जनयति । न च बहूनां संस्काराणां कल्पनायां गौरवात्मकं शब्दतत्त्वं कल्पनीयमिति वाच्यम् । प्रत्यक्षानुपलब्धिनिरूपितस्य एकस्य शब्दतत्त्वस्य कल्पयितुमशक्यत्वात् ।

संस्कारस्य तु दृष्टोपपत्त्यै कल्पनीयत्वेन गौरवं नैव दोषमावहति । अनेकस्यापि दृष्टोपकारस्य कल्पनायुक्ता, दृष्टविरुद्धस्य त्वेकस्यापि कल्पना युक्तैव । किञ्च नैवात्रावक्लृप्तसंस्कारान्तरस्य कल्पना, किन्तु निश्चिता एव स्मृतिहेतवः संस्कारा अत्रापि सन्ति । न चात्र यद्विषयकानुभवजन्याः संस्काराः भवन्ति तद्विषयिकामेव स्मृतिं जनयेयुर्न त्वर्थान्तरज्ञानमिति वाच्यम् ? स्मृतावेष संस्काराणां जनकत्वस्वीकारात् । स्मृतिजनयन्त एव संस्काराः अर्थप्रतिपत्तौ उपायीभवन्ति स्मृतानामेव वर्णानामेव वर्णानां वाचकत्वात् । नन्वनुभववत् स्मृतयोपि वर्णेषु क्रमेण जायमाना अर्थज्ञाने समर्थाः नैव भविष्यन्ति । यदि क्रमेणानुभूतानामपि युगपदेव स्मरणमित्युच्येत तर्हि व्युत्क्रमेणाप्युच्चारितानि वाचकता स्यात् । तत्रापि स्मृतिहेतुसंस्कारोत्पादनात् । अममनादस्य स्मरणस्य सर्वेषु युगपदेवोत्पद्यमानत्वात् अथ तूच्चारणक्रमोप्यङ्गमिष्यते तर्हि अदृष्टकल्पना संस्कारकल्पना च स्यात् । यदि वर्णा एव पदं तर्हि राजजराशब्दयोर्वर्णभेदाभावात् अनुच्चारितावस्थायां चोच्चारणतज्जन्यानुभवक्रमयोरविद्यमानत्वात् स्मरणस्य चैकस्यैव युगपदनेकवर्णगोचरस्योत्पद्यमानस्याक्रमत्वात्कुतः पदभेदनिश्चयः कुतस्तत्रराजजरार्थभेदनिश्चयः । अतः वर्णेभ्यः पदतत्त्वमन्यदेवेति शब्दविदो वैयाकरणाः प्रतिपन्नाः ।

अत्रोच्यते मीमांसकैः—

व्यञ्जकध्वनिधर्मस्य वर्णेष्वारोपितस्य च।
क्रमस्यार्थाभिधाङ्गत्वं दैर्घ्यादेरिव सम्मतम् ॥३॥

तत्र यदुक्तं क्रमेण स्मरणेषु युगपदनुभववत् संभ्रमकारित्वं न संभवतीति तदस्तु युगपदेव तु सर्वेषु स्मरणमर्थान्तरेष्विव घटपदादिषु क्रमादनुभूतेष्वपि भवति।

यत्त्वेवं व्युत्क्रमेणाऽप्यर्थावगमः। स्यादिति तदयुक्तं क्रमस्याप्यङ्गत्वात् यद्यपि स्मरणस्य युगपदुत्पद्यमानस्य क्रमो नास्ति वर्णेषु विभुषु नित्येषु वस्तुगत्या क्रमो नास्ति तथापि व्यञ्जकानां ध्वनीनां क्रमवर्तित्वात्तेषुवर्णेष्वभिव्यज्यमानेषु तदीयक्रमो व्यङ्ग्येषु वर्णेषु दीर्घत्वादिवदादर्शाल्पमहत्त्वे इव मुखे समारोपितः प्रतीयते। ततश्च स्मरणमपि पश्चाज्जायमानं विशिष्टानुपूर्वीसमालिङ्गितशरीराधायेव वर्णान् विषयीकरोतीति क्रमभेदात्पदभेदः। एवमनुच्चारितावस्थायामपि स्मृत्या रूपेणैव क्रमविशेषेण जराराजशब्दयोर्भिन्नपदत्वसिद्धिः। तस्माद् ध्वनिधर्माणामेव दीर्घोदात्तक्रमादीनां वर्णेषु समारोपितानां स्मृत्यारूढानामर्थाभिधानाङ्गत्वान्न किञ्चिदनुपपन्नम्। उक्तञ्च—

"तद्देशेन च वर्णानां व्यापित्वेऽपि क्रमग्रहः।
एवं ध्वनिगुणान् सर्वान् नित्यत्वेन व्यवस्थिताः।
वर्णा अनुपतन्तः स्युरर्थभेदावबोधका" इति ॥पृ० ७६, श्लो० ३॥

तस्माद् वर्णातिरिक्तमनवयवं पदं नास्तीति सिद्धम्। भागस्य प्रतीयमानत्वादेव वाक्यमपि निरवयवं न सिध्यति वाक्यार्थावगतिश्च पदार्थवदेव सिध्यति। यथा वर्णेभ्य एव

संहितेभ्यः पदार्थोऽवगम्यते तथा तेभ्य एव वाक्यार्थोऽपि प्रतीयते वाक्यार्थप्रतीत्येककार्यकरणाच्च बहवोऽपि वर्णा एवैकं वाक्यमित्युच्यते। उक्तञ्च—

अपेक्षते न वा वाक्यं स्वार्थसंगतिसंविदम्।
परस्मिन् सर्वं संवित्तिः पूर्वस्मिन्न तु कस्यचिदिति ॥ —पृ० ८०६,

नन्वगृहीतसम्बन्धस्य वाक्यस्य वाक्यार्थाभिधायकत्वे सर्वेषामपि वाक्यश्रोतृणां वाक्यार्थज्ञानं स्यात्। न चाव्युत्पन्नपदपदार्थसंगतीनां वाक्यार्थज्ञानं जायते। यदि तु पदमिव वाक्यमपि स्वार्थेन संबद्धसंविदमपेक्षते तर्हि—अपूर्ववाक्याश्रयणे न कस्यचिदपि वाक्यार्थावगतिः स्यात्। यदि च पदपदार्थव्युत्पत्तिरङ्गवाक्यावाक्यार्थप्रतीतावपीत्युच्यते तन्न समीचीनम्। यतः पूर्वपूर्ववर्णजन्यसंस्कारसहितो वाक्यान्तवर्णः स्मृत्यारूढा वर्णावापदार्थेभ्योऽर्थान्तरं प्रतिपादयन्ति तर्हि पद-पदार्थज्ञानं तत्र कथमुपकुर्यात्। पदार्थज्ञानं तत्रोपकुर्यादिति न च वाक्यम्? तेनाप्युपकाराद्दर्शनात्। यतो वाक्याद् वाक्यार्थप्रतीतौ पदजन्यपदार्थज्ञानेन कश्चिदुपकारो न भवति। कश्चिद् यदि कल्पयति तर्हि—अदृष्टकल्पनैव दोषः। किञ्चाल्पैरेव पदैरावापोद्वापभेदेन बद्धान् वाक्यानीह रच्यन्ते तत्र सर्वेषामेव शक्तिं कल्पयतां महान् क्लेशः स्यादिति चेत्। अत्रोच्यते—वाक्यार्थप्रतीतेरनुपपत्तो स्यादयं क्लेशः। न च वाक्यार्थानुपपत्तिः लोकसिद्धार्थाभिधायिभिरेव पदैः तस्योपपत्तेः। पदेभ्यो पूर्ववाक्यार्थावगतिप्रकारं प्राभाकरा एवं वर्णयन्ति—तदुक्तं शालिकाचार्येण—

पदार्थानेव वाक्यार्थी मिथः संगतिशालिनः ॥
आचक्षतेऽभिधीयन्ते पदैस्ते च तथाविधाः ॥

प्र० पं० ३७७ ॥

पदार्था एव तावत् परस्परान्विता वाक्यार्थ इत्युच्यते। तेनान्विता एव स्वपदैरभिधीयन्ते। तेन पदमेव वाक्यार्थस्य प्रामाण्यमितिप्राभाकराः।

न चार्थस्वरूपमेव पदाभिधेयं नान्वितमिति वाच्यम् ?"

"पदानन्तरजाता हि संविदन्वितगोचरा।
अन्वितार्थाभिधायित्वं 'पदानामुपकल्पयेत् ॥

न्या० २। मा० ४ ॥

विशिष्टार्थविषयदर्शनेन अपदकारणस्य विशिष्टविषयैव व्युत्पित्सुना ज्ञानमनुमीयते। सा च पदश्रवणान्तरं जायमाना-पदकारणकमेव निश्चीयते।

यद्यपि न पदसंघातश्रवणान्तरं विशिष्टज्ञानं जायते तथापि-

न संघातात्मना वाक्यं वाक्यार्थस्याभिधायकम्।
अन्वयव्यतिरेकाभ्यां भागशस्तत्तु वाचकम् ॥ ५ ॥

न्या० रत्न० मा०।

अयं भावः। गामानयेत्यादौ गवादिपदावापे गवादि पदार्थावापात् तदुद्धापे चोद्धापाद्वाक्यभागानामेव वाक्यार्थ-भागवाचकत्वाऽवगमात् न संघातस्य वाचकत्वं वाच्यत्वं वा संभवति व्यभिचारात् संबन्धग्रहणासंभवाच्च।

आनन्त्याद्वाक्यवाक्यार्थानां न संगत्यवगमः संभवति। न च भवत् पक्षे कथमनन्तानामेकपदाभिधेयत्वम् अन्विताभिधायि

हि पदम्। अन्यच्च गवान्वितादानयनादश्वान्वितयानयनं तस्मात् कथमत्र संबन्धग्रहणव्यभिचारो वेति वाच्यम्

सांनिध्यपेक्षा योग्यत्वैरुपलक्षणलाभतः।
आनन्त्येप्यन्वितानां स्यात् संबंधग्रहणं मया। ६। न्या० र० ॥

अयं भावः—आकांक्षितं संनिहितं योग्यं च पदार्थान्तरं तेनान्वितं स्वार्थमभिदधति पदानीति एकेनैवोपलक्षणेनानन्तानामपि वाच्यत्वं सुज्ञानमेव। अत्र च अव्यभिचार एवान्यादृशे प्रयोगप्रतिपत्योरसंभवात्। एवं तर्ह्यनेनैव प्रकारेण संघातस्यैव संबन्धग्रहणं सम्भवति। येषां पदानां यदन्विताभिधायित्वं भवते इष्यते तत् पदसंघातस्तदर्थसंघातस्याभिधायक इति शक्यत एव सङ्गतिसंघातवादिभिरपि अवगन्तुमतो न कश्चिद्विशेषः। उक्तं तत् सत्यं किन्त्वस्मिन् पक्षे शक्तिकल्पनाश्रयात्तु नैतदुपपद्यत इत्युक्तम्। न चैवमान्विताभिधानमपि तर्ह्यनुपपन्नं गौरवादेव स्वरूपमात्रमेव तु लाघवात् पदानामभिधेयमिति वाच्यम्? अन्वितप्रतीतेर्निर्मूलत्वप्रसङ्गात्। न हि तस्यामूलान्तरमुपलभ्यते। ननु पदैः स्वरूपेणैवाभिहिताः पदार्थाः परस्परसम्बद्धमालानं प्रतिपादयन्तीति चेत्? न अदृष्टत्वात्।

प्रमाणान्तरविज्ञातैः पदार्थैर्न हि दृश्यते।
वाक्यार्थवेदनं शब्दप्रतीतेः कारणन्त्वथ।७। न्या० र० मा० ॥

शक्तित्रयं प्रकल्प्य स्यात् पदानामर्थगोचरा।
अर्थानामन्विते शक्तिस्तदाधापकता पदे।८। न्या० र० मा० ॥

अयं भावः—प्रमाणान्तरावगतानां प्रतिलब्धाकांक्षादि त्रितयसहायानां पदार्थानां व्यतिषङ्गप्रतिपादकत्वं न दृश्यते। यतः देवदत्तमुपलभ्य कोऽस्य पितेत्यपेक्षमाणः सन्निहितमपि यज्ञदत्तं योग्यमपि सहसैव पितरं नाध्यवस्यति। न चान्यत्राविदितमपि शब्दप्रतीतानामेवार्थानामन्वितप्रतिपादकत्वं कल्प्यते इति वाच्यम्? अदृष्टशक्तित्रयकल्पनायां गौरवात्। पदानान्तावत् पदार्थाभिधानशक्तिः, अर्थानाञ्चान्वितप्रतिपादनशक्तिः, पदानाञ्च पुनस्तच्छक्त्याधायकत्वशक्तिरिति कल्पनागौरवाद्वरमेकैव पदानामन्वितगोचरा शक्तिः स्वीकर्त्तव्येति।

न च पदानामन्वितशक्तिवादिनामपि अन्वितविषयकं शक्तिद्वयं कल्पनीयमेव तथा च कथमेकाशक्तिरिति वाच्यम्?—

तथापि शक्तित्रयकल्पनातो लाघवात्।

किञ्चान्वये पृथक् शक्तिः न कल्पनीया। एकैव तु शक्तिरन्वितपर्यन्ता कल्प्यते अतः कल्पनालाघवादन्विताभिधायित्वमेव युक्तम्।

यद्यपि कथञ्चिच्छक्तिकल्पना समाना भवेत्तथापि प्रथमावगतानां स्वीकृततात्पर्याणाञ्च पदानामेवान्विताभिधायकत्वमङ्गीकर्तुं युक्तम्।

एवञ्च शाब्दत्वमपि वाक्यार्थस्य संभवं भवति। अन्यथा क्लिष्टः स्यात्। ननु सामान्यं पदार्थस्तच्च विशेषं विना आत्मानं न लभते अतः तद्विशेषमाक्षेपस्थितिविशेष एवं च वाक्यार्थ इत्युच्यते निर्विशेषं न सामान्यमिति न्यायात्। पदार्थस्वरूपं हि सर्वावस्थायां सामान्यमन्वितता चास्यावस्था विशेष इतिपदार्थ एव वाक्यार्थे प्रमाणमिति चेत्? न यद्यपि सामान्यं विशेषमाक्षिपति

तथापि कश्चिद्विशेषोऽस्ति इत्येतावन्मात्रमाक्षिप्येत-नियतैकविशेषविषयाक्षेपस्तु। दुर्लभ एव प्रमाणाभावात्। तेन गामानयेति गवैवान्वितमानयनं न प्रतीयते। पदानामन्विताभिधायित्वपक्षे तु आकाङ्क्षाद्युपलक्षणशालिनैवार्थान्तरेणान्वितं पदस्याभिधेयमिति युक्तं यद्गवान्वितमानयनं प्रतीयते गौर्हि स्वपदेन सन्निहितो नार्थान्तरमिति नियतज्ञानं सिध्यति।

न चैवं यदि सन्निहितेनार्थान्तरेणान्वितं स्वार्थमभिधत्ते ततो गामानयेत्यत्र गोशब्देन तावत्स्वार्थो नाभिधातव्यः यावदानयतिना न स्वार्थोऽभिहितः, तेनापि हि स्वार्थे गो शब्देनाभिहितेन स्वार्थोऽभिधेयः स्यादिति व्यक्तमेवान्योन्याश्रयत्वमिति वाच्यम्? न ह्यवश्यमभिधानसन्निहिते नैवार्थेनान्वितं शब्देनाभिधेयं यतश्चायं दोषः स्यात् सन्निधिमात्रस्य तदुपलक्षणत्वात्। सन्निधिश्चाभिधानं विनाऽपि स्मृत्या सम्भवति। यतः सर्वाणि पदानि प्रतियोगि-सन्निधेःप्राक् निमित्तभूत्यर्थस्वरूपं स्मारयन्ति तवो न्यायाव-धारितवचनव्यक्तीनिःस्वार्थमभिक्षतीति न कश्चिद्दोषः।

नन्वसन्निहितेनापिऽनियोज्येवान्विताभिधानं विश्वजिदादौ दृष्टमिति चेत्? न तत्राप्यध्याहारेण सन्निधिलाभात्। यतोऽवश्यं शाब्द एव सन्निधिस्तदुपलक्षणमिति नास्ति नियमः। द्वारं द्वारमित्यादावशाब्दैरेव संवरणादिभिरन्विताभिधानस्य लोक-दृष्टत्वात्।

न चैवं सति प्रत्यक्षेणाश्वेसन्निहिते गौरानीयतामित्यज्ञान-पतिर्गवाश्वयोसययोरपि शब्दप्रत्यक्षाभ्यां सन्निहितत्वान्न गवैव केवलमन्वितमानयनमभिदध्यात् सन्निध्यपेक्षायोग्यत्वानामुभयत्रा-

विशेषादिति वाच्यम् ? गवान्येनैवानयतेराकांक्षोपरमात् अश्वान्वये प्रमाणाभावात्। न चोभयोः सन्निधाने सति गवैव कथं नैराकांक्ष्यं नाश्वेन विपरीतमेव कथं न भवति अश्वेन नैराकांक्ष्यान्न गवान्वय सम्भवतीति वाच्यम् ? अश्वान्वये गोपदस्याकाक्षानुपरमात् विपर्ययासंभवात्। ननु तस्यापि प्रत्यक्षाद्यवगताभिः स्थित्यादिभिरेव क्रियाभिराकांक्षाविरमेत्तेन प्रमाणान्तरेण स्थितावश्वे च सन्निहिते गौरानीयतामित्युक्ते गौस्तिष्ठत्यानीयतामश्व इति वाक्यद्वयं प्रतीयेत तन्न एकवाक्यस्याभावात्। यावन्ति हि पदानि संहत्य प्रयुज्यन्ते तावतां सति सम्भवे संहत्यैकविशिष्टार्थं प्रतिपत्तिपरत्वं लोकेदृष्टम्। तच्च श्रुतयोरेवान्वये निर्वहति। अन्यथा बाधितो भवेत्।

किञ्चैकेनैवान्वयेनोभयोरकांक्षापरमसम्भवे अनेकान्वय कल्पनमयुक्तं गौरवात्। तस्मात् पदान्येवान्विताभिधायीनि वाक्यार्थस्य प्रमाणमिति।

भाट्टः—अत्रोच्यते नैतत् प्रभाकरमतं समीचीनमिति।

तदुक्तम्—

अदृष्टकल्पनैतस्मिन् मतं हि स्याद् गरीयसी।
दृष्टबाधप्रसङ्गश्च तस्मादभिहितान्वयः।
दृष्टानुगुण्यं तत्र स्यात् कल्पना च लघीयसी॥

अयमर्थः—अन्विताभिधायित्वे हि पदानामवश्यमेव विशेषणभूतोऽन्वयोऽभिधातव्यः अन्यथाऽअन्वित प्रतीतेरुत्पत्तिर्न स्यात्। एवं चान्वितान्वयशक्तिद्वयकल्पनाददृष्टकल्पना गुरुतरा भवेत्। न च पूर्वमेवोक्तं न पृथगन्वये शक्तिः कल्प्यते एकैवशक्तिरन्वितपर्यन्ते कल्प्यते इति ? तन्न समीचीनम्।

शक्त्यैकया कथं हि स्यादुभयोरभिधेयता।
एक एव विशिष्टोऽर्थः सत्यमन्यद्विशेषणम् ॥ न्या० र० ८२ ॥

अयं भावः—यद्यपि विशिष्टरूपोऽर्थ एक एव तथापि विशिष्टाद्विशेषणमन्यदेव विशेषणेऽगृहीते विशेषणविशिष्टं विशेष्यं गृहीतुं न शक्यते। विशेषणस्य ग्राहकमन्यन्नास्ति शब्देनैव विशेषणाभिधानपुरःसरं विशिष्टस्याभिधानं कर्त्तव्यमिति शक्तिद्वयकल्पनाद्गौरवं स्यात्। तस्मात् पदैः पदार्थानां स्वरूपमात्रमभिधानीयम्। न चैवं वाक्यार्थज्ञानस्यानुपपत्तिरिति वाच्यम्? सर्वास्ववस्थासु सामान्यस्वरूपे पदार्थे पदशक्त्याभिहिते पदार्थैरेवान्वितस्वरूपावस्थाविशेषरूपवाक्यार्थप्रतीतेः सिद्धत्वात्। अतोऽनुपपत्यापि नान्विते शक्तिः कल्पयितुं शक्यते।

तदुक्तं पार्थसारथिमिश्रेण न्यायरत्नमालायाम्—

स्यात् स्वरूपाभिधानेऽपि धीर्विशिष्टार्थगोचरा।
विशेषधीर्हि सामान्यादनायासेन सिद्ध्यति ॥१२॥

यदुक्तमभिहितान्वयवादे गौरनीपातामित्यवकारके क्रियया च क्रियाकारकमात्राक्षेपात् नियमेन गौरानयनेनानयनं च गवान्वयं न लभेत इति? तत्तु—अन्वयस्याभिधानवादेऽपि समानम्। तथाहि प्रत्यक्षादिप्रमाणान्तरेण स्थित्यादिरूपे क्रियान्तरेऽश्वादिके-कारकान्तरे सन्निहिते सति गौरानीयतामित्येतत् पदद्वयमुच्चारितं सन्निध्यपेक्षा योग्यत्वानामविशेषात् स्थित्यन्वितां गामनय न चाश्वान्वितमभिदध्यान्ननियमेन गवानयनान्वयसिद्धिरिति प्रश्नेऽ-

न्विताभिधानवादे यदुक्तम्—एवं सति एकवाक्यत्वं बाध्येतेति तदाभिहितान्वयवादेऽपि तुल्यम्।

तुल्योभिधानपक्षेऽपि स दोषः शब्दगोचरः।
य स्तै ततैकवाक्यत्वं पदार्थेष्वपि तत्समम् ॥१३॥

सारथि —न्या० र० मा० पृ० ८२।

यद्यपि गोपदार्थेन क्रियामात्रान्वय आक्षिप्यते आनयेत्यर्थेनापि कारकमात्रान्वयः, तथापि ततः प्रतिपादकयोः पदयोरेकविशिष्टार्थप्रतीतपरत्वैकलक्षणैकवाक्यत्वावगमेन, तस्य बाधो माभूतदिति श्रुतयोरेव परस्परनियमः कल्प्यते। यत एवायं नियमः पदान्तरसमभिव्याहारात्मकाद्वाक्यादेव सिध्यति न पदार्थमात्रादतएव शब्दस्य प्रमाणान्तरत्वमन्यथानुमानं स्यात्। तेन पदार्थसामार्थ्यादनियमेनानेकवाक्यार्थपरिप्लवे सत्वेऽपि वाक्यार्थविशेषव्याप्त्यावसत्यामपि परस्परसमभिव्याहारादेव विशिष्टवाक्यार्थावगतिः सिध्यति। उक्तं च—

तत्रानैकान्तिकानेकवाक्यार्थोपप्लवे सति।
अन्यो न्यात्मव्यवच्छेदादेकत्र स्थाप्यते मतिः।
अतोऽन्वयातिरेकाभ्यामनुमाने यदिष्यते।
एकार्थैकाऽन्तिकत्वं तदन्यथैवात्र लभ्यत ॥

श्लो० वा० वृ० ९२०–२१, २७१–७२॥

अयं भावः—यदनुमाने व्याप्तेः फलमेकार्थनिर्णयस्वरूपं तदन्यत एव पदान्तरसमभिव्याहारलक्षणाद्वाक्यात् सिध्यतीति।

तेनैतदुक्तं भवति यदुभयोरपि वादिनोरनेकसाधारणान्वित प्रतिपादकशक्तिरेकवाक्यतया मिथो नियम्यते इत्येतावदवश्यं कल्पनीयम्। तत्र प्रमाणान्तरेण क्रियान्तरे सन्निहिते पदान्तरेण चानयने गोपदमाकांक्षाद्यविशेषादुभयान्वितगोप्रतिपादनसमर्थमप्यानयत्येकवाक्यतया तदन्वितमेव स्वार्थमभिधत्ते इति कल्प्यम्। अभिहितान्वयवादिनस्तु गोपदार्थः स्वभावादेव येन केनचिदन्वितं स्वमात्मानं प्रतिपायितुं समर्थः पदान्तेरेकवाक्यतया तदार्थान्वितमेवात्मानं प्रतिपादयतीति कल्प्यम् इत्येतावदावयोस्तुल्यम्। पदस्य तु अन्विताभिधानवादी विशिष्टे शक्तिं कल्पयति अभिहितान्वयवादिनस्तु स्वरूपमात्रे इति महान् विशेषः।

नन्वपेक्षायावान्नैषदोष इति चेन्न सत्यामप्यपेक्षायामदर्शनात्। अयमर्थः—अभिहितान्वयवादिनः साधारणीपदशक्तिवाक्यतया नियम्यत इति न कल्पयन्ति। कथान्तर्ह्यर्थान्तरेणान्विताभिधानं न भवतीतिचेदपेक्षाभावात्। सा ह्यन्विताभिधानोपलक्षणम्। न च प्रमाणान्तरप्रतीतयोः क्रियाकारकयोरपेक्षा विद्यते श्रुतयोस्तु अपेक्षा भवति सा परस्परसम्बन्धादपि निवर्तते इति नार्थान्तरान्वयप्रसङ्ग इति, तन्नैवं सत्यामप्यपेक्षायामन्वयादर्शनात् भवति हि कदाचिदियमवस्था यदैकस्मिन् देशे हेवाशब्देनाश्वमनुमापतस्य क्रियाविशेषं जिज्ञासते किमश्वोगच्छति तिष्ठति वेति। प्रदेशान्तरे च पदनिक्षेपशब्देन गतिमनुमाय कारकविशेषं जिज्ञासते किमत्र गौरश्ववो वा गच्छतीति। तस्यामवस्थायां गौस्तिष्ठतीति पदद्वयं कश्चिदुच्चारयति। तत्र यद्येकवाक्यत्वं नियामकं नेष्यते ततो देशादि शब्दाण्डमितस्याश्वस्य क्रियाविशेषापेक्षत्वात्तिष्ठति

पदादवगतायाः क्रियायाः कारकविशेषापेक्षत्वात् परस्परान्वयः स्यात् तिष्ठत्यश्व इति।

तथैव पदविक्षेपशब्दानुमितस्य गमनस्य कारकापेक्षत्वाद्-गोपदावगतायाश्च गोः क्रियापेक्षत्वादन्योन्यान्वयः स्यात्। गौर्गच्छतीति न नियमेन गौस्तिष्ठत्यन्वयः स्यात्। सन्निध्यपेक्षा-योग्यत्वानामविशेषात्। एवं च न दृश्यते। न च पदसामर्थ्यमेव पदान्तरस्मारितान्वितस्वार्थं विषयावबोधनाय व्यवस्थापकमिति-वक्तव्यम्। अथाष्टैरप्यन्विताभिधानस्येष्टत्वात्। तस्मात् पदसाम-र्थ्यान्नियमसिद्धिर्न स्यात्। अतएक वाक्यतैवशरणत्वेनार्थनीया-नियतैकान्वयबोधनाय पदैरप्यन्विताभिधायिः सा च पदार्थैरपि स्वभावसिद्धान्वयबोधनसामर्थ्यैस्तन्नियमायापेक्षितुं क्षम्यत इति अलमन्विताभिधानपरिकल्पनव्यसनेन। किञ्च धवखदिरावित्या-दिषु युगपदधिकरणे द्वन्द्वइत्यभ्युपगमाद्वाचकत्वानभ्युपगमाच्च अवश्यं खदिरो द्विवचनान्वयार्थं सं द्वितीयमात्मानं लक्षयति नाभिधत्ते येन केनापि स द्वितीयस्य तदन्वयोपपत्तौ किमर्थं धव स द्वितीयमेवात्मानं लक्षयति। तदेकवाक्यत्वादिति चेत्तर्हि तदेव सर्वत्र पदार्थानामन्याऽन्वितात्मकलक्षणायां कारणं भवतीति न कदाचिदक्लृप्त कल्पनम्। शक्तिकल्पनातुल्यैव स्यात् तथापि पदार्था एव वाक्यार्थे प्रमाणं युक्तमङ्गीकर्तुं न पदान्यानन्तर्यव्यवधाना-भ्याम्।

अयं भावः—अन्विताभिधानेवादेऽपि हि पदैः पदार्थेष्ववगतेषु पश्चाद्वाक्यार्थज्ञानं जायतेऽन्यथा सन्निधेर्दुर्लभत्वात्। ते तु तैरभिहिता स्मारिता वेत्यवविवादः सर्वथा तावत् पदग्रहणान्तरं

पदार्थेषु प्रतीतेषु वाक्यार्थविगतिरित्यविवादम्। ततश्चानन्तरानुभूतपदार्थातिक्रमेण व्यवहितानि पदानि वाक्यार्थावगतेः कारणं भवन्तीति कल्पयितुं न युक्तम्। पुनः पदानामनुसन्धाने च नकिञ्चन प्रमाणमस्ति। किञ्च दीर्घतमेषु वाक्येषु पदानुसंधानमशक्यमपि वर्तते। असत्यपि च पदानुसन्धाने पदार्थानुसन्धानमात्रेण वाक्यार्थः प्रतीयत इति सार्वजनीनयेतत्। तस्मात् दृष्टानुगुण्यादपि पदार्थनिमित्तक एव वाक्यार्थो न पदनिमित्तकः दृष्टबाधस्य प्रसङ्गात्—

पदार्थानाञ्च सामर्थ्यं गम्यमानमपह्नवम्।
आनन्तर्याद्धि वाक्यार्थस्तद्धेतुत्वं न मुञ्चतीति॥

एतेन यत् पदानामेवान्विते सामर्थ्यभिव्यक्तकारणमुक्तं प्राथम्यादिति तद्विपर्ययस्यैव साधकमिति वेदितव्यम्।

यत्तु पदानामेव तात्पर्यात् साक्षादन्वितप्रतिपादकत्वं युक्तमित्युक्तं तत् काष्ठानामनपेक्षितज्वालानां पाकसाधनत्वमाग्नेयादीनाञ्चाविवक्षिवान्तरव्यापाराणां परमकार्यसाधनत्वमापादमेत। अथ यदि तन्नाग्नेयादिस्वरूपेषु तिरोहितेषु जायमानं परमापूर्वं न तैः साक्षाज्जनयितुं शक्यते तात्पर्यश्चावालान्तरव्यापारद्वारेणापि साधयतामविरुद्धमित्युच्यते तदत्रापि समानम्।

अत्रापि हि तिरोहितेष्वेव पदेषु पदार्थानुसन्धानानन्तरमवगम्यमानस्य वाक्यार्थस्य पदार्था एव साक्षात् साधनं पदानि तु तद्द्वारेणैव साधनं न स्यादिति। न चैवयमभिधायकत्वं पदानां न स्यात् पदार्थस्वरूपावगतेः स्मरणादविशिष्टत्वात्।

केचित्तु स्मारकत्वेवास्तु नाभिधायकत्वमितीच्छन्ति। तथा चाहुः—

भावनावचनस्तावतां स्मारयति लोकवत्।
पदमप्यधिकाभावात् स्मारकान्न विशिष्यते॥
तेऽपि नैवास्मृता यस्माद्वाक्यार्थं गमयन्ति नः।
तस्मात् तत् स्मरणेष्वेव सङ्गतेषु प्रमाणता॥इति॥

—पृ० ६१४ श्लो० २४८

अन्ये त्वाहुः—प्रत्यासत्तिनिमित्तं स्मारकत्वं भवति। पदपदार्थयोश्च संयोगसमवायादिलक्षणा प्रत्यासन्तिर्नास्ति यतः स्मारकत्वं स्यात्। वाचकत्ववदिति चेन्न तस्य स्वाभाविकत्वात्। अत्र यद्युच्येत यथासम्बन्धराभावेऽपि वाचकत्वं एवं स्मारकत्वमपि भविष्यति इति तन्न समीचीनम्। स्वाभाविकत्वाद्वाचकत्वस्य प्रत्यायकत्वं हि वाचकत्वं तच्च स्वभावशक्त्याप्युपपन्नं यथा चक्षुरादीनां रूपादिषु।

ननु तत्रापि संयोगसंयुक्तसमवायत वत् समवापलक्षणः सम्बन्धो विद्यते। सत्यं वर्तते, किन्तु स रसादि साधारणोऽस्ति। शक्तिरेवत्वसाधारणं प्रत्यायकत्वे कारणम्। तद्वच्छब्दस्यापि स्वाभाविकयैव शक्त्या प्रतिपादकत्वं भविष्यति स्मारकत्वं तु संस्कारोद्बोधेन भवति। न च सम्बन्ध्यन्तिरादर्शनेनासाबुद्बोधयितुं शक्यते क्वचिदप्यदर्शनात्। ननु प्रत्यायकत्वमप्यसम्बन्धिनो नेव दृष्टम्। स्वाभाविकशक्तिशालिनामपि चक्षुरादीनां सम्बध्येव प्रतिपादकत्वात्। अन्यथा दविष्ठाव्ययपिग्रहणप्रसङ्गात्। शब्दस्य तु न कश्चिदर्थेन सम्बन्धोऽस्ति तत्कथमस्य प्रत्यायकत्वं भवेत्।

अथान्यत्राऽदृष्टमपि तदिदैव कल्प्यते तर्हि स्मारकत्वमेव किमिति न कल्प्यते। वक्तव्यो वा विशेषः कश्चित्। स तर्हि उच्यते-सर्वथा तावदन्यत्रासम्बन्धिनो दृष्टमपि स्मारकत्वं प्रत्यायकत्व-शब्दस्य वा कल्प्यम्। तत्र प्रत्यायकत्वकल्पनमेव ज्यायः। शब्दानन्तरमर्थप्रत्ययदर्शनात्तस्यैव तत्र कारणत्वं कल्पयितुमुचितं न तु शब्दात् संस्कारस्योद्बोधः। ततश्चार्थप्रतीतिरिति युक्तंपरम्पराया प्रमाणाभावात्। तस्यादभिधायकमेव पदं न स्मारकमिति। ननु गृहीतग्राहित्वात् स्मरणमेव पदजन्यविज्ञानमिति चेन्न स्मृतेः भिन्नलक्षणत्वात्। गृहीतग्राहित्वं स्मरणस्य लक्षणं नास्ति किन्तु संस्कारमात्रजन्यत्वम्। प्रत्युत्पन्नकारणजनितं तु यद्गृहीत ग्राहिज्ञानं तदनुवाद इत्युच्यते न स्मृतिरुच्यते।

ननु पूर्वोक्तवार्त्तिकघटना कथं स्यादिति चेत्? न अनुवादस्यापि गृहीतग्राहित्वेन स्मरणादविशिष्टत्वात्।

"भावनावचनस्तावतां स्मारयति लोकवद्ध"इत्यादिष्वौपचारिकस्मरणव्यवहारो वर्तते। तथा च परमभ्यधिकाभावात्स्मारकानां विशिष्यते इत्युक्तम्। न तु स्मारकमिति दर्शयति तेनार्थस्वरूपमात्रेऽपि वाच्येभिधायकत्वपदस्य युक्तमिति।

तथा चोक्तस्य संग्रहश्लोकः—

प्राथम्यं कारणं यत्तु तद्विपर्ययसाधनम्।
ये तात्पर्याभिधातृत्वे तेऽप्यनैकान्तिकी कृते ॥१४॥

—न्या० र० मा० पृ० ८७ श्लो० १४॥

किञ्च यद्यभिधानतः एवान्वितप्रतीतिः तर्हि गङ्गायां घोष इत्यादिषु लाक्षणिकस्य तीरादेर्घोषान्वितस्य कथं प्रतिपत्तिः, नहि

तत् स्वरूपमपि गङ्गाशब्दस्याभिधेयं प्रागेव। अथोच्यते— गङ्गाशब्देन निमित्तभूतेऽर्थस्वरूपे स्मारिते सति तेन यत्संबन्धात् स्मारितं तीरस्वरूपं तेनान्वितं स्वार्थं घोष शब्दो भिद्यते गंगाशब्दस्तु तीरस्मरणमात्रोपयोगीति।

यत्र तर्हि सर्वपदानामेव लाक्षणिकार्थत्वं कस्यचिदपि मुख्योऽर्थो न विद्यते तत्कथमन्वितप्रतीतिः स्यात्। यथोक्तम्—

अस्ति वा तादृशं वाक्यं सत्यं यत्र न विद्यते।
कार्यं तदन्वितं वापि यथागच्छति भूमिपः ॥१५॥

—न्या० र० मा० पृ० ८८ श्लो० १५।

अयं भावः—सर्वेषामेव पदानां कार्यं तदन्वितं वाऽभिधेयम्। लिङ्गादीनां कार्यमन्येषां तु कार्यान्वितमभिधेयम्। यस्तु लोके कुतूहलप्रश्नप्रतिवचनरूपः सिद्धार्थविषयः शब्दप्रयोगः कार्यशून्यो दृश्यते। यथा कोऽयं गच्छति भूमिपो गच्छतीत्यादिः। कवीनां वाऽर्थविशेषवर्णनारूपः यथा—

नीलोत्पलवनेष्वद्य चरन्तश्चारुसखाः।
रामाः कौशेयसंवीताः कादम्बा इव शोभनाः॥

इत्यादित लाक्षणिक इति हि अन्विताभिधानवादिना समयोऽस्ति। तन्नाप्यन्वितसंविदस्त्येव। असौ चान्वितप्रतीतिः पदैरुदेतुं नार्हति तेषामतदभिधायकत्वात्। न हि भूमिपशब्दस्य कार्यान्वितस्वार्थाभिधायित्वादाकांगादिन्नयशालिनाऽपि गच्छत्यर्थेनान्वितः स्वार्थोऽभिधेयः तथा गच्छतेरपि तदन्वितोऽनभिधेय एवेति तस्मान्न पदमभितान्वयप्रतीतिर्भवेत्।

 

तस्मादवश्यं पदस्मारितनिमित्तभूतार्थस्वरूपाभ्यामेवाकांक्षायोग्यत्वैकवाक्यत्वसनाथाभ्यां भिथमन्वितसंविदुदयमासाद्यतीव्यकार्येनाप्यनुज्ञातव्यम्। ततश्च सर्वत्रैव तथास्तु किमन्विताभिधान कल्पनया। अन्वयद्युप्येतसिद्धार्थेषु पदनिमित्तावाक्यार्थंसंवित्तथा पदार्थनिमित्ताऽपि न भवति किन्त्वनुमाननिमित्ता वाक्यरचना यतः पौरुषेविशिष्टार्थविवक्षापूर्विका तामनुमापयति। सा च स्वकारणभूतं विशिष्टविज्ञानं तेन च विषयभूतार्थानुमानसिद्धौ सर्वंपदार्थानामन्वितत्वप्रतिपादनसामर्थ्यमुपकल्पयितुं शक्यते इति।

तन्न समीचीनम्—यद्येवं स्यात् तर्हि गामानयेत्यादिस्वपि तदुक्तयैव नीत्यानुमानपरम्परया विशिष्टकार्यविगम् सिद्धेः पदानामप्यन्विताभिधायित्वं सुकज्वयं न स्यात्। तदुक्तम्—

यत्रापि कार्यसंवितित्तस्तत्राप्येवं प्रसज्यते।
पदानामपि सामर्थ्यमन्वितेऽतो न सिध्यति॥

१७। न्या० र० मा०॥

अत्र यदुच्यते—विशिष्टार्थविषयव्यवहारदर्शनेन हि व्यवहरमाणस्य तद्विषयमेवविज्ञानमुत्पन्नमित्यवश्यङ्गीकर्तव्यम्। न च तद्वाक्यमात्रात् सिध्यति किन्तु विशिष्टवाक्यावगमात्। तस्य चार्थाभिधायित्वमेव विशेषः। विशिष्टवाक्यार्थप्रतिपादकेन हि वाक्येन तद्विषयविवक्षां वक्तुरनुमाय ततो विशिष्टार्थविषयविज्ञानानुमानद्वारमर्थविशेषमनुमाय प्रयोज्य वृद्धो विशिष्टार्थव्यवहाराय घटते नान्यथा। तस्मादवश्यं विशिष्टार्थप्रतिपादकत्ववाक्यस्याभ्युपगन्तव्यम्। तच्चान्वयव्यतिरेकाभ्यामवयवशक्तावेवेति सिद्धं पदानामन्विताभिधायित्वमिति।

यदुक्तम्—

यदर्थविषयं वाक्यं तेनासावनुमीयते।
नान्यस्तेनान्विते सिध्येत् पदानां शक्तिनिर्णयः॥

१८॥ इति न्या० र० मा० पृ० १६॥

इति तन्नैव युक्तम्—

यतः सिद्धर्थेभ्योऽपि वाक्येभ्यः पार्थिवो गच्छतीत्यादिभ्यो राजगमनादिरूपविशिष्टार्थविषयमेवविज्ञानमुपजायते तच्च वक्तुर्विशिष्टज्ञानानुमानात्। विशिष्टवाक्यरचनया च तादृश-ज्ञानानुमानं भवति।

वाक्यस्य यः विशेषस्तदर्थं प्रतिपादकतया स्यान्नान्यथा।
तेन विशिष्टार्थं प्रतिपादकत्वं वाक्यस्याभ्युपगन्तव्यम्।

तत्र च पदानां कार्यान्वितस्वार्थाभिधायिनामतादृशे सामर्थ्या-भावात् पदार्थद्वारेणैव विशिष्टार्थं प्रतिपादकत्वमभ्युपेतव्यम्।

तदुक्तम्—

सिद्धार्थेभ्योऽपि वाक्येभ्यो विशिष्टार्थविबोधनात्।
पदानाञ्चासमर्थत्वात् पदार्थानां निमित्तता॥१६॥

यद्युच्चेत, नावश्वयमन्वितप्रतिपादकेनैव वाक्येन तद्विषय-विज्ञानानुमानं अर्थविशेषस्मारकपदसंघातविशेषादेव विशिष्टा-नुमानलाभात्। तथा हि ईदृशीव्याप्तिसंवित् यो येषां पदार्थानामि-तरेतरान्वययोग्यानां प्रतिपादकानि पदान्याप्तः समुच्चारयन्ति तस्य तेषामन्वये ज्ञानमस्तीति एवञ्चान्तरेणापि पदार्थानामन्वित-प्रतिपादकत्वं पदविशेषरचनयैव ज्ञानानुमानद्वारेण सिद्धार्थेषु

विशिष्टवाक्यार्थानुमानसंभवात् न पदार्थनिमितत्ववाक्यार्थस्य सिध्यतीति । एवन्तर्हि—गामानयेत्यादिवाक्येष्वपि पदानां पदार्थस्वरूपाभिधायकत्वमात्रेणापि विशिष्टज्ञानानुमानं पुरस्सरं विशिष्टवाक्यार्थानुमान - संभवान्नान्विताभिधायित्वं सिध्येत् । विनाप्यन्विताभिधायित्वं स्वरूपाभिधाय कृत्वमात्रेणापि येषां पदार्थस्वरूपाणामन्वययोग्यानां त्रिघायकानि पदानि येनाप्तेनोच्चारितानि सतदन्वयविदतीदृश्यैव व्याप्त्याविशिष्टज्ञानानुमानसंभवात् ।

तदुक्तम्—

कार्यार्थेभ्योऽपि वाक्येभ्य एवमेव प्रसिध्यति ।
वाध्यार्थवेदनं तेन न सिध्येदन्विताथता इति ॥

न्या० र० मा० पृ० ९०, श्लो० २० ॥

किञ्च स्वरूपमात्रमपि नाभिधेयं पदविशेषस्यैव वाचकत्ववदविशिष्टार्थविषयेणैव विज्ञानेनव्याप्तिग्रहासम्भवात् । यथा हि वाचकत्वं प्रतिपदमर्थविक्षेषं प्रतिगृह्यते गोपदं सास्नादिमतो वाचकम् अश्वपदं वाजिवाचकमिति तथा तदन्वितार्थविषयविज्ञानव्याप्तिस्तस्य तस्य पदस्य ग्रहीतुं शक्यते । आप्तस्य गोपदरचनाकांक्षित - संनिहित - योग्यतार्थान्तरान्वितसास्नादिमद्विज्ञानपूर्विकेति । ततश्च पदानाम्—

अर्थ स्वरूपवाचित्वमपि नैव प्रसिध्यति ।
प्रागेवान्वितवाचित्वमतो वेदाप्रमाणता ॥ २१॥

न्या० र० मा०

यतः अपौरुषेयस्य वक्तृज्ञानानुमानद्वारवाक्यार्थप्रतिपादकत्वं वेदवाक्यस्य सम्भवतीत्यप्रामाण्यं स्यात्। यदुच्येत—शब्दश्रवणसमनन्तरभाविनी प्रयोज्य वृद्धस्य चेष्टामुपलभ्य विशिष्टार्थविषयाप्रतीतिस्तस्य कल्प्यते। सा च शब्दानन्तर्यात्तत्कारणिकैवेति शब्दस्य तद्वाचकता शक्तिः कल्प्यते पश्चात्तु कस्यचिदयथार्थपदरचनामुपलभ्य कथं व्यभिचारिणो वाक्यात् प्रयोज्य वृद्धस्यार्थनिश्चयः संजात इति विचिकित्स्यैवमवधारयति।

नूनमनेनैवायं वक्तैवमवधारितः नायमन्विततार्थानि पदानि प्रयुङ्क्ते तेन नूनमेतन्नैषामन्वयो ज्ञातइति ज्ञानानुमानपुरःसरमर्थं निश्चितवामिति कल्पयति। पूर्वविगतन्तु वाचकत्वं मिथ्या न मन्यते तस्यादस्ति वाचकत्वमिति।

नैतत् सारं यतः प्रयोज्यवृद्धस्य शब्दानन्तरभाविनीप्रतिपत्तिः शब्दजन्या नास्ति यत्तस्य शक्ति कल्पयेत्। शब्दानुमितवक्तृज्ञानलिङ्गजन्यत्वात्। अन्यतो निष्पन्नं कार्यमन्यस्य शक्ति न कल्पयति—अतिप्रसङ्गात्। यद्यपि च तस्यामवस्थायामजन्यत्वानवधारणाच्छब्दानन्तर्याच्छब्दजन्यत्वभ्रान्त्याऽवगम्य शब्दस्य शक्तिभ्रान्त्यावगम्यते तथापि पश्चादतज्जन्यत्वमवगत्य तज्जन्यत्वभ्रान्तौ निवृत्तायां तन्निमित्ता शक्तिः भ्रान्तिरपि निवर्तिष्यत एवेति।

धूमायमानधूममहिषजनितधूमध्वजविज्ञानवत्। तद्धि स्वरूपेणाबाधितमपि लिङ्गबाधादेव निवर्तते। तथा शब्दस्यापि वाचकत्वकल्पना कार्यस्यातज्जन्यत्वावधारणात् निवर्त्तितुमर्हति।
तदुक्तं सारथिना मालायाम्—

न हि कार्यात्तज्जन्याच्छक्तिः शब्दस्य कल्प्यते।
स्यात्तु तज्जन्यताभ्रान्तेर्भ्रान्तिः सा च निवर्त्स्यति ॥२२॥

नन्वनुमितमप्यर्थं पश्चानुवदद्वाक्यं वाचकं शक्तं स्यादिति चेन्न। अनुवादकत्वे प्रमाणाभावात्। यतोऽनुवादकत्वमन्तरेण किञ्चिदनुपपन्नं नास्ति यतस्तत् कल्प्येत। ननु शक्तत्वादनुवादकत्वमिति चेत्? न अन्योन्याश्रयात्। शक्तेरनुवादस्ततश्च शक्तिरिति। तस्मादस्य वाचकत्वेनैव सिध्यति यदि परमर्थविशेषविषयज्ञानानुमानसिद्ध्यर्थं पुनर्वाचकत्वमवस्थाप्येत तच्चान्तरेणापि वाचकत्वशब्दविशेषस्यज्ञानविशेषेणैव व्याप्तिग्रहणसम्भवादनुपपन्न - तस्याल्लोकक्सामनुमानत्वेन प्रामाण्याङ्गीकरणे पदानां वाचकत्वायोगादप्रतिपादकत्वेनाप्रामाण्यं वेदस्यस्यादिति तत् प्रामाण्यसिद्धयर्थं लोकेपि शब्दानां शब्दतयैव प्रामाण्यमभ्युपगन्तव्यम्।

ननु मा भूतस्य प्रामाण्यं न तु तावता प्रमाणमन्तरेण वाचकत्वकल्प्येत। न हि किञ्चित् प्रमाणमस्ति यतः शब्दस्य वाचकत्वं कल्प्येत। तदभावेऽपि पूर्वोक्तन्यायेनानुमानत एव लोके शब्दानन्तरमर्थविगमसम्भवात्। उक्तं सर्वं स्याद् यदि—आप्तवाक्यश्रवणादेवार्थसिद्धिःसम्पद्येत। न चैवमस्ति—अनन्यमनस्कानां स्तिमितान्तरात्मनां वक्तुर्धी विशेषं तस्य चाप्तानाप्तत्वमनाकलपतामेव यतः कुतश्चिदुच्चरन्ति पदानि सहसैव संविदमर्थगोचरामुत्पादयन्तीति सार्वजनीनमेतत्। न चानुमानं सम्भवतीति शब्दानामेव वाचकत्वशक्तिरवश्यकल्पनीयाते नाभिहितान्वय-

वादिनां नास्ति किञ्चिद्दूषणम् । ये तु सर्वजनसिद्धमप्येतदपह्नुत्या-नुमानत्वमेव लौकिकवचसां सङ्गिरन्ते तेषामेव वेदा प्रामाण्यस्यात् ।

यतो तदुत्पन्नाद्वाक्यार्थ - विज्ञानाच्छब्दस्याभिधायकत्वं कल्पयितुं न शक्यते प्रागेवान्विताभिधायित्वमन्वितप्रतीते रसिद्धत्वात् । यतः शब्दश्रवणानन्तरं प्रयोज्य वृद्धस्यान्वित-सेविदुश्चेकिञ्चनप्रमाणमस्ति यदन्वितार्थविषयताशब्दस्य सिध्येत् ।

तदुक्तम्—

जन्मतुल्यन्तु बुद्धीनामाप्तानाप्तगिराश्रुतौ ।
न चानाप्तोक्ति जाता धीर्लिङ्गादुत्पत्तुमर्हति ॥२३॥

शब्दशक्तिरतः कल्प्या तदुत्पत्तिप्रसिद्धये ।
येत्वनाप्तोतितो बुद्धेरनुत्पत्तिं प्रचक्षते ॥२४॥

लिङ्गत्वं चाप्तवाक्यस्य त्वेषामेव तु दूषणम् ।
एतावानेन भेदः स्यादाप्तानाप्तगिराममम ॥२५॥

यन्नानाप्तोक्तिजातायाः प्रामाण्यं स्थाप्यते धियः ।
वक्तृदोषेण दुष्टत्वादाप्तोक्तेर्या तु जायते ॥२६॥

प्रामाण्यं स्थाप्यते तस्या वक्तृ धी हेतुसम्भवात् ।
बुद्धिजन्योभयश्चापि विद्यते अतो न दूषणमिति ।.२७॥

नन्वनुमानेन प्रयोज्य वृद्धस्यान्वितप्रतीतिरवगम्यत इति चेत् ? न अनुमानस्य लिङ्गादर्शनात् । ननुप्रवृतिरेव लिङ्गं सा हि विशिष्टावगतिपूर्विका तामनुमापयतीति चेत् ? न प्रवृत्तेरनै-कान्तिकत्वात् । तदुक्तम्—

प्रमाणमनुमानञ्चेन्नतद्धेतोरदर्शनात् ।
अथप्रवृत्तिलिङ्गत्वं तन्नानैकान्तिका हि सा ॥२८॥

अयं भावः—प्रवृत्तिर्हि अन्विताभिधानवादिनां मते शुक्तिकायामिव रजतार्थिनो विवेकाग्रहणादपि सिध्यति। तेन गामानयेत्यत्रगोप्रातिपदिकेन द्वितीयया धातुना विधिप्रत्ययेन च चतुर्ष्वर्थेषु स्वरूपमात्रेणाभिहितेषु अनभिहितेऽप्यन्वये नन्वयाग्रहादेव प्रवृत्तिसिद्धेर्नान्वितप्रतीति कल्पयितुं शक्यते।

यो रजतमिदमिति पुरः, स्थितवस्तुगोचरां संविदुदीयमानां साक्षात् कुर्वाणोऽपि क्लृप्तकारणानुपलब्ध्याऽपहनुत्यान्यथा दृष्टमपि भेदाग्रहणस्य प्रवृत्तिहेतुत्वम्—अदृष्ट-कल्पनाविशेषेऽपि दोषसहितेन्द्रियादेरयथार्थज्ञानजनकत्वमवगत्यनुसापिकल्पयित्वा कल्पयति स कथं क्लृप्तप्रवृत्तिहेतुभावभेदाग्रहणादपि सिध्यन्त्या प्रवृत्या नैकान्तिक्यान्वितसंविदं परस्यानुमाय तत् कारणत्वेन चान्यज्ञावलृप्तमपि शब्दस्य सामर्थ्यं कल्पयन्न लज्जते।

यद्युच्यते भेदाग्रहणनिबन्धनस्य व्यवहारस्य विसंवादो भवति यथा तस्यैव शुक्तिकायां रजतव्यवहारस्य गामानयेत्यादिषु च विसंवादो न समस्ति तस्मानाभेदाग्रहणनिबन्धन इति। तन्न समीचीनम् अग्रहणनिबन्धनस्यापि ज्वालैकत्वव्यवहारस्य उष्णजलव्यवहारस्य चाविसंवाददर्शनात्। तथा—

विधूमपावकाद्देशादूर्ध्वं वाष्पं विलोकयन्।
अग्निसत्ताभिमानेषु प्रवृत्तो न विहन्यते ॥२९॥

न्या० र० मा० पृ० ६४

इदं चापरमुदाहरणं यदेकस्मिन् देशे विधूमोऽग्निरवस्थितः तस्य चोपरिवाष्पोद्गमो भवति तं च कश्चिद्धूमं मत्वाऽस्याधस्तादग्निरस्तीत्यभिमन्यमानोरन्यर्थी तदा जिहीर्षयाऽग्निप्रतिलम्भान्न विसंवादमृच्छति तदा तत्राग्रहणनिबन्धनस्यापि व्यवहारस्याविसंवाददर्शनाद नैकान्तिको व्यवहाराविसंवादो नान्वितज्ञानोत्पत्ति कल्पनायां प्रमाणं भवितुमर्हति ।

तस्यापरिकल्पनाच्च नान्विताथंत्वं शब्दस्य सिद्धयतीत्यप्रमाण्यं वेदस्य वाक्यार्थं प्रति स्यात् । तस्मादेवमन्वितज्ञानस्यासिद्धत्वात् सिद्धत्वेऽपि तस्य शब्दशक्तिमन्तरेणैव वक्तृज्ञानानुमानद्वारेणात्मलाभसम्भवात् वाक्यजन्यत्वेऽपि सिद्धार्थपरेष्विव वाक्येषु पदावगतपदार्थसामर्थ्यप्रमावितत्वसम्भवाद् अन्विताभिधानावादिमते तु यद्यप्यग्रहणाधीनव्यवहारासंभवादनुमानत्वेन प्रमाण्यानङ्गीकारात् सिद्धर्थेत्वपि वाक्येषु शब्दानां श्रुतिवृत्तत्वादित्यादिभिर्हेतुभिरन्विताभिधायित्वनिराकर्तुं न शक्यते तथापि दृष्टबाधात् कल्पनागौरवाच्च निरासः क्रियते । न च कल्पना गौरवं नास्ति, यतः एतावतीशक्तिरस्माकम् अन्विताभिधानवादिनां कल्पनीया— पदानाम् आकांक्षितयोग्यात्मकवाक्यभूतपदप्रतीतश्च यदभिन्तरं तेनान्वितं स्वार्थमभिदधति पदानीति । न चैवमध्याहृतेः संवरणादिभिर्द्वारादेरनन्वयप्रसंगः तत्रापि अस्मन्मते संनियतामित्यादिकस्य पदस्यैवैक वाक्यभूतस्याध्याहारात् तत् प्रतिपादितैः संवरणाभिरन्वयसंभवात् एतावती च पदार्थानामपि कल्पनीयेवेति न शब्दशक्तिकल्पना गौरवमस्माकमन्विताभिधानवादिनामितिचेद् अत्रोच्यते क्लृप्तमन्वितसामर्थ्यंपदार्थानां स्वभावता ।

एव वाक्यतया तत्र कल्प्यं नियमात्रकम् । ३०॥ न्या० र० मा०

अक्लृप्तमेव सामर्थ्यं पदानामन्विते ऽर्थवत् ।
कल्प्यं स्वरूपक्लृप्तिश्च गुर्वीनियमकल्पनात् ॥ ३१॥ न्या० र० मा० ॥

अयं भावः—पदानां तावदर्थस्वरूपे शक्तिकल्पनमुभयोरपि पक्षयोः समानम् । अभिहितान्वयपक्षे पदार्थानामन्वितप्रतिपादकत्वसामर्थ्यंक्लृप्तमेव । नियममात्रमेकवाक्यतया कल्पनीयम् ।

तच्च लघीय दृष्टानुभोग्यं च प्रागेवोक्तम् । यत्तु सन्निध्यपेक्षायोग्यत्वाविशेषे अपि प्रमाणान्तरावगतारावगतानामर्थानां नियतान्वयनिमितत्वं न दृष्टं शब्दावगतानाश्च तत् कल्पेन शक्तियं कल्पनीयमित्युक्तम्—तत् सन्निधिमात्रस्याङ्गता नाङ्गीकारात् परिहृतं भवति । स्वाभिधायकपदैकवाक्यभूत पदान्तराधीनो हि सन्निधिः पदार्थानां नियतैकान्वितबोधेऽङ्गं न चासौ प्रमाणान्तरावगतेष्वस्तीति न तत्र नियतैकवाक्यार्थाऽवगतिरस्ति । यतश्चैकवाक्यभूत पदान्वयाधीन एव सन्निधिः पदार्थानामन्वितबोधेऽङ्गं न तु सन्निधिमात्रम्, अतएवापरिपूर्णेषु विश्वजिदादिवाक्येष्वाकांक्षितस्यार्थस्य शाब्दसन्निध्यर्थं शब्दस्यैवकल्पनाच्छ्रुतार्थापत्तेः शब्दगोचरत्वं सिध्यति । एवं चातिदिष्टेषु मन्त्रादिषु प्रावृतेऽग्न्यादिपदेऽर्थं लोपान्निवृत्ते निर्वापादिषु सूर्यादिपदाध्याहारादूहः सिध्यति । अन्यथाऽसो न स्यादित्यलमति विस्तरेण । यद्यपि पदानां पदार्थानां चोभयेषामपि सामर्थ्यमपूर्वमेव कल्पयितव्यं तथापि पदार्थानामेवकल्पयितुं युक्तं नपदानाम् इति । तथाहि यत्रन्तावेदकं पदमेकश्च पदार्थः तत्रान्विताभिधानपक्षे पदस्य द्वे शक्ती कल्पये अभिहितान्वयपक्षे पि पदस्यैका पदार्थस्य चैकेति द्वे एवेति तुल्यम् ।

यत्राप्येकशब्दस्यानेकार्था वाच्या: यथाक्षशब्दस्य विदेवनादि त्रयं तंत्राप्यन्विताभिधायित्वं प्रत्यर्थं शब्दस्य शक्तिद्वयकल्पनात् षट्शक्तयः स्युः अभिहितान्वेऽपि शब्दस्य प्रव्यर्थमेकैक शक्ति कल्पना तिस्त्र पदार्थानाच्च त्रयाणां तिस्त्र इति षडेवेतिसमानम्। यत्र तु बहवः शब्दा। एकस्यार्थस्य वाचकाः यथा पाणिकरहस्त-शब्दास्त्रान्विताभिधानपक्षे प्रतिशब्दं शक्तिद्वयकल्पनात् षट्शक्तयः-स्युः। अभिहितान्वयपक्षे तु त्रयाणां शब्दानामर्थस्य चैकैकशक्ति-कल्पनाच्चतस्त्र इति लाघवमस्ति। एवंच तुः पञ्चषडादिषु शक्त्यु-पचयो दर्शयितव्यः। चतुर्षु त्रयाधिक्यं पञ्चासु चतुस्काधिक्यं षट्सुपञ्चकाध्यिक्य मित्यूह्नीयम्।

शक्तितकल्पना तुल्यत्वेऽपि चानन्तर्यात् पदार्थानामेव वाक्यार्थं निमित्तत्वयुक्तं न पदनामिति पूर्वमेवोक्तम्। तस्मादभिहितान्व-यवाद एव ज्यायान्। तथा च सूत्रकारः अर्थस्य तन्निमितत्वादिति स्पष्टनेव पदार्थ निमित्तकत्वं वाक्यार्थस्य दर्शयति। मी० द० पृ० ३८ सू० १।१।२५॥ भाष्यकारोऽपि पदोनित्यं स्वमर्थमभिधाय निवृत्तव्यापाराणि अथेदानीं पदार्थाः अभिहितासन्तो वाक्यार्थ-मवबोधयन्तीत्याह। पत्त्वस्य व्याख्यानं क्रियते व्यतिषक्ताभिधा-यिपदं नव्प्रतिज्ञाभिधायि व्यतिषक्तोयतिषङ्गस्यावगतत्वात्।

तस्य तावदयमर्थः यथैवाक्रिया शब्देनाभिधीयमानया सह प्रतीयमाना व्यक्तिः शब्दजप्रतीतिगोचराप्याकृतिगम्येत्युच्यते, तत्र आकृति प्रत्ययो हि व्यक्ति प्रत्ययस्य निमित्तमिति। यतः तत्राकृतिमात्रं शब्देन नावगम्यते तथाव्यक्तिरपीतियुक्तम्।

केवलाया जातेः प्रत्येतुमशक्यत्वात् । आकृतेः खलु स्वभावः यदसौ नान्तरेण व्यक्ति प्रतीतिमारोढुं क्षमते रूपम् हि साव्यक्तेः न च रूपिशून्या रूपेबुद्धिरस्ति । यदि स्यात् रूपितैवनस्यात् । तस्मात् व्यक्त्यैव सहजातिः प्रतीयते । अथवाकृति प्रत्ययो व्यक्तिप्रत्ययस्य निमित्तमित्युच्चते । तत् कस्य हेतोरिति जिज्ञासायामुच्यते शब्दोहि स्वशक्त्या जातिमेवाभिद्येत तस्यास्तु व्यक्तिमन्तरेण प्रत्यायितुमशक्यत्वाद्व्यक्तिमपि प्रत्यायति । तस्मात् स्वाभाविकं-शब्दस्य आकृतिप्रत्यायकत्वमस्ति । तन्निर्मितं तु व्यक्तिप्रत्याय-कत्वमिति आकृतिप्रत्ययो व्यक्तिप्रत्यस्य निमित्तमित्युच्यते नतु शब्देन प्रथमवगताऽदकृतिः पश्चाद्व्यक्तिमवबोधयतीति । तथैव न्विताभिधायिनाशब्देनाऽन्वयं विना अन्वितस्यबोधयितुमशक्यत्वात् अन्वयोऽवबोध्यमानः पदार्थ निमितक् इत्युच्यते । भाष्येव पदार्थशब्देनान्वित इत्युच्यते वाक्यार्थं शब्देना पदार्थाः वाक्यार्थं-मवसेधायन्ती अन्विता अन्तयमवबोधयन्तीत्यर्था । अन्वितप्रति-प्रतिपादकत्वं निमित्तमन्वयप्रतिपादकत्वमिति यावत् । तन्न समी-चीनम्—तथाचोक्तम् सारथिना—

सेयं क्लिष्टेन मार्गेण ग्रन्थव्याख्या न शोभते ।
पदार्थानां हि वाक्यार्थे स्पष्टोक्ताऽवनिमित्तता ॥ ३२ ॥
यद्यन्विताभिधायित्वं पदानां युक्तिमिद्धंदम् ।
क्लिष्टेनापि प्रकारेण ग्रन्थव्याख्या ततो भवेत् ॥ ३३ ॥
पदैरभिहिताः स्वार्थाः वाक्यार्थस्यावबोधका ।
प्रसाधितापदादुक्त्या तदा नैषोपपद्यते ॥ ३४ ॥
अन्वितप्रतिपत्तेश्च निमित्तं पूर्वपक्षिणा ।
आक्षिप्तं तेन तन्मूलं भास्येणानेन कथ्यते ॥ ३५ ॥

अभ्युपेत्यान्विते मूलं यदि स्यात् पूर्वपक्षिणा ।
आक्षिप्तमन्वये मूलं समाधीयेत तत्त्वतः ॥ ३६ ॥
न त्वेतदस्ति तेनेयं व्याख्यानं नोपपद्यते ।
यत्तु व्यक्तिवदित्युक्तं तदयुक्तं न शब्दतः ॥ ३७ ॥
व्यक्तिप्रतीतिरस्माकं जातिरेव तु शब्दतः ।
प्रथमावगता पश्चाद्व्यक्तं यां कञ्चिदाक्षिपेव ॥ ३८ ॥

अयमर्थः—जात्यभिधायी हि शब्दजातिमेव बोधयति व्यक्ति न बोधयति सामर्थ्याभावात् । असमर्थाच्च कार्योत्पत्तावतिप्रसङ्गात् । जात्यवगतेरपि असमर्थावोत्पत्तिसंभवात् । अथव्यक्तावपि शब्दस्य सामर्थ्यमस्तीत्युच्यते तर्हि साऽप्यभिधेया स्यात् । यदि तु यत्र स्वाभाविकी शक्तिस्तदभिधेयं जातिश्च तथा तदभिधायकत्वं निमित्ता च व्यक्तौ शक्तिरस्ति ततो नासावामधेयेत्युच्यते तन्न समीचीनं प्रमाणाभावात् । यदि तस्यार्थं द्वयेऽपिशक्तिद्वयं शब्दस्यकल्पितं ततः केन प्रमाणेनायमवान्तरविभागोऽवगम्यते स्वाभाविक्याकृतौ शक्तिर्व्यक्तौ तु तन्मूलिकैवेति ननु न व्यक्तौ शब्दस्य शक्तिः किन्तु जातावेवसा तुशब्दे नैवप्रतीयमाना वस्तु स्वभावाद्व्यक्त्या सहप्रतीयत इति चेत् ? न व्यक्तिप्रतीते कारणाभावात् । अप्रतीयमान च व्यक्त्या सहजातेः प्रत्येतुमशक्यत्वात् ।

कथं व्यक्तिप्रतीतेः कारणं नास्तीतिजिज्ञासायामुच्यते शब्दस्य तत्राशक्तत्वेनाकारणत्वात् । जाति प्रतीतेश्चततः पूर्वमनिष्पन्नत्वेन तत्कारणत्वायोगात् । तस्यातपूर्वावगतिर्जातिरङ्गीकर्त्तव्यास्यात् । ननु जातिः केवला प्रत्येतुं न शक्यते इति चेत् जाते रप्रतीतिरेव

प्रसज्येत। व्यक्तितावत् प्रत्यायकाभावान्न प्रतीयते तस्यां चाप्रतीयमानयां तया सह जाति प्रत्येतुं न शक्यते केवला च न प्रतीयत इत्यप्रतीतिरेव जातेः स्यादिति। तस्माज्जातिरेव शब्दा-प्रतीयते इति स्वीकार्यम्। तथाचोक्तं सारथिना—

रूपिशून्याच रूपेषु बुद्धिरस्त्येव तद्यथा।
हिमवर्तिनि हेमन्ते शैत्यसंवित् त्वगिन्द्रियात्॥ ३९॥
तथा गन्धवति द्रव्ये नासाग्रमधिरोहति।
न द्रव्ये जायते संविद्गन्धएव तु जायते॥ ४०॥
तस्मानात्थभिधायित्वाच्छब्दस्तामेव बोधयत्।
सा तुशब्देन विज्ञाता पश्चाद्व्यक्तिं प्रबोधये॥ ४१॥

भवतु वा जातिमात्राभिधानशक्तेनापि शब्देनापर्यवसाना देवावगम्यमाना व्यक्तिः पृथक् शब्दशक्तिं न प्रकल्पयतीति। वाक्यार्थ विषये तथा नास्ति पृथक् शब्दशक्तिं विना अन्वयप्रतीत्य संभवात्। जातिर्हिव्यक्तेरर्थान्तररूपा अतो युक्तं यत् तस्याय-भिधीयमानायामपि व्यक्तिरभिधांनानुप्रविशति। यतः व्यक्तिमतैव जाते रूपं नास्ति येनाभिधेयानुप्रवेशाद्व्यक्ते-रप्यभिधेयत्वंस्यात्। अन्वितस्य चान्वयवतैवरूपमिति तेस्मिन्ना-भिधीयमानेऽन्वयस्याभिधानानुप्रवेशः स्यादेव। अतस्तत्रापि शक्तिः कल्पनीया। अथान्वितशब्देन पदार्थानां स्वरूपमुपलक्ष्यते तच्चानभिधाय अन्वयभीभधातुं शक्यत इत्युच्यते तर्हि शब्देनान्वयप्रतीति न सिद्धा। नहि जातिबद्धव्यक्तिमन्वय-मन्तरेणपदार्थ स्वरूपमनिरूप्यं येन तदपर्यवसानाच्छब्देन प्रत्याय्येत।

ननु यथा जातिर्न क्वचिदपि व्यक्तिविकला वगता तथा पदार्था अपि नव्यतिषङ्गविकलाः क्वचिदप्युपलभ्यन्ते। अन्ततो अस्यार्थेनापि सर्वत्रसर्वपदार्थानामन्वितत्वम्। तस्याप्यपर्यवसानादेव सिद्धेनाभिधेयत्व मिति सत्यम्। अन्वयमात्रयपर्यवसानाद्गम्यते तद्विशेषस्तु नान्तरेणाभिधानशाब्दी प्रतीतिमारोपिता तस्मादन्विताभिधायित्वे शब्दस्य शक्तिकल्पनागौरवात् स्वरूपमात्रमिधेयम्। ननु तर्हि भाष्यकारेण प्रातिपदिकादुच्चरन्ती द्वितीयाविभक्ति प्रातिपदिकार्थे विशेषकइत्यादेति प्रत्ययस्यान्विताभिधायत्वमुच्यते। तत्रोच्यतेऽदिन्विताभिधानवान्यमते कथं सर्वशब्दानामविवताभिधायित्वेसति विशेषेण तत प्रत्ययस्य कथ्यते तेनग्रन्थानुगुण्याच्छब्दान्तराणां स्वरूपमानाभिधायित्वं प्रत्ययस्य स्वन्विताभिधायित्वमितिव्यवस्थापनीयम्।

यद्वा अनेनापि अन्विताभिधायित्वे प्रत्ययस्य नेवप्रतिपाद्यते किन्तर्हि प्रत्ययेन स्वार्थोऽभिधीयमानः प्रथमावगतप्रकृत्यर्थानुरक्त एवावगम्यते इति। तत्रान्वयव्यतिरेकाभ्यां प्रकृतेः प्रत्ययस्य च स्वेस्वेऽर्थेऽनुरागांशे च प्रकृतिप्रत्ययसमभिव्याहारस्यैव पदार्थान्तरानुराग निमित्तत्वं विविच्यते।

यथा ग्रहणस्मरण - स्वरूपे प्रत्यभिज्ञाने ग्रहणांशस्येन्द्रिय निमित्तत्वेस्मरणांशस्य च संस्कम् निमितत्वं, यथा च वस्त्वन्तराभावविशिष्टे वस्त्यन्तरे गृह्यमाणे विशेष्यस्य भावांशस्य प्रत्यक्षादि विषयत्वं विशेषणस्य चाभावांशस्य अभावविषयत्वं विविच्यते। तथैवात्राप्यनुरागांशस्य प्रकृति प्रत्ययसमभिव्याहारदेवप्रतीति

सिद्धेनं प्रत्ययस्य तदभिधायकत्वं स तु स्वार्थमेवाभिधत्ते तथा चोक्तम्— "प्रकृतिप्रत्ययो ब्रूतः प्रत्ययार्थं सहेति यत्।
भेदेनैवाभिधानेऽपि प्राधान्येन तदुच्यते ॥
पाकं हि पचिरेवाह कर्तारं प्रत्ययोऽप्यकः।
पाकयुक्तः पुनः कर्त्ता वाच्यो नैकस्य कस्यचिदिति ॥

मत्वर्थीयास्तु विशिष्टमेवाभिदधति, यतः तेषां वाच्यान्तरं न निरूप्यते। हिरण्यमालिनऋत्विज इत्यत्र विशेषणभूता हिरण्यमाला तावत् प्रकृत्यैवाभिहिता ऋत्विजोऽपि हि विशेष्याः स्वपदेनैवाभिहिताः मत्वर्थीपश्चविशिष्टादन्यत् किमभिदध्यात्। तस्मात् मत्वर्थीयः विशिष्टाभिधायकत्त्वेति। अन्येषां तु येषां युगपदनेकार्थाभिधायित्वंविभक्तेरिव लिङ्गसंख्याकारकाणो तेषामप्यन्विताभिधापित्वम् एतच्च सर्वमङ्गनिर्णये न्यायरत्नमालायां पार्थसारथिना निरूपितमिति।

इतरेषां तु शब्दानां स्वार्थरूपमेवाभिधेयमन्वितरूपस्तु वाक्यार्थः पदार्थगम्य इति। अतएव वाक्यार्थो लाक्षणिक इति मीमांसकाः। अभिहितार्थरूपशक्यार्थसम्बन्धेन गम्यमानत्वात्।

नन्वविनाभावमितित्ता लक्षणाभवति पदार्थश्च वाक्यार्थ-विशेषणा विनाभूता न सन्ति, अतो लक्षणा कथं स्यादिति चेत् ? उच्यते नावश्यमविनाभावनिमितैव लक्षणा एकवाक्यताऽपि लक्षणायां निमित्तं भवति। अतएवासत्यप्यविनाभावे व्रीहीनवहन्तीत्यत्र दर्शपूर्णमासैकवाक्यतया तत्साधनत्वलक्षणोपपद्यते। एकवाक्यता च क्वचित् प्रत्यक्षा यथा सोमेन यजेति। क्वचिद्

प्रकरणाद्यनुमेया यथा दर्शपूर्णमासाभ्यां यजेत्, समिधो यजतीत्यनमोः.. सर्मिऽपेता दर्शपूर्णमासभावनाकर्तव्येत्येवं रूपैकवाक्यता कल्पयते एवमन्यत्रापि द्रष्टव्यम् ।

तदेवं वाक्यं पदानि वा साक्षात्वाक्यार्थं न प्रतिपादयितुं समर्थाः किन्तु पदाभिहितैः पदार्थैः वाक्यार्थंसंलक्ष्यते इति भाट्टसंप्रदायः ।

तदुक्तं न्यायरत्नमालायां पार्थसारथिना—

तस्मान्न वाक्येन पदानि साक्षा—
द्वावाक्यार्थंबुद्धिं जनयन्ति किन्तु ।
पदस्वरूपाभिहितैः पदार्थैः
संलक्ष्यते ऽसाविति सिद्धमेतत् ।

———

# अन्विताभिधानवादः

तत्रकार्यरूपो वाक्यार्थं इति वैयाकरणाः, भाट्टमीमांसकाः प्राभाकराश्च स्वीकुर्वन्ति । तंत्र कार्यंक्रियेतिपर्यायः । धात्वर्था क्रियास एव वाक्यार्थे मुख्यविशेष्यतया भासत इति वैयाकरणाः मन्यन्ते । यथोक्तं भूषणसारे—

फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः ।
फलेप्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥ पृ० ११ ॥

भट्टमीमांसकास्तु धात्वर्थो न क्रिया, किन्तु करणकारकम्, कर्मकारकं वा भवति । धात्वर्थे क्वचित् क्रियाव्यवहारो लाक्षणिकामुख्याक्रिया तु भावना सा चाख्यातप्रत्ययार्थः न तु प्रकृतेरर्था सैव वाक्यार्थे मुख्यविशेष्यतया भासत इति सङ्गिरन्ते—

भावनैव हि वाक्यार्थंस्सर्वज्ञाख्यातवत्तया ।
अनेकगुणजात्यादिकारकार्थानुरञ्जितेति ॥ तं० वा० ४४५ ॥

प्राभाकरास्तु—कार्यंलिङ्गादेरर्थः, तच्च सामान्यरूपेण लिङ्गादिनाभिधीयते। विशेषतस्तु तत्तद्धात्वर्थो लोके। यथा पाकागममिति। अतो लोके एतन्मते क्रियैवकार्यंशब्देनाभिधीयते। वेदवाक्यविमर्शजं तु तत्तद्धात्वर्थातिरिक्तं कालान्तरावस्थायि भागादिक्रियातो भिन्नस्वर्गकामपदसमभिव्याहारान्यथानुपपत्तिगम्यमपूर्वमेव कार्थमिति तस्यैव वैदिकलिङ्गादिवाच्यत्वम्, वाक्यार्थेमुख्यविशेष्यतया भानञ्च इत्याक्षिप्यते। तन्मूलञ्च पदानामन्विताभिधापिता अतस्तायेवेदानीमन्यपक्षदूषणपुरःसरविशदीकुर्मः—अत्र ये वैयाकरणाः पदविभागशून्यमेव वाक्यं वाक्यार्थस्य वाचकमिति वदन्ति। ये च नैयायिकाः वाक्यान्त्यवर्ण एव वाक्यार्थस्य वाचकमिति वदन्ति तन्नसमीचीनम्। ये च भाट्टमीमांसकाः पदैरन्विताः पदार्थाः अभिहिताः परस्परान्वयमात्यवोवगमयन्ति इति वदन्ति तन्नसमीचीनमिति। तन्निरासप्रकारश्चप्राभाकरै स्थिमुपवर्ण्यते। तथा चोक्तं शालिकाचार्येण प्रकरणपञ्चिकायाम्—

पदैरेवान्वितस्वार्थमात्रेपक्षीणशक्तिभिः।
स्वार्था श्चेद्बोधिताबुद्धौ वाक्यार्थोऽपि तथा सति।

॥ २ ॥ प्र० प० पृ० ३७७ ॥

अयं भावः—यतः वाक्यार्थप्रतिपत्तौ पदानामनुपायत्वे तदन्यथानुपपत्त्या वाक्यमेकं तदुपायभूतं कथ्यते। यद्यपि व्युत्पतिविना शब्दमात्रादर्थो नावगम्यते। एवं आनन्त्याद्वाक्यानां, वाक्याकर्मणाञ्च, वैदिकस्य चार्थस्यानन्योपायत्वात् व्युत्पत्तिः न सम्भवति। तथापि काल्पनिक पद-पदार्थव्युत्पत्तिसंस्कृतात् वाक्याद्वाक्यार्थोवगम्यते इत्याश्रीयते। इति वैयाकरणाः। यदि

काल्पनिकत्वे पदपदार्थानां प्रमाणाभावादेकैक वर्णोच्चारणेऽर्थानवबोधात्, क्रमेणोच्चारितानाञ्च युगपच्छ्रवणासम्भवात्, पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितोऽन्त्योवर्णो प्रत्यापकः तस्य च पारमार्थिक पदपदार्थव्युत्पत्तिस्सहकारिणीतिपक्ष नैयायिकैः स्वीक्रियते।

यदि वा पदैस्सुकरव्युत्पत्तयो नन्विता एव स्वार्थाः अभिहिता वाक्यार्थमवबोधयन्तीव्यङ्गीक्रियते भाट्टमीमांसकैः। यदि तु पदान्येवान्वितस्वार्थानभिदधतीति शक्यते साधयितुं तदा वाक्यार्थस्यावबुद्धत्वात् पूर्वोक्ता कल्पना त्रयी न सम्भवति। सम्भवति च पदैरेवान्वितस्वार्थमात्रबोधकैः वाक्यार्थस्यावगमः। तथाचोक्तम्—

प्रधानगुणभावेन लब्धान्योन्यसमन्वयात्।
पदार्थानेव वाक्यार्थान् सङ्गिरन्ते विपश्चिताः॥ ३॥
—पृ० ३७७॥

इति न च तेषामनेकत्वात् अनेकेवाक्यार्थाः अनेकानि च पदानि स्युरिति अन्योक्तम् उत्तरम्—

संयोगादि-शक्तिज्ञाने संयोगादन्यतमत्वरूपसम्बन्धत्वेन मानस्वीकारे वातंनैन प्रकारेण तज्जन्योपस्थित्या तेनैव रूपेण शाब्दबोधे भानापत्तेः संयोगत्वादिना भानानुपपत्तेश्च नापि द्वितीयः—घटवद्भूतलं पचति चैत्र इत्यादौ सर्वत्र संयोगत्वानुकूलत्वादिधर्मेण सम्बन्धानां शाब्दबोधात् प्रागुपस्थित्यसम्भव तादवस्थ्यादिति चेद् ? न घटवद् गृहे गां नये इत्यादिवृद्धव्यवहारतः संयुक्तघटादावनुकूलकृत्यादौ च शक्तिग्रहीदनेन पश्चादपि तथैवोपस्थितिसम्भवाद् ?

नन्वेवमपि संयोगत्वादिभेदेन घटादिपदानामपि शक्त्यानन्त्य-प्रसङ्ग इति चेद् ? मैवं—बुद्धिस्थितावच्छेदकत्वोपलक्षणवत् संसर्गतावच्छेदकत्वोपलक्षणेन तेषामुगमात् । न चान्वयस्य पदवाच्यत्वे तदंशे शक्तिग्रहस्य शाब्दबोधो प्रयोगित्वे च मानाभाव इति वाच्यम् ? तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञान-जन्य-तदुपस्थितिहेतुता एव निश्चिततया कृति ज्ञाना-दन्वयानुपस्थितौ तस्य शाब्दबोधविषयत्वासम्भवाद् अन्वयांशे शक्तिग्रहस्य शाब्दबोधेऽवश्यापेक्षणीयत्वात्, संसर्गता-भिन्न-विषयतायास्तादृशोपस्थितिजन्यतावच्छेदकत्वे गौरवात् अयंभावः—शरेण संयुनक्ति परसमवेतो रक्तं इत्यादितः वृत्या संयोगादे-रनुपस्थितिकाले शाब्दबोधवारणाय संयोगादिविषयशाब्दबोधं प्रति वृत्तिज्ञानजन्यसंयोगादिविषयकोपस्थितित्वेनापि हेतुत्वं वाच्यमिति न च मीमांसकयुते सामान्यलक्षणाविरहेण वृत्तिज्ञान-जन्योपस्थितौ पूर्वानुभूताव्यक्तिरेव भासते शाब्दबोधे त्वपूर्व-व्यक्तिरेवातो नोक्तकार्यकारणभावकल्पनसम्भव इति वाच्यम् । सामान्यतो विषयतासम्बन्धेन तत्तत्पुरुषीयशाब्दबोधं प्रति विषयत्वस्वप्रकाराश्रयत्वान्यतरसम्बन्धेन तत्तपुरुषीयवृत्तिज्ञान-जन्योपस्थितित्वेन कार्यत्वं कारणत्वं च कल्पनीयम् । पूर्वोक्तोवते-श्चत्रैव तात्पर्याद्, गोत्वघटत्वादौ व्यभिचारत्वारकं प्रथमदलं, सम्बन्धे स्वीयप्रकाराश्रयस्वविवेशाद् पूर्वव्यक्तिसंग्रहः ।

न चेवमपि विषयतासम्बन्धेन कार्यकारणभावकल्पने पुरुष-भेदेन तस्यानन्त्यापत्तिरतां समवायप्रत्यासत्या तद्धर्मप्रकारक-शाब्दबोधं प्रति तद्धर्मप्रकारकोपस्थितित्वेन तत् कल्पनमुचित-मिति वाच्यम् । अत्रापि धर्मधर्मिभेदेन कार्यकारणभावभेदाद्

महागौरवापत्तेरिति गदाधररीत्यान्विताभिधानमतोपपादनम्। तद्रीत्यैव च इदानीं खण्डयते—

सामान्यतः तद्विषयशाब्दबोधे वृत्तिज्ञानजन्यतदुपस्थितित्वेन हेतुतायां पशुपदं लोनिशक्तं लाङ्गूलवतिचशक्तमिति धेनुपदं धानधर्मत्वे शाक्तं गवि च शक्तमित्यादि वृत्तिज्ञानाद् विशेष्य विशेषणभावानापन्नेत्वेमोपस्थितयोरपि पदार्थपदार्थतावच्छेदकयोः पदार्थतावच्छेदकप्रकारताकपदार्थनिष्ठविशेष्यता च शाब्दबोधापत्तिः स्यादतस्तेन प्रकारेण न हेतुता किन्तु तद्धर्मप्रकारेण तद्विषयकशाब्दबोधे वृत्तिज्ञानजन्य तच्च भविच्छिन्न तद्विषयकोपस्थितित्वेन हेतुता वाच्या।

एवञ्च तत् संसर्गकबोधस्य किञ्चिद्धर्मप्रकारेण तद्विषयकत्वाभावाद् वृत्तिज्ञानातदनुपस्थितावपि तत् संसर्गकशाब्दबोधः सम्भवत्येव। अतोऽन्वयांशे शक्तिकल्पनं निरर्थकं गौरवग्रस्तम्। संसर्गे संसर्गतावच्छेदके च प्रकाराख्यविषयत्वेन स्वीक्रियते अपि तु विशेषणातात्मकविषयतेति भावः।

ननु पार्थस्वेत्यादानेव शब्दात् खण्डश उपस्थितानामिति। सम्बन्धाभावादीनां कथं विशिष्ट बोध इति चेद्? न अगत्यातत्तव-त्ताद्दशबोधस्पष्टत्वाद्, स्वादिपदानां वा पार्थान्ययोजव्यवच्छेदार्थकत्वं वाच्यम्।

ननु दण्डमानयेत्यादित आक्षेपत्पादौ निरूपितत्वसम्बन्धेन दण्डप्रकारके बोधो जायते स च न सम्भवति तत्र दण्डादिप्रकारकोपस्थितिविरहाद्, न च ताद्दशकार्यकारणभावस्य विशिष्यवक्तव्यत्वेन तत्राफल्यनेनेन न तदनुपपत्तिरिति वाच्यम्?

यो दण्डी पुरुषस्तया नयेत्गादौ दण्डादेः पृथगुपस्थितिकाले तच्छिष्येन दण्डप्रकारेण पुरुषस्य शाब्दबोधवारणाय दण्डप्रकारक-शाब्दं प्रति दण्डप्रकारकोपस्थितित्वेन कारणत्वस्यावश्यकतया दण्डीपुरुष इत्यादितः शाब्दबोधानुपपत्ते दुर्वारत्वादिति ।

किञ्चोक्तदोषवारणाय विशेषरूपेण तादृशकार्यकारणभाव आवश्यकश्चेदस्तु तथापि सामान्यतो विषयतासम्बन्धेन शाब्द-बोधं प्रतिविषयतासम्बन्धेन वृत्तिज्ञानजन्योपस्थितित्वेन हेतुत्वस्यान्वयव्यतिरेकसिद्धस्य सत्त्वेन संसर्गज्ञानार्थं वृत्तिरावश्यकी, तत्र पृथगुपस्थितयोरपि तयोर्विशेषण-विशेष्यभावेन शाब्दबोधे भानन्त्वाकांक्षाज्ञाननियम्यं विशेष-कार्यकारणभावेनैव वा वारणीयमिति वा यदि कथ्यते, तन्नोच्यते—तथाहि—शक्त्या लक्षणया चोपस्थितस्य तत्तदर्थस्य शाब्दबोधे भानादुभयविधतदर्थोपस्थितेरेव तत्तद्विषयक शाब्दबोध हेतुता वाच्या, तादृशोपस्थित्योश्चानुगतानतिकसक्तकारणता-वच्छेदकस्य । मघोद्बुंचतया व्यभिचारवारणाय शक्यत्यादि लानजन्य तदुपस्थितेर्जन्यतावच्छेदककोटौ तत्तत् कारणाव्यव-हितोतरत्वनिवेश आवश्यका । एवं च वृत्त्यनुपस्थितस्यापि संसर्गस्य शाब्दबोधोपगमे व्यभिचारस्य प्रसक्त्यभावेन न किञ्चि-द्बाधकमिति तत्र वृत्तिकल्पनं निष्फलमेवेति बोध्यम् । नन्वत्र वृत्त्यनुपस्थितस्यापि पदार्थद्वयसंसर्गस्य शाब्दबोधविषयत्वोपगमे सम्बन्धमाने नियामकाभावेन सर्वत्राबाधित यावत् संसर्गभाना-पत्तिरिति चेद् ? न कयोश्चित् पदयोः केनचित् सम्बन्धेन स्वार्थान्वयबोधसाकांक्षतयाकांक्षाज्ञानस्यैव पदार्थसंसर्गभान-नियामकत्वाद् ययोः पदयोर्नानासम्बन्धेन स्वार्थान्वयबोध

आकांक्षावज्जन्यशाब्दबोधे संसर्गविशेषतात्वपर्यज्ञानरूपकारण-बलात्~~स्वै~~ सम्बन्धमान नियमोपपत्तेः, अन्वयांशे शक्त्युपगमेप्येकैकस्यैव पदार्थस्य संसर्गविधया क्वचित् कस्यचिद्भानं क्वचित् कस्यचिद् भानमेकैस्यैव संसर्गस्य भानमिति—अनियमेन सामान्य रूपेणैवान्वयस्य शक्यकोटावन्तर्भावणीयतयोक्तस्यैव संसर्गमान नियामकत्वात् ।

न च संसर्गविशेषानुपस्थितौ तात्पर्यज्ञानासम्भवेन तदुपस्थितेरावश्यकतया तद्गोचरसंस्कारोद्बोधार्थमेव तत्र वृत्तिज्ञानमपेक्षितमिति वाच्यम् ?

उद्बोधकान्तरोपस्थितेऽपि संसर्गे तात्पर्यग्रहसम्भवात्, तत्र वृत्तिग्रहस्यानपेक्षितत्वात् तस्माद् घटत्वगोत्वादिविशिष्टे घट ज...दिपदस्य शक्तिः, पदार्थद्वयं संसर्गस्त्वाकांक्षादिष्वलभ्य एवेति स्थितम् ।

घटादिपदस्य पदार्थताऽवच्छेदकीभूतघटत्वादिविशिष्ट एव शक्तिर्न तु तदुपलक्षिते घटत्वादेशपलक्षणत्वे तस्य द्रव्यत्वाद्यविशेषेण घटादिपदाद् द्रव्यत्वादिना न बोधः, अपि तु घटत्वादिनैवेति नियमानुपपत्ते ।

एवं चोक्तरीत्या संसर्गांशे शक्ति विनाऽपि शाब्दबोधे भान-सम्भवे तत्र शक्तिकल्पनं निरर्थकं गौरवग्रस्तश्च । अतः प्राभाकर-सम्मतः अन्विताभिधानवादः अनुपयुक्त एवेति शक्तिवाद गादाधर्यां विष्पष्टम् । विशेषतस्तु तत्रैव विमर्शनीयः स्यात् । इदानीं जगदीशतर्कालङ्काररीत्या अन्विताभिधानव्ययः खण्डयते । तथाहि शब्दशक्तिप्रकाशिकायां जगदीशतर्कालङ्कारेणान्विताभिधानवाद इत्थयाशंक्य खण्डितः तथा च शब्दशक्ति प्रकाशिकाया सन्दर्भः—

ननु व्यवहारानुमिते गवाद्यानयन धर्मिककार्य्यत्वस्यान्वयज्ञाने पदानां प्रथमतः कारणत्वं साकांक्षपदत्वावच्छेदेन गृहीतमुपस्थितत्वादतस्तदुपपत्तये शाब्दसामान्यप्रत्यवश्यकार्यतावाचिपदस्य तत् साकांक्षपदस्य वा हेतुत्वमुपगन्तव्यम्, तथा—च कथं केवलकोषादित शक्तिग्रहस्तस्य विध्यनाकांक्षत्वेनार्थवादतया शाब्दबोधानर्जकत्वादिति प्राभाकराशङ्का निरस्यति।

कार्यत्वस्यान्वयज्ञाने प्राग्गृहीतापि हेतुता।
पदानामर्थवादेभ्यः पश्चाद्बोधादुपेक्ष्यते॥ २१॥

अयमर्थः—साकांक्षपदत्वावच्छेदनकार्यताधीजनकत्वं पूर्वंगृहीतमप्युत्तरकालमर्थवादेभ्यः शाब्दबोधानुरोधाद्युपेक्ष्यते, पूर्वंगृहीतस्यापरिधर्मत्वानियमेत प्रतिबिम्बिते वस्तुनि व्यभिचारात्। नवोपस्थितधर्मावच्छेदेनैव जनकत्वस्य ग्रहनियमः। परजनकं देयद्रव्यमित्यादौ तत् सामानाधिकरण्ये नापि ग्रहात्। अन्यथान्यथाख्यात्यापत्तेस्तत्रैव दुर्वारतायतेः। न च कार्यता साकांक्षपदान्तर्भावेणैव शब्दानामन्वयानुभवहेतुत्वस्य क्लृप्तत्वादर्थवादस्थले न शाब्दधीः, परत्वसंसर्गग्रहमात्रजमाकांक्षान्तरकल्पने गौरवादिति वाच्यम्।

कार्यतानिराकांक्षपदान्तर्भावेणैव शाब्दबोधहेतुत्वस्य कल्पनया विधिस्थले न शाब्दधीरित्यस्यापि सुवचत्वात्। उभयवाप्यन्वयमतेरानुभविकत्वेनैकशेषस्य दुस्करत्वादितिदिक्। एवं च अन्विताभिधानवादो नैव युक्त इति नैयायिकानामाशयः।

———

